# 'साङ्ख्यतत्त्वकौमुद्याः सारबोधिनीटीकायाः समीक्षात्मकमध्ययनम्'

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
( मानितविश्वविद्यालयस्य ), नवदेहलीस्थस्य

'विद्यावारिधि' ( Ph.D ) इत्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः




शोधनिर्देशकः
डॉ. जवाहरलालः
सहायकाचार्यः
सर्वदर्शनविभागः

अनुसन्धात्री
सपना

सर्वदर्शनविभागः
दर्शनसङ्कायः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
नवदेहली-110016
सत्रम्-2016

# साङ्ख्यतत्त्वकौमुद्याः सारबोधिनीटीकायाः समीक्षात्मकमध्ययनम्

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## ( मानितविश्वविद्यालयस्य ), नवदेहलीस्थस्य

**"विद्यावारिधि" ( Ph.D. ) इत्युपाधय**
**प्रस्तुतोऽयं शोधप्रबन्धः**





| शोधनिर्देशकः | विभागाध्यक्षः | सङ्कायाध्यक्षः | अनुसन्धात्री |
|---|---|---|---|
| डॉ. जवाहरलालः | प्रो. हरेरामत्रिपाठी | प्रो. महेशप्रसादसिलोडी | सपना |
| सर्वदर्शनविभागः | सर्वदर्शनविभागः | दर्शनसङ्कायः | |


**सर्वदर्शनविभागः**
**दर्शनसङ्कायः**

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

**नवदेहली-16**

**सत्रम्-मई, 2016**

# मंगलाचरणम्

नमस्तस्मै गणेशाय नरकुञ्जररूपिणे।
यश्चागस्त्यायते नित्यं विघ्नसागरशोषणे।।1।।

यत्कृपालवमात्रेण मूको भवति पण्डितः।
वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे।।2।।

कपिलाय नमस्तस्मै येनाविद्योदधौ जगन्निमग्ने।
कारुण्यात्सांख्यमयी नौरिह विहिता प्रतरणाय।।3।।

अजामेकां लोहितशुक्लकृष्णां वह्नीः प्रजाः सुजमानां नमामः।
अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान्।।4।।

तमोहर्त्री माता जनयति सदा या नु सुमतिं
स्वहस्ते शुभ्रा या धरति ननु वीणां सुमधुराम्।
स्वयं हंसारूढा मधुरसयुता या प्रभवति
विधात्रीं स्वप्नैषा प्रणमति हृदा तां सविनयम्।।

तेजस्वी यः सततविनयी ज्ञानयुक्तः सदा यो
रम्यैर्हासैः सरसवचनः स्नेहशीलो हृदा च।
दिव्यैर्वाक्यैर्हरति तिमिरं तिग्मबुद्धया युतो यो
देवं श्रेष्ठं बहुगुणयुतं श्रद्धया तं नमामि।

सौम्यः स्वभावेन जवाहरो यो
यस्येह भाले तिलकं पवित्रम्।
विद्यापथो येन सदा प्रदिष्टः
स्वप्ना प्रणौमि विनयाऽऽनतं तम्।।

इति मंगलाचरणम्

डॉ. जवाहरलालः
सहायकाचार्यः, सर्वदर्शनविभागः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
कुतुबसंस्थानिकक्षेत्रम् - नवदेहली 110016



# प्रमाणपत्रम्

अतीव सन्तुष्टोऽस्म्येतत् प्रमाणयितुं यदहं डॉ. जवाहरलाल नाम्नो मम मार्गनिर्देशने सपना इति अनुसन्धात्री "सांख्यतत्त्वकौमुद्याः सारबोधिनीटीकायाः समीक्षात्मकमध्ययनम्" इति विषयमधिकृत्य विद्यावारिधि इत्युपाधये स्वशोधकार्यं विधाय शोधप्रबन्धञ्च सम्पादितवती। आभिः यत् कार्यं कृतं तत् सर्वथा नवीन तथ्यान्वेषणपरकं विद्यते। अतः अस्य शोधप्रबन्धस्य मूल्याङ्कनाय अग्रेसारयामि, तथा अस्याः समुज्ज्वलभविष्यस्य कामनां च करोमि।

दिनाङ्कः -

22.4.16
डॉ. जवाहरलालः



# प्रतिज्ञापत्रम्

प्रतिजाने यदहं सपना स्वप्रयासेन श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठसर्वदर्शनविभागाचार्य डॉ. जवाहरलाल-महोदयानामुत्कृष्टमार्गनिर्देशनेन 'सांख्यतत्त्वकौमुद्याः सारबोधिनीटीकायाः समीक्षात्मकमध्ययनम्' इति शीर्षकान्वितं शोधप्रबन्धं समाप्तं कृतवती। प्रतिजाने च यदिदं कार्यं सर्वमेव मत्सम्पादितं मामकीनमेवेति। अयं शोधप्रबन्धः इतः पूर्वं कस्याप्युपाधये न समर्पितः।

Sapna

दिनाङ्कः -29/4/16

सपना






क्रमाङ्कः 05334

# श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः), नई दिल्ली–११००१६

परीक्षार्थिनाम : सपना

अनुक्रमाङ्कः : VV-144

पितृ/पतिनाम : श्री राजवीर सिंह

नामाङ्कनसङ्ख्या : 35-VV/2012

विश्वविद्यालय अनुदान आयोग की पीएच.डी. अधिसूचना 2009 के अनुसार आयोजित

विद्यावारिधि सत्रीय पाठ्यक्रम

जनवरी–मई–2012

विषयः सर्वदर्शनम्

| परीक्षाविषयाः | पूर्णांकाः | प्राप्तांकाः |
|---|---|---|
| 1. प्रस्तुतीकरणम् | 20 | 18 |
| 2. नियतकार्यम् | | |
| I. मध्यसत्रीयम् (ग्रन्थसमीक्षा) | 20 | 18 |
| II. सत्रान्तम् (शोधसर्वेक्षणम्) | 20 | 18 |
| 3. संगणकीयप्रयोगात्मकपरीक्षा | 40 | 36 |
| 4. लिखितपरीक्षा | 100 | 72 |
| I. शोधप्रविधिः एवं पाण्डुलिपिविज्ञानम् | | |
| योगः | 200 | 162 |

परिणामः उत्तीर्णा

लेखकः [signature]

दिनांकः 20.11.2012

[signature]

सहायककुलसचिव(परीक्षा)

# कृतज्ञताज्ञापनम्

सर्वादौ जगन्नायकं परमेश्वरं प्रणम्य अहं पूज्यपितरं **'श्रीराजवीरसिंह '**, त्यागममतयोः मूर्तिस्वरूपां पूज्यमातरं **'श्रीमतीधर्मवतीं'** प्रणमामि। पदे-पदे च येषामाशीर्वादमहं प्राप्तवती। ममायं शोधप्रबन्धः मम मातृपितृचरणयोः समर्पितः स्यात्।

अस्य शोधप्रबन्धस्य सम्यक् सम्पादने अनेकेषां गुरुचरणानां सहयोगिनां, मित्राणां च आशिर्वचांसि सहयोगञ्चासीद् अतः तेषां सर्वेषां कृते हृदयेन सश्रद्धं प्रणामाञ्जलिं वितनोमि। तेषु सर्वप्रथमं अस्य शोधप्रबन्धस्य कृते अहं मम शोधनिर्देशकेन गुरुणा अहं सदा उपकृता अस्मि। ये वात्सल्य-स्वभाव-मैत्रीभाव-गुरुतापूर्णेन निर्देशेन च मां निर्देशान् दत्त्वा मम शोधकार्यं सम्पन्नं कारितम्। तत्तु अतुल्यमेव अस्ति। अहमेतादृशपरमपूज्यगुरुं मार्गनिर्देशकं डॉ. जवाहरलालमहोदयं सहृदयं सश्रद्धञ्च प्रणमामि।

अहं विभागाध्यक्षं येषां स्वभावः एव छात्र कल्याणकरः अस्ति। ये माम् स्व आध्यक्ष्ये विभागे शोधकार्याय अनुमतिं प्रदाय उपकृतवन्तः एतादृशं **प्रो.** हरेरामत्रिपाठीमहोदयं सर्वदर्शनविभागाध्यक्षं सहृदयं प्रणामं कृतज्ञतां च वितनोमि।

तैः अनुसन्धानकाले अहं सदैव उत्कर्षोन्मुखे प्रेरिता आसम्। ततश्चाहं विभागीयाः स्वनामधन्याः आचार्याः सन्ति डॉ. संगीताखन्ना, ताभ्यः मातृकल्पाभ्यः सविनयं सप्रणामं कृतज्ञतां निवेदयामि। अपि च आचार्याः सन्ति स्वनामधन्याः डॉ. प्रभाकरप्रसादमहोदयाः तेभ्यः गुरुचरणेभ्यः सप्रश्रयं प्रणामं आभारं च प्रदर्शयामि।

अहं दर्शनसङ्कायाध्यक्षं सदानुकरणीयं शास्त्रमर्मज्ञं प्रो. महेशप्रसादसिलोडीमहोदयं प्रति सहृदयेन सश्रद्धया च प्रणमामि धन्यवादञ्च ज्ञापयामि।

अहं विद्यापीठस्य कुलपतिवर्यैः प्रो. श्रीरमेशकुमारपाण्डेयमहोदयैः सहृदयेन धन्यवादं ज्ञापयामि। येषां मार्गदर्शनेन शोधनिर्देशनेन च मम शोधकार्यं समाप्तिं प्रति गच्छति।

अस्य शोधप्रबन्धस्य सम्पादने न्यायधुरीणां स्वनामधन्यानां गुरुचरणानाम् डॉ. बिष्णुपदमहापात्राणां न्यायवैशेषिकविभागीयाचार्याणां महतीकृपाप्रसादः आसीत्। तेभ्यः अपि सविनयं कृतज्ञतां समर्पयामि। एवञ्च डॉ. दयालसिंहमहोदयेभ्यः सादरं कृतज्ञतां निवेदयामि यैः न केवलं शोधपत्रटंकणसंशोधनेन अपितु अन्येनापि सहयोगेन अपि अहमतीव उपकृता, अतः तेभ्यः गुरुचरणेभ्यः हृदयेन वन्दनं निवेदयामि। स्नातकोत्तरकक्षायां अध्ययनकाले अहं येषां वात्सल्येन कृपया च महत्युपकृता ताभ्यः मातृकल्पाभ्यः आचार्याभ्यः डॉ. रमनरानीभ्यः, डॉ.

गौतमदेवीभ्यः, डॉ. मधुश्रीवास्तवेभ्यः अथ च एम.फिल (विशिष्टाचार्य) कक्षायां करुणया अध्यापितेभ्यः महामहोपाध्यायेभ्यः सुधाकरत्रिपाठिमहोदयेभ्यः कृतज्ञतां ज्ञापयामि।

अहं पुस्तकालयस्य सर्वेभ्यः सदस्येभ्यः आभारं कृतज्ञतां च व्यवहरामि। एषां महत्त्वपूर्णः सहयोगः मया प्राप्तः।

प्राशासनिकविभागे स्थितानां श्रीसुच्चासिंहः, श्रीधर्मेन्द्रकुमारः, श्रीराजकुमारः आदि महोदयानां प्रति अहं धन्यवादं व्याहरामि। येषां समये–समये सहयोगं मया प्राप्तम्।

मम पितरौ **श्रीमती धर्मवती(माता) श्री राजवीरसिंह,(पिता)**, अग्रजेभ्यः **श्रीसचिनकुमारेभ्यः**, अनुजं नीरजम् अनुजां पूजाम् च यथा योग्यं सविनयं निवेदयामि। येषां प्रेम्णा सौहार्देन आशीर्वादेन सततं–सहयोगप्रदानेन च अध्ययनकालादारभ्य मम शोधप्रबन्धकार्यं सम्पूर्णं जातम्। एतेषामहं सदा ऋणिरस्मि।

मम **धर्ममातारं हरप्यारीदेवीं** प्रति च प्रणामाञ्जलीं कृतज्ञतां समर्पयामि येषां अनुकम्पया अहं निर्विघ्नं मम शोधकार्यं सम्पादयति। मम पतिः **वीरनारायणेभ्यः**, पितृव्येभ्यः **ओमवीरसिंहेभ्यः**, ज्येष्ठपितृव्येभ्यः **जयनारायणेभ्यः** अन्येभ्यः

पारिवारिकजनेभ्यः ज्येष्ठेभ्यः कनिष्ठेभ्यः, यथा योग्यं कृतज्ञतां समर्पयामि। यैः यथाकालं मनसावचसाकर्मणा शोधकार्ये सहयोगः प्रदत्तः। अहं मम मित्राणां

डॉ. अनिलकुमारः, डॉ. दीपकद्विवेदी, डॉ. विजयनारायणः, डॉ. गौतमदेवी, डॉ. तनुजा, राजेशः, सीमावर्मा, शंकरदत्तः, मनीषा, पारूल, अनिता, प्रदीपः, विनयकान्तः, अन्येभ्यः सर्वेभ्यः विभागीय छात्रेभ्यः कार्तज्ञं निवेदयामि। मङ्गलमयजीवनस्य कामनां निवेदयामि, यैः कैश्चिदपि अस्य शोधप्रबन्धस्य सम्पादने प्रत्यक्ष-परोक्षरूपेण महत्त्वपूर्णं सहयोगमहं प्राप्ता। तेभ्यः सर्वेभ्यः सप्रश्रयं कृतज्ञतां निवेदयामि।

सपना

इति कृतज्ञताज्ञापनम्

# सङ्केताक्षरसूची

| | |
|---|---|
| अ.को. | अमरकोशः |
| अष्टा. | अष्टाध्यायी |
| ई.द.उ. | ईशादिदशोपनिषद् |
| ई.उ. | ईशावास्योपनिषद् |
| उप. | उपनिषद् |
| ऋ. | ऋग्वेद |
| कू.महा. | कूर्ममहापुराणम् |
| गी. | गीता |
| गौ.पा.द. | गौडपाददर्शनम् |
| छा.उ. | छान्दोग्योपनिषद् |
| जै.सू. | जैमिनीसूत्रम् |
| त.भा. | तर्कभाषा |
| त.सं. | तर्कसंग्रहः |
| त.चि. | तत्त्वचिन्तामणिः |

| | |
|---|---|
| त.रा.व. | तत्त्वार्थराजवार्तिकम् |
| त.सू. | तत्त्वार्थसूत्रम् |
| त.श्लो.वा | तत्त्वार्थश्लोकवार्तिकम् |
| त.र. | तन्त्ररहस्यम् |
| त.टी. | तात्पर्यटीका |
| त.सि.र. | तन्त्रसिद्धान्तरत्नावलि: |
| द्र.प्र. | द्रव्यप्रमाणसमुच्चय: |
| द.शा. | दर्शनशास्त्रयेतिहास: |
| न.वि. | नयविवेक: |
| नि.प्रा. | नियमसारप्राभृतम् |
| नै.च. | नैषधचरितम् |
| न्या.द. | न्यायदर्शनम् |
| न्या.सू. | न्यायसूत्रम् |
| न्या.भा. | न्यायभाष्यम् |
| न्या.म. | न्यायमञ्जरी |
| न्या.वा. | न्यायवार्तिकम् |
| न्या.कु. | न्यायकुसुमाञ्जलि: |

| | |
|---|---|
| न्या.सि.मु. | न्यायसिद्धान्तमुक्तावलिः |
| पा.यो. | पातञ्जलयोगदर्शनम् |
| पु.सां.द. | पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः |
| प्र.प. | प्रकरणपञ्चिका |
| प्र.पा. | प्रमेयपारिजातः |
| बृ.वा. | बृहदारण्यकवार्तिकसारः |
| बृ. | बृहती |
| बृह. | बृहदारण्यकोपनिषद् |
| ब्र.सू. | ब्रह्मसूत्रम् |
| बृह्म.वै.पु. | बह्मवैवर्तपुराणम् |
| भा.चि. | भाट्टचिंतामणिः |
| भा. | भामती |
| भा.त.मी. | भारतीयतत्त्वमीमांसा |
| भा.द. | भारतीयदर्शनम् |
| भा.द.परि. | भारतीयदर्शनस्य परिशीलनम् |
| भा.सा.नि. | भारतस्य सांस्कृतिकनिधिः |
| म. | मत्स्यपुराणम् |

| | |
|---|---|
| महा. | महाभारतम्ः |
| मु.उ. | मुण्डकोपनिषद् |
| मा.मे. | मानमेयोदयः |
| मी.द. | मीमांसादर्शनम् |
| मी.परि. | मीमांसापरिभाषा |
| मनु. | मुनस्मृतिः |
| यो.सू. | योगसूत्रम् |
| रघु. | रघुवंशम् |
| ल.सि.कौ | लघुसिद्धान्तकौमुदी |
| वा.पु. | वायुपुराणम् |
| वि.त्तो.टी. | विद्वत्तोषिणीटीका |
| वि.पु. | विष्णुपुराणम् |
| वे.परि. | वेदान्तपरिभाषा |
| वे.प्र. | वेदान्तप्रबोधः |
| वे.सा. | वेदन्तसारः |
| वै.सू. | वैशेषिकसूत्रम् |
| शा.वे.ज्ञा. | शांकरवेदान्ते ज्ञानमीमांसा |

| | |
|---|---|
| शा.भा. | शाबरभाष्यम् |
| शा.दी. | शास्त्रदीपिका |
| श्री.देवी.भा. | श्रीमद्देवीभागवतम् |
| श्लोक.वा. | श्लोकवार्तिकम् |
| श्वे.उप. | श्वेताश्वतरोपनिषद् |
| शां.भा. | शांकरभाष्यम् |
| षड्.द. | षड्दर्शनम् |
| षड्.समु. | षड्दर्शनसमुच्चयः |
| ष.द.सू.सं. | षड्दर्शनसूत्रसंग्रहः |
| सर्व.स. | सर्वदर्शनसंग्रहः |
| स.सि. | सर्वार्थसिद्धिः |
| सां.सु | सांख्यसुधा |
| सा.बो.टी. | सारबोधिनीटीका |
| सं.हि.को. | संस्कृतहिन्दीकोशः |
| सं.धा.को | संस्कृत-धातु-कोशः |
| सि.कौ. | सिद्धान्तकौमुदी |
| सां.का. | सांख्यकारिका |

| | |
|---|---|
| सा.का.गौ. | सांख्यकारिका गौडपादभाष्यसमन्विता |
| सां.का.मा.वृ,,ज.टी. | सांख्यकारिका माठरवृत्तिः, जयमंगलाटीका |
| सा.का.टी.आ. | सांख्यकारिकाटीकानामलोचनात्मकमध्ययनम् |
| सां.त.प्रभा.यु. | सांख्यकारिकातत्त्वप्रभा, युक्तिदीपिका |
| सां.त.कौ. | सांख्यतत्त्वकौमुदी |
| सां.त.म. | सांख्यतत्त्वमनोरमा |
| सां.द. | सांख्यदर्शनम् |
| सां.प्र.भा. | सांख्यप्रवचनभाष्यम् |
| सां.यो.को. | सांख्ययोगदर्शनकोशः |
| सां.यो.द. | सांख्ययोगदर्शनम् |
| स्क.पु. | स्कन्दपुराणम् |
| सां.शा. | सांख्यशास्त्रम् |
| सां.सं. | सांख्यसंग्रहः |
| सां.सू. | सांख्यसूत्रम् |
| स्या.वा.म. | स्याद्वादमञ्जरी |

## हिन्दी संकेताक्षरसूचि

| | |
|---|---|
| ऋग्वे.दा.त. | ऋग्वेद में दार्शनिक तत्त्व |
| क.स.सा. | कथासरितसागर |
| भा.द.प्र.सि. | भारतीयदर्शन के प्रमुख सिद्धान्त |
| भा.द.रू. | भारतीयदर्शन की रूपरेखा |
| भा.द.शा. | भारतीयदर्शनशास्त्र का इतिहास |
| सां.द.इति. | सांख्यदर्शन का इतिहास |
| सां.यो.जी. | सांख्ययोगदर्शन का जीर्णोद्धार |
| सं.सा.इ. | संस्कृत साहित्य का इतिहास |
| द.मू.धा. | दर्शन की मूलधारायें |

## विषयानुक्रमणिका

| विषयः | पृष्ठाङ्कः |
| --- | --- |
| प्रतिज्ञापत्रम | |
| प्रमाणपत्रम् | |
| कृतज्ञताज्ञापनम् | |
| सङ्केताक्षरसूची .................................... | 1-7 |
| विषयानुक्रमणिका .................................. | 1-4 |
| भूमिका .................................. | 1-47 |

- दर्शनशब्दस्य निर्वचनम्।
- भारतीयदर्शनस्य परिचयः।
- दर्शनशास्त्रस्य विकासक्रमः।
- आस्तिकनास्तिकविचारः।
- सांख्यशास्त्रस्य वैशिष्ट्यम्।
- सांख्यनिर्माणस्य उद्देश्यम्।
- साङ्ख्यशास्त्रस्य ऐतिह्यम्।
- दर्शनशास्त्रेषु वाचस्पतिमिश्रस्य योगदानम्।

- सारबोधिनीटीकाकर्तुः परिचयः।
- सारबोधिनीटीकायाः वैशिष्ट्यम्।

प्रथमोऽध्यायः ........................................ 48-135

- प्रमाणप्रकरणम्।
- वैदिकावैदिकदर्शनेषु प्रमाणतत्त्वोपस्थापनाम्।
- सांख्याभिमतप्रमाणतत्त्वनिरूपणम्।
- प्रमाणविषये वाचस्पतिमिश्रमतप्रदर्शनम्।
- प्रमाणविषये सारबोधिनीटीकाकारमतविवेचनं समीक्षणं च।

द्वितीयोऽध्यायः ........................................ 136-208

प्रमेयप्रकरणम्

- सांख्यशास्त्राभिमततत्त्वानां विवेचनम्।
- व्यक्ताव्यक्ततत्त्वविचारः।
- ज्ञतत्त्वविचारः।
- तत्त्वानां साधर्म्यवैधर्म्यप्रदर्शनम्।
- पुरुषस्य अस्तित्वे प्रमाणप्रदर्शनम्।
- पुरुषबहुत्वसिद्धिप्रदर्शनम्।
- तत्त्वप्रतिपादने वाचस्पतिमिश्रस्याभिमतम्।
- टीकाकर्तुः शिवनारायणशास्त्रिमतोपस्थापनं तत्समीक्षणं च।

तृतीयोऽध्यायः ...................................... 209-246

- वादप्रकरणम्।
- वैदिकदर्शने वादतत्त्वप्रदर्शनम्।
- सांख्याभिमतसत्कार्यवादस्थापनम्।
- आचार्यवाचस्पतिमिश्रमते सत्कार्यवादसिद्धौ युक्तिप्रदर्शनम्।
- सत्कार्यवादसिद्धौ सारबोधिनीटीकाकर्तुः मतप्रदर्शनं समीक्षणं च।

चतुर्थोऽध्यायः ...................................... 247-302

- सृष्टिप्रकरणम्।
- वैदिकदर्शनेषु सृष्टिप्रक्रिया।
- सांख्यभिमतसृष्टिविचारः।
- सृष्टिप्रकरणे वाचस्पतिमिश्रस्याभिमतम्।
- सारबोधिनीटीकाकारमतसमीक्षणम्।

पञ्चमोऽध्यायः ...................................... 303-327

- मोक्षप्रकरणम्।
- वैदिकदर्शने मोक्षस्वरूपम्।
- सांख्याभिमतमोक्षस्वरूपम्।

- वाचस्पतिमिश्रमतोपस्थापनम्।
- सारबोधिनीटीकाकारमतविश्लेषणं समीक्षणञ्च।

षष्ठोऽध्यायः .................................... 328-340

- उपसंहारः ...............................

सन्दर्भितग्रन्थानां सूची ........................... 341-354


इति विषयानुक्रमणिका

# भूमिका

दर्शनशब्दस्य निर्वचनम्

भारतीयदर्शनस्य परिचयः

दर्शनशास्त्रस्य विकासक्रमः

सांख्यशास्त्रस्य वैशिष्ट्यम्

सांख्यशास्त्रस्य ऐतिह्यम्

दर्शनशास्त्रेषु वाचस्पतिमिश्रस्य योगदानम्

टीकायाः वैशिष्ट्यम्



ॐ

# भूमिका

## दर्शनशब्दस्य निर्वचनम्

"दर्शनम्" इति शब्दोऽयं संस्कृतभाषाया: प्रेक्षणार्थकाद् दृश् धातो: (दृशिर् प्रेक्षणे) ल्युटप्रत्यये अनादेशे च कृते सति सिद्धो भवति। "दृश्यते ज्ञायते साक्षात्क्रियते अनेन इति दर्शनम्" उपनिषत्सु सत्यस्य परमार्थतत्त्वस्य साक्षात्करणाय दृश् धातो: प्रयोगो विद्यते। अर्थात् ज्ञानचक्षुषा यदात्मादि अलौकिकं वस्तु गृह्यते तद्दर्शनम्। अलौकिकमात्मादितत्त्वं (आत्मा, स्वर्ग:, मुक्ति:, प्रभृत्ति:) येन तद्दर्शनम्। "तत्त्वं पूषन्नपावृणु तत्त्वधर्माय दृष्टये"[1]

1. येन साधनेन इदं विश्वम्, इदं वस्तुजातम्, ब्रह्म, जीव: प्रकृतिश्च, याथातथ्येन दृश्यते निरीक्ष्यते परीक्ष्यते समीक्ष्यते विविच्यते च यत् तद् दर्शनम्।
2. समग्रमपि आध्यात्मिकमाधिभौतिकं च विवेचनं दर्शनशब्दान्तर्गतं भवति।
3. दर्शनमिति पदं आङ्गलभाषायां Philosophy इति उच्यते। इदं च पदं यूनानी (Greek) Philos, Sophia इति पदाभ्यां निष्पन्नम्। यस्यार्थ:-

---

[1] ईशा.नि. -18

Philos=Love, Sophia(प्रेमः अनुरागः)=Wisdom विद्या ज्ञानं वेति भवति। एवञ्च सारांशरूपेण वदामः चेत् "Love of Wisdom" "विद्यानुरागः" वेति दर्शनस्य अर्थः।[1]

4. केचन दार्शनिकाः वदन्ति यत्- Philosophy इति पदं लैटिन (Latin) भाषातः Philos sophiya इति पदद्वयं स्वीकृत्यागतमास्ति। यस्यार्थः Phil=Principle तत्त्वम्, Sophy=Science शास्त्रम् इति भवति। एवञ्च Philosophy इत्यस्य अर्थः वर्तते दर्शनं विज्ञानानां विज्ञानं तत्त्वविज्ञानं Principles of Science इति।

5. दृश्यते आत्मरूपं, ब्रह्मरूपं वा तत्त्वं येन तद्दर्शनम्। तच्चाऽऽत्म दर्शनब्रह्मदर्शनरूपतत्त्वदर्शनमध्यात्मदृष्ट्यैव भवितुमर्हति नातोऽन्यथा इति। यथोक्तम्-

"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च।
मैत्रोय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातम्।।"[2]

**भारतीयदर्शनस्य परिचयः**

भारतीयदर्शनमुपनिषद् मूलकत्वाद् आध्यात्मिकं भवति, अतः सर्वेष्वेव भारतीयदार्शनिकपरम्पराषु दर्शनशास्त्रस्य प्रतिपाद्यविषयः आत्मतत्त्वचिन्तनमेव वर्तते। भारतीयदर्शनस्य अनेकाः शाखाः विद्यन्ते। तेषां वैदिकावैदिकभेदेन

---

[1] दर्शन की मूल धारायें, पृ. - 2

[2] वृहदारण्यकोपनिषद्.

आस्तिकनास्तिकभेदेन वा भागद्वयं क्रियते। यानि वेदं प्रमाणत्वेनाभ्युपेयन्ते तानि वैदिकदर्शनानि वेदमूलकानि वा, यानि च वेदं प्रमाणत्वेन नाभ्युपगच्छन्ति तानि अवैदिकदर्शनानि उच्यन्ते। वैदिकदर्शनानि षट् सन्ति तानि-न्याय-वैशेषिक, सांख्य-योग, पूर्वमीमांसा, उत्तरमीमांसा चेति। अवैदिकदर्शनानि त्रीणि सन्ति- चार्वाक, जैन-बौद्ध दर्शनानीति। तेषु तत्रादौ-

न्यायदर्शनम्

नीयते=प्राप्यते, अयनम्=मोक्षो, येनासौ न्यायः। अथवा नीयते=अधिगम्यते विवक्षितार्थसिद्धिरनेनाऽसौ न्यायः। तस्य न्यायस्य यद् दर्शनमनुभवस्तदेव न्यायदर्शनम्=न्यायशास्त्रमित्यर्थः। न्यायशास्त्रस्य महत्त्वन्तु सर्वशास्त्रोपकारकत्वेन सर्वत्रैव प्रसिद्धमस्ति। तथा चोक्तम-

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता।।**
**सम्यक् दर्शनसम्पन्नः कर्मभिर्न निबध्यते।**
**दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।।**

न्यायशास्त्रं अतिप्राचीनम्, अस्य प्रवर्त्तकः सूत्रकारः महर्षिगौतमः 500 ई.पू. समयेऽजायत। श्रीगौतमस्य अपरं नाम अक्षपादोऽप्यस्ति। गौतमप्रवर्तितं न्यायशास्त्रं पदवाक्यप्रमाणशास्त्रेषु प्रमाणशास्त्रत्वेन प्रसिद्धमस्ति प्रमाणमूलकत्वात् पदार्थानाम्। तत्र पदार्थाः तावत्-प्रमाणंप्रमेयंसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्प-

वितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्नि:श्रेयसाधिगम इति। तेषु प्रमाणं प्रथमः पदार्थः अन्येषां पदार्थानां सिद्धिरपि प्रमाणैरेव भवति **"प्रमेयसिद्धिः प्रमाणाद्धिः"**[1] इति शास्त्रवचनम्।

**वैशेषिकदर्शनम्**

वैशेषिकदर्शनस्य जन्मदातृत्वेन कणादेन पित्रा लालितं पालितं पुत्रवच्च परिवर्धितं वैशेषिकं दर्शनमिदं सर्वेभ्यो दर्शनेभ्योऽतीव श्रेष्ठं सर्वथा प्रशस्तं प्राचीनतमञ्चेति गीयते। प्रणेता कणादः कश्यपवंशोत्पन्नतया काश्यपशब्देनोक्तः। विशेषपदार्थस्वीकारमूलकमेवास्य दर्शनस्य वैशेषिकमिति नामकरणम्। दश अध्यायैः 370 सूत्रैश्च निबद्धमिदं दर्शनम्।

1. प्रथमाऽध्याये समवेताशेषपदार्थकथनम्।
2. द्वितीये–द्रव्यम् विवेचितम्
3. तृतीये–आत्मान्तःकरणनिरूपणं वर्तते
4. चतुर्थे–शरीरभेदनिरूपणम्
5. पञ्चमे–कर्मनिरूपणम्
6. षष्ठे–श्रौतधर्मनिर्वचनम्
7. सप्तमे–गुणसमवायो निरूपितः
8. अष्टमे–ज्ञानोत्पत्तितन्निदाने प्रमाणप्रदर्शनम्

---

[1] न्यायसूत्रम्–1/1

9. नवमे–प्रागभावादिनिरूपणम्

10. दशमे–आत्मगुणनिरूपणञ्च

इदं दर्शनं सर्वशास्त्रोपकारकम्। अत्र दर्शने रावणेन भाष्यं प्रणीतम्, यन्नोपलभ्यते। तदनन्तरं भारद्वाजवृत्तिः, प्रशस्तपादभाष्यम्, शंकरमिश्रस्योपस्कारः। जयनारायणभट्टस्य कणादसूत्रवृत्तिः, चन्द्रकान्तभट्टस्य वैशेषिकभाष्यञ्च। आदिमं सूत्रं–"धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्य- विशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्।"

साङ्ख्यदर्शनम्

साङ्ख्यदर्शनस्याद्याचार्यः कपिलः, सिद्धान्तस्तु प्रकृतिः पुरुषश्चेति द्वे मूलतत्त्वे, अनयोरेव सम्बन्धाज्जगदुत्पद्यते। प्रकृतिर्जडा, पुरुषश्चेतनः, पुरुषसम्बन्धात्प्रकृतौ क्रिया जायते। सत्कार्यवादोऽत्र समर्थितसिद्धान्तः।

नास्ति साङ्ख्यसमं ज्ञानं, नास्ति योगसमं बलम्।
अत्र वः संशयो मा भूत्, ज्ञानं सांख्यं परं स्मृतम्।।
सङ्ख्यां प्रकुर्वते चैव, प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशति, तेन साङ्ख्यं प्रक्रीर्तितः।।

सम्यक्प्रकारेण क्रमपूर्वकं ख्यानं कथनं यस्याः सा "सङ्ख्या" क्रमपूर्वकविचारणा। पञ्चविंशतितत्त्वानां विचार एव साङ्ख्यम्, तमधिकृत्य कृतो ग्रन्थः " साङ्ख्यम्" इत्युच्यते। अर्थात् प्रकृतिपुरुषयोः पृथक्–पृथक् साङ्ख्यम् एव

साङ्ख्यम्। " साङ्ख्य" शब्दः सम् उपसर्गपूर्वकं "चक्षिञ्" ख्याञ् धातोः अणप्रत्ययेन निष्पन्नः। अस्यार्थः सम्यक् ख्यानम् इति निश्चीयते। सत्त्वादिगुणानां महदादिकरणानां प्रकृतिपुरुषयोश्च वर्णनं उपनिषत्सु अनेकेषु स्थलेषु समुपलभ्यते, पुराणेतिहासादिषु च भूयो भूयः प्रशंसितमस्ति साङ्ख्यदर्शनम्। अत्र मते पञ्चविंशतितत्त्वानि–

प्रकृतिः, महत्, अहङ्कारः, पञ्चतन्मात्राणि, पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, उभयात्मकं मनः, पञ्चमहाभूतानि, पुरुषश्च वर्त्तते।

योगदर्शनम्

अस्य दर्शनस्य प्रवर्त्तकः महर्षिपतञ्जलिः वर्तते। योगदर्शनं प्राचीनं दर्शनम्, नानासिद्धीनां जनकमित्यत्रापि च नास्ति विवादः। अयञ्च महर्षिप्रवरः श्रीपतञ्जलिः शेषावतारभूतः विद्वान् व्याकरणमहाभाष्यकारश्चासीत्। षड्दर्शनाचार्यः श्रीवाचस्पतिमिश्रोऽपि योगभाष्यस्योपरि "तत्त्ववैशारदी" इति नाम्नीं टीकां रचितवान्। एवं योगसूत्राणामुपरि चास्त्येका "राजमार्तण्ड" टीका श्रीभोजराजविरचिताऽतीव प्रशस्तेति गीयते। विज्ञानभिक्षुः 1600ईसवीये "योगवार्त्तिकं नामकं व्याख्याग्रन्थं लिखितवान्। तदनु च श्रीरामानन्दः 1700ईसवीये मणिप्रभानाम्नीं टीकामकरोत्। "प्रदीपम्" इति च भावागणेशो विरचितवांस्तदुपरि टीकाम्। तथैव महापण्डितः श्रीनागेशोऽपि 1700ईसवीये वर्षे योगसूत्रवृत्तिं लिखितवान्। तदनन्तरञ्च श्रीअनन्तदेवो

महामनीषि: 1800ईसवीये वर्षे योगसूत्राणामुपरि "चन्द्रिका" नाम्नीटीकां विहितवान्। इदं योगदर्शनं पादचतुष्टयात्मकम्। यथा-

1. प्रथमपादे-योगस्वरूपस्य विस्तृतं निरूपणम्।

2. द्वितीयपादे-क्रियायोग: तत्साधनानि यमादीनि च।

3.तृतीयपादे-अन्तरङ्गसाधनजातं ध्यानधारणासमाधिरूपं संयमपदव्यपदेश्यम्।

4. चतुर्थे च पादे-जन्मौषधिमन्त्रतप: समाधिजासिद्धिपञ्चकं, तत्सम्बद्धं कैवल्यरूपं परमप्रयोजनं च निरूपितम्। षड्विंशतिस्तत्त्वानि-साङ्ख्याभिमतानि पञ्चविंशतितत्त्वानि+ईश्वर:=षडविंशतितमं तत्त्वम्। चायमीश्वर:- "क्लेशकर्मविपाकाशयैरपरामृष्ट: पुरुषविशेष:।

मीमांसादर्शनम्

वेदस्य पूर्वभागे योऽस्ति विषयो विचारितस्तादृशविषयको विचार एव "पूर्वमीमांसा" शब्देनाऽभिधीयते। स च विचार: "कर्म" विषयको विचार:। यथोक्तम्-

"कुर्वन्नेवेह कर्माणि जिजीविशेच्छतं समा:।"[1]

"शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्।"[2]

---

[1] ईशोपनिषद् -2

[2] गीता. 4/21

पूर्वमीमांसादर्शनस्य जन्मदातृजैमिनिनये कर्मणा एवाऽभ्युदयनिःश्रेयसयोः समवाप्तिजनकत्वेन तस्यैव कर्मणः प्राधान्येन निरूपणीयत्वात् इति। मीमांसायाः चर्चा वेदस्य संहितायामुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। कुमारिलः श्लोकवार्त्तिके-"धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्" इति। वादरायणेन कर्मफलदातेश्वरो मन्यते। जैमिनिना-कर्मण एव फलदातृत्वं प्रदर्शितम्। अतएव मीमांसका निरीश्वरवादिनो उच्यन्ते। जैमिनिना 700ई.पूर्व. समये मीमांसासूत्राणि प्रणीतानि। कुमारिलात् परतोजातः मण्डनमिश्रो विधिविवेक-भावनाविवेकविभ्रमविवेकादीन् ग्रन्थान् प्रणीतवान्। विधिविवेकस्य टीका वाचस्पतिमिश्रेण न्यायकणिकानाम्ना कृता। प्रभाकरेण "बृहती" नामकेन भाष्यव्याख्याग्रन्थेन स्वसिद्धान्तः प्रचारितः। गङ्गेशोपाध्यायेन न्यायतत्त्वचिन्तामणौ मुरारिमतमुल्लिखितमतोऽयं द्वादशशतके ततः पूर्वं वा जातो मन्तुं शक्यते। "मुरारेस्तृतीयः पन्था" इत्युक्तिः मिथिलायां प्रसिद्धमस्ति, तेन ज्ञायतेऽयं मैथिलः आसीत्।

### वेदान्तदर्शनम्

वेदान्तो वेदस्य अन्तिमो भागः अवसानभागः इति विग्रहेण उपनिषद् उच्यते। उपनिषद एव प्राचीनैर्वेदान्तशब्देनोक्ता। वेदान्तसारे वेदान्तो नाम उपनिषद् प्रमाणमित्युक्तम्। उपनिषदः अनेकाः, तासु विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्य दूरीकरणाय व्यासेन ब्रह्मसूत्राणि रचितानि। एतानि सूत्राणि पाणिनितः प्राचीनानि। सर्वेऽपि वेदान्तसिद्धान्ताः निम्नलिखितविषयेषु मतैक्यं धारयन्ति-

1. अनादिरनुवर्त्तमानोऽयं संसारोपास्य एव।

2. ज्ञानापेक्षया कर्मणो गौणत्वम्।

3. ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि।

4. उपनिषद् गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी मतसाधनायावलम्बनभूता।

5. ब्रह्म व्यापकं नित्यञ्चेतनञ्च।

6. ब्रह्मैव जगज्जन्मस्थितिप्रलयकारणं नान्यदचेतनं प्रकृत्यादि।

तदेदं संक्षिप्य वर्णितो वेदान्तसमुदायः। भारतीयंदर्शनं वेदान्तपर्यवसायि, अतोऽत्र सर्वत्र दर्शनेषु क्रमविकास एव प्रतीयते। प्रथमं कणादस्यारम्भवादः तदनन्तरं गौतमस्य परमाणुवादः, तत्परोऽपि साङ्ख्यस्य परिणामवादः, सर्वान्ते वेदान्तस्य विवर्त्तवादः। सोऽयं विकासो वेदान्तपर्यवसायितां बोधयति दर्शनानाम्। अज्ञाननाशे सति सर्वं जगद् ब्रह्ममयं सदेवाऽनुभवगोचरीभूतं भवति। यथोक्तम्-

यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात्।
तद्वत्सत्यमविज्ञाय जगत् पश्यति मूढधीः।।
रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति।
अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते।।

चार्वाकदर्शनम्

चारु वाक् इति निर्वचनं चार्वाकदर्शनम् वृहस्पतिप्रणीतमिदं । चारुः (सुन्दरम्) वाको (वचनम्) यस्येति यौगिकव्युत्पत्त्या सुन्दरवचनप्रतिपादनपरं दर्शनमित्यर्थो लभ्यते

इति। लोकायतदर्शनमप्यस्यास्ति नामान्तरम्, इदञ्चास्त्यन्वर्थकं नाम, यतो लोकेषु सर्वत्र विस्तीर्णम् इति च तदर्थः। इदानीन्तनकालावच्छेदेन सर्वोऽपि लोकः चार्वाकमतं सिद्धान्तञ्चानुसरति। प्रमाणदृष्ट्या विचार्यमाणे प्रत्यक्षप्रमाणस्यैव प्रमाण्यं स्वीकरोति व्यवहारदर्शनेन तु सर्वेऽपि सन्ति प्रायः चार्वाका एव। येषां पदार्थानां प्रत्यक्षप्रमाणातिरिक्ताऽनुमानशब्दादिभिः प्रमाणैः सिद्धिः क्रियते। चार्वाकमते सन्ति ते पदार्थाः मिथ्याभूताः स्वास्तित्वविहीनाश्चेति। चार्वाकदर्शने पृथिवी–जल–तेजो–वायवश्चेति सन्ति चत्वारि द्रव्याणि प्रत्यक्षप्रमाणजन्यज्ञानविषयीभूतानि। प्रत्यक्षमेव प्रमाणम्, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं हि तत्। शरीरमेव जीवः, सृष्टिः स्वभावत एव जायते। न तत्रेश्वरापेक्षा। ईश्वरो नास्त्येव। पतञ्जलिसमये अस्मिन् दर्शने ग्रन्थाः प्राप्यन्ते स्म, सम्प्रति नोपलभ्यन्ते। सम्प्रति तु दर्शनग्रन्थेषु यत्र तत्र उद्धरणमात्रं पूर्वपक्षरूपेण दृश्यते। यथा–

यावज्जीवेत्सुखं जीवेद् ऋणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।
त्रयो वेदस्य कर्तारो भाण्ड़धूर्तनिशाचराः इति।

**बौद्धदर्शनम्**

बौद्धदर्शनं जैनदर्शनादुत्तरकाले प्रचलितमभवत्। बौद्धदर्शनस्य भागद्वयं–

1. धार्मिको भागः-धार्मिकभागेऽध्यात्मिकतत्त्ववर्णनमाचारनिरूपणञ्च प्रपञ्चितं विद्यते।

2. दार्शनिको भागः-दार्शनिकभागे तु तार्किकदृष्ट्या बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं वर्तते। बौद्धानां मते जीवो जगच्चेत्युभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। बौद्धदर्शनस्य प्रस्थानं चतुर्धाविभज्यते-

(क) वैभाषिकाः-"बाह्यार्थप्रत्यक्षमङ्गीकुर्वन्ति।

(ख) सौत्रान्तिकः-बाह्यार्थमनुमेयमाहु।

(ग) योगचाराः- विज्ञानवादिनः।

(घ) माध्यमिकाः- शून्यवादिनः।

(क) बौद्धदर्शने त्रीणि रत्नानि-"शीलं, समाधिः प्रज्ञा चेति।"

(ख) बौद्धदर्शने पञ्च बोधिवृक्षम्-"क्षमा-रूपिणी-जटा, धैर्यरूपि-दृढ़मूलम्, चरित्ररूपिपुष्पम्, बुद्धिरूपिणीशाखा, धर्मरूपि फलम्।

(ग) बौद्धदर्शने पञ्च अविद्याः-आलस्यम्, जन्म-मृत्युः, कामः, क्रोधः, विषादाश्च।

(घ)बौद्धदर्शने अष्टाङ्गमार्गाः-सम्यक्दृष्टिः-संकल्पः-वाणी-कर्म-आजीविका-उद्योगः-स्मृतिः- समाधिश्चेति वर्तते।

(ङ) बौद्धदर्शने पञ्चशीलत्वम्-(1) जीवहिंसा न करणीया, (2) चौरकार्यात् विरक्तिः, (3) व्यभिचारात् विरक्तिः, (4) असत्यभाषणात् विरक्तिः, (5) मद्यपानतः विरक्तिश्चेति।

**जैनदर्शनम् (आर्हतदर्शनम्)**

अर्हत इमे आर्हताः (जैनाः)। इमे चाऽऽर्हता जैनपदजन्यबोधविषयतावन्तः सन्तः "अर्हत्" पदसम्बोध्यं तं स्वीयं देवं समुपासते इति। तथा चोक्तम्- "अर्हन्नित्यथ जैनशासनरताः"[1]

बौद्धदर्शनात् पूर्वतनं महावीरेण रागादिरिपवो जिता इत्यसौ जिन् शब्देनोक्तस्तदीयताया दर्शनमिदं जैनदर्शननाम्नाप्यभिहितम्। तीर्थङ्करेष्वाद्यः ऋषभदेवनामाऽऽसीत्, महावीरश्चान्तिमः। दिगम्बर-श्वेताम्बराख्यसम्प्रदायद्वयस्येदमेव बीजम्। तत्र "हेमचन्द्रः" नामकः जैनदार्शनिकः आप्तनिश्चयाऽलङ्कारे आह-

"सर्वज्ञः जितरागादिः सर्वथा लोकपूजितः।
यथा स्थितार्थवादी च देवोऽर्हन् परमेश्वरः।।"[2]

केवलं "वेदानङ्गीकारात् इत्यनेन हेतुना, "नास्तिको वेदनिन्दकः" इति न्यायेन च "नास्तिकपदजन्यबोधविषयतावत्त्वेन नास्तिकता-"अर्हत"-निष्ठा सती, आर्हतमतनिष्ठा सती वा "नास्तिक" शब्देन व्यपदिश्यमाना अवश्यमेव खलु भवन्ति जैनचार्वाकबौद्धदार्शनिकाः। जैनदर्शने "मा हिंस्यात् सर्वा भूतानि" इत्यनया श्रुत्या पुष्टीकृतः "अहिंसा परमो धर्मः" अयमेवोपनिषत्सु वर्णितः सिद्धान्तः परमसिद्धान्तत्वेन मान्यत्वेन चाऽङ्गीकृतो वर्तते। अत एवाऽत्र दर्शने पिपीलिकाजीवमारणम्,

---

[1] सर्वदः सं. जैन प्रकरणे
[2] सर्वदः सं. जैन प्रकरणे

पिपीलिकाण्डमारणम् एवं तत्समवृश्चिकादि बधोऽपि तथाविध एवेति विचारयन्तु शास्त्रशास्त्रिण इति।

(क) जैनदर्शने नव तत्त्वानि–

जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्ज्जरा, मोक्षः, पुण्यम् पापश्चेति।

(ख) जैनदर्शने त्रीणि रत्नानि–

सम्यग् दर्शनम्, सम्यक् ज्ञानम्, सम्यक् चारित्रम्।

(ग) जैनदर्शने सदाचारस्य पञ्चनियमाः–

अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहश्चेति।

**दर्शनशास्त्रस्य विकासक्रमः**

दर्शनशास्त्रं हि आध्यात्मिकतत्त्वविवेचकैः मनीषिभिः अनुभूतस्य तथ्यस्यास्ति परिचायकं साहित्यम्। नूनं विनिर्मिता जगन्नाटकसूत्रधारस्य प्रेष्ठया प्रधानप्रकृत्या विश्वेऽस्मिन् भारतवर्षमेव आत्मक्रीडायाः वाटिका। अतोऽत्र भौतिकजीवननिर्वाहकाणि साधनानि चिरात् परिपूरितानि। अत एव भारतीयैः महर्षिभिः तपसा स्वाध्यायबलेन चाहमात्मतत्त्वानां विशिष्टं चिन्तनं विधाय न केवलं प्रकृतेः रहस्यमेवोद्घाटितम्, प्रत्युत स्वकीयजीवनमपि तदीयतत्त्वानुशीलनेन पूर्णतां नीतम्।

कोऽहम्? कुत आयातः? दृश्यमानमिदं विश्वं किमिति? एतेन को मे सम्बन्धः? किमस्ति? जीवनस्योद्देश्यं? तत्साधनस्य च के उपायाः? एवमादीनां महीयसां प्रश्नानामुत्तरं विविधसमस्यानाञ्च समाधायको यः सिद्धान्तो

भारतीयैर्विचारकैरभिव्यञ्जितः, तस्यैव विवेचनं भारतीयदर्शनस्य विभिन्नासु धारासु समुपलभ्यते।

पूर्वत एवास्मिन् देशे आत्मतत्त्वस्यानुसन्धानं प्रवर्तितम्। अस्यानुशीलनं चिन्तनशीलैः व्यक्तिभिरेव क्रियते। तपस्विनः साधन सम्पन्नाश्च योगिनः स्वयोगबलेन अन्तःकरणस्य बाह्येन्द्रियाणां समुत्कर्ष संसाध्य तत्त्वं ज्ञातुं प्रभवन्ति स्म। लौकिकप्रत्यक्षद्वारा सत्यस्य साक्षात्कारो न सम्भवतीत्यतो नैतिकजीवनस्य उत्कर्षसम्पादनाय समाधेरभ्यासः विभिन्नसाधनप्रणालीनामनुशीलनञ्च आवश्यकम्। यमनियमादिभिः अन्तकरणस्य शुद्धौ सत्यामेव चिद्दर्पणे आत्मनो बिम्बः प्रतिफलति। अतो योगसाधनेन अन्तकरणस्य शुद्धिः परमावश्यकीति समेषां योगविदां मतम्।

भारतीयदर्शनेन श्रवण-मनन-निदिध्यासनानि त्रीण्येतानि साधनानि साधारणतया आत्मदर्शनस्य हेतव उच्यन्ते-

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः।।"

न्यायकुसुमाञ्जलौ उदयनचार्येणापि श्रवणानन्तरमेव दार्शनिकालोचनायाः पदं स्थिरीकृतम्-

न्यायचर्येयमीशस्य मननव्यपदेशभाक्।

उपासनैव क्रियते श्रवणानन्तररागता।।[1]

यद्यपि अति प्राचीनकाले श्रृङ्ख्लाबद्धाः दार्शनिकविचाराः न प्रचलिताः, तथापि दार्शनिकचिन्तायाः प्रस्थानगतवैशिष्ट्यं पूर्वत एवासीत् प्रचलितमित्यनुमीयते, यच्च उपनिषदां पुराणानां महाभारतस्य बौद्धानां पालिसाहित्यस्य च पर्यालोचनेन अनुमीयते।

षण्णां दर्शनानां विकासस्य क्रमः प्रायः समान एव। सर्वप्राचीनास्ते दर्शनग्रन्थाः, ये किल सूत्ररूपेण निबद्धाः। कालान्तरे तेषां रहस्यं स्फोटयितुं तत्र भाष्याणि लिखितानि, तानि च सुबोधानि विधातुं तेषां वार्तिकादीनि सञ्जातानि।

1. तत्र न्यायसूत्राणां रचियता अक्षपादो महर्षिः गौतमः, भाष्यकारो वात्स्यायनः वार्तिककारश्चोद्द्योतकरः।

न्यायदर्शनविकासस्य द्वे धारे दृष्टिगोचरीभवतः। एका गौतमादारब्धा या षोडशपदार्थानां यथार्थनिरूपणेन पदार्थमीमांसात्मिका प्रणाली प्रोच्यते। द्वितीया प्रमाणमीमांसात्मिका प्रणाली, या द्वादशशताब्दिपरवर्तिनः गंगेशोपाध्यायस्य तत्त्वचिन्तामणितः प्रवर्तिता। प्रथमां धारां प्राचीनन्याय इति, द्वितीयां च नव्यन्याय इति वदन्ति तदीय तत्त्वविदो विपश्चितः।

2. वैशेषिकसूत्रकारोऽस्ति महर्षिःकणादः, भाष्यकारः प्रशस्तपादः, व्याख्याकारश्च शङ्करमिश्रः।

---

[1] न्या.कु.प्र.स्त.-3 का.

3. सांख्यसूत्रकारो महामुनिः कपिलः, भाष्यकारो विज्ञानभिक्षुः, वृत्तिकाराः अनिरूद्धादयः। साङ्ख्यसूत्रमिव कपिलस्य तत्त्वसमासनामक एकः ग्रन्थः विद्यते।

4. योगसूत्रकारो भगवान् पतञ्जलिः, भाष्यकारो महर्षिर्व्यासः, वार्तिककारश्च विज्ञानभिक्षुः। योगभाष्यस्य गभीरं रहस्यं प्रकटयितुं यथा वाचस्पतिमिश्रेण तत्त्ववैशारदी निर्मिता, तथैव श्रीहरिहरनन्दारण्येन भास्वती अपि रचिता। श्रीराघवानन्देन च तत्त्ववैशारदीं सरलयितुं पातञ्जलरहस्यं च प्रणीतम्।

5. मीमांसायाः सूत्रकारो महर्षिजैमिनिः, भाष्यकारः शबरस्वामिः, वार्तिककारश्च कुमारिलभट्टः। मीमांसादर्शने त्रीणि विशिष्टानि मतानि उपलभ्यन्ते-भाट्टमतम्, गुरुमतम्, मुरारिमतञ्च। एतेषां त्रयाणां मतानामुद्भावकाः सन्ति कुमारिलभट्टः, प्रभाकरमिश्रः, मुरारिमिश्रश्च। कुमारिलभट्टेन सम्पूर्णे शाबरभाष्ये तिस्रः पाण्डित्यपूर्णाः वृत्तयः लिखिताः, या मीमांसादर्शनस्य आधारस्तम्भाः कथ्यन्ते। (1) कारिकाबद्धं विपुलकायं श्लोकवार्तिकम् (प्रथमाध्यायीयप्रथमपादस्य व्याख्यानरूपम्) (2.) तन्त्रवार्तिकम् (प्रथमाध्यायी-द्वितीयपादतः तृतीयाध्यायपर्यन्तं गद्यमयं व्याख्यानम्। 3. टुप्टीका (चतुर्थाध्यायतो द्वादशाध्यायान्ता संक्षिप्ता टिप्पणी)। तत्र वार्तिकद्वयं वैदुष्यदृष्ट्या असाधारणम्। अत्र बौद्धसिद्धान्तानां विशेषतो दिङ्नागकृत-प्रमाणसमुच्चयस्य सम्यक् समीक्षणं विधाय मीमांसायाः मान्याः सिद्धान्ताः विवेचिताः सन्ति।

6. वेदान्तदर्शनस्य सूत्रकारो भगवान् व्यास:, भाष्यकारा: सन्ति श्रीशङ्कराचार्य:-रामानुजाचार्य:-मध्वाचार्य:-निम्बार्काचार्य:-बल्लभाचार्य:-भास्कराचार्य:-श्रीकण्ठाचार्य:-श्रीपति:-विज्ञानभिक्षु:-बलदेव:, वार्तिककारश्च पद्मपादाचार्य:। सुरेश्वराचार्येण श्रीशङ्कराचार्यस्य उपनिषद्भाष्ये वार्तिकानि लिखितानि। पद्मपादाचार्येण च शारीरकभाष्ये पञ्चपादिका-नाम्नी वृति: कृता, यत्र चतु:सूत्र्या एव विस्तृतं विद्यते।

एवं दर्शनशास्त्रस्य महत्त्वं वैशिष्ट्यञ्च प्रतिपादयितुं तत्तद्विद्वद्वर्यैः समये समये विविधा: व्याख्या: विहिता:, अनेकैश्च महत्वपूर्णा: दार्शनिकविचारोपोद्बलका: स्वतन्त्रा: निबन्धाश्च निर्मिता:, यै: षड्दर्शनानि अत्युत्कृष्टतां नीतानि लोके प्रसिद्धानि च जातानि।

**आस्तिकनास्तिकविचार:**

भारतीयदर्शनेषु मुख्यत: षड्दर्शनान्यास्तिकदर्शनत्वेन प्रसिद्धानि सन्ति। तानि च साङ्ख्य-योग-न्याय-वैशेषिक-पूर्वोत्तरमीमांसापदवाच्यानि वर्तन्ते। एवमेव चार्वाक-जैन-बौद्धदर्शनानि नास्तिकदर्शनत्वेन परिगण्यन्ते। प्रायशो विद्वद्भिरास्तिकनास्तिकत्वयोर्निर्धारणे मनुप्रोक्तं पद्यमिदं प्रमाणत्वेनोपस्थाप्यते-

"योऽवमन्येत द्वे मूले हेतुशास्त्राश्रयाद् द्विज:।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दक:।।"[1]

[1] मनु. 2/11

परं व्याकरणशास्त्रसमुन्नायकः पाणिनिमुनिस्तु "अस्ति नास्ति दिष्टं मतिः"[1] इति सूत्रं सूत्रयन् परलोकमतियुक्तायुक्तयोरेवास्तिकत्वं नास्तिकत्वञ्च प्रोवाच। सूत्रमिदं व्याख्यातृभिस्तत्परवर्तिवैय्याकरणैरेवं व्याख्यातम्-

(क.) अस्ति परलोके मतिर्यस्य स आस्तिकः।

(ख.) नास्ति परलोके मतिर्यस्य स नास्तिकः।

एवमेव लोकप्रसिद्धमाश्रित्येदमपि कल्पयितुमुचितम्-

(क.) अस्तीश्वरे विश्वासो यस्य स आस्तिकः।

(ख.) नास्तीश्वरे विश्वासो यस्य स नास्तिकः।

एवं रीत्याऽऽस्तिकनास्तिकत्वयोर्निधारणे मानदण्डत्रयं सुस्थितम्। (1) वेदप्रामाण्यम्, (2) परलोके विश्वासः, (3) ईश्वरे विश्वासश्च।

वैदिकपरम्परायां वेदानां सर्वोत्कृष्टं स्थानं स्वीक्रियते। वेदाः धर्ममूलत्वेन स्मृतिमूलत्वेन च सम्यक् प्रतिष्ठिताः। वेदविरुद्धं किमप्यत्र सोढुं न शक्यते।

**साङ्ख्यशास्त्रस्य वैशिष्ट्यम्**

सांसिद्धिकज्ञानवैराग्यैश्वर्यसम्पन्नो महामुनिः भगवान् कपिलः सांख्यदर्शनस्य आदिप्रवक्ता। तथा चोक्तं पञ्चशिखाचार्येण 'आदि विद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच' इति अत्र तन्त्रपदेन साङ्ख्यशास्त्रं लक्ष्यते।

---

1 पाणिनीयाष्टाध्यायी

साङ्ख्यप्रवचनेति शब्देनेदं ज्ञायते यदिदं शास्त्रमपि सांख्यविद्यायाः पोषकम्। योगजनितया प्रज्ञया साङ्ख्यीयानां पदार्थानां साङ्ख्यकारो भवति, योगसिद्धेन कपिलेनादौ साङ्ख्यविद्या प्रोक्ता।

अपि च साङ्ख्यदर्शनोक्ता भूततन्मात्रादयः पदार्थाः योगजप्रज्ञयैव साक्षात् क्रियन्ते। अतो नित्यमिलितौ साङ्ख्योगौ। महाभारते शान्तिपर्वणि साङ्ख्योगौ परस्परपूरकौ प्रोक्तौ। तत्र साङ्ख्ययोगं चाधिकृत्य एकत्वेन पृथक्त्वेन च यदुच्यते तस्यायमभिप्रायः-आत्मज्ञानस्य तत्त्वकाण्डं साङ्ख्यं साधनाकाण्डञ्च योगः (कृत्यकल्पतरोः)। देवलोऽपि पञ्चविंशतितत्त्वज्ञानं साख्यं विषयेभ्यः निवृत्त्याभिप्रेतेऽर्थे मनसोऽवस्थानं योगः इत्युक्तवान्। क्वचिच्च तत्त्वनिदिध्यासनपरायणाः साङ्ख्याः क्रियायोगपरायणाश्च योगा इत्यपि विवक्षा दृश्यते। रुचीनां वैचित्र्यादेवंभेदे सत्यपि न तयोः तत्त्वतः कश्चन भेदः। अत एवोक्तं भगवता श्रीकृष्णेन स्वयमेव गीतायाम्-

"साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।"

"एकं सांख्यं च योगं च यः पश्यति स पश्यति।"[1]

गीतोक्तसाङ्ख्यशब्देन सङ्ख्यया बुद्ध्यावधारिणीयतत्त्वस्य ज्ञानस्य योगशब्देन च कर्मयोगस्य सङ्केतोऽस्ति। अत्र कपिलस्य साङ्ख्यस्य पतञ्जलेः च योगस्य प्रकरणं नास्ति। अतो गीतायां सांङ्ख्ययोगशब्दाभ्यां ज्ञानकर्मयोगावेव गृह्येते। साङ्ख्ययोगयोरुभयोः स्वरूपभेदोऽवर्जनीयः, किन्तूभयसाध्ये फलांशेऽभेदादुक्तमस्ति यत्

---

[1] श्रीमद्भ. 5/5, 5/6

बालका एव साङ्ख्ययोगौ पृथक् पश्यन्ति न पण्डिताः। यतो हि एकस्यैव सम्यगनुष्ठाने उभयोरपि फलं प्राप्यते। यत्स्थानं (मोक्षाख्यं फलम्) ज्ञानं प्राप्यते तदेव निष्कामकर्मयोगेनापि अवाप्यते। यद्यपि यागदानादिकं कर्म फलासक्तया अहङ्कारबुद्ध्या चानुष्ठितं ज्ञानलभ्यं फलं दातुं न शक्नोति, तथापि निष्कामकर्मबुद्ध्या भगवदर्पणबुद्ध्या वा अनुष्ठीयमानं सत् तदेव फलं सुलभं भवति।

साङ्ख्यविद्या हि आध्यात्मिकाधिभौतिकाधिदैविक.त्रिविधदुःख.निवर्तनक्षमेति विभाव्य कपिलपतञ्जलिभ्यां महर्षिभ्यां साङ्ख्ययोगदर्शनयोः महान् प्रयासः विहितः। तत्र दुःखं तत्कारणं तन्निवृत्युपायादिविषयाः मुक्तितः सम्यक् पर्यालोचिताः सन्ति। न खलु कश्चिद् दुःखकारणानि अविज्ञाय तन्निराकरणे समर्थो भवितुमर्हतीति दुःखकारणतन्निवृत्तिहेतुकं कार्यकारणात्मकं विज्ञानमिह दर्शने आन्वीक्षिकीपद्धत्या एव विवेचितमस्ति। प्रमेयज्ञानं च प्रयोगपरीक्षणक्षमं बलं विना नार्थसाधकमिति हेतोः साधनबलमपि योगे विचारितम्। अत एव महाभारते 'नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम्' इत्युक्तम्।

यथा आयुर्वेदः व्यूहचतुष्टयेन रोगनाशं विधत्ते तथैव भवरोगहरं साङ्ख्यमपि चतुर्व्यूहे जीवानां भवरोगं शमयति। तद्यथा-संसारः, संसारहेतुः, मोक्षः, मोक्षोपायश्च इति। तत्र दुःखबहुलः संसारः हेयः, प्रधानपुरुषयोः संयोगो हेयहेतुः तत्संयोगस्यात्यन्तिकी निवृत्तिर्हानम्, हानोपायश्च सम्यग्दर्शनम्। तथैव तत्त्ववैशारद्यां वास्पतिमिश्रोऽपि दुःखं च हेयं प्रज्ञावताम्। न च तन्निदानं हानमन्तरेण तद्धेयं

भवितुमर्हति, तच्च परिज्ञानं निदानं शक्यं हातुम्। अत एव साङ्ख्यशास्त्रस्य सम्यग्दर्शनात्मकत्वेन प्रचलति खलु संसारे। एवञ्च इदं साङ्ख्यं मोक्षदर्शनमित्युक्तम्। आध्यात्मिकतत्त्वविवेचनावस प्रसङ्गे सम्यगदर्शनसाङ्ख्यमिति कृत्वा ऋषिसमाजे प्रवादः प्रचलितो विद्यते। अतः परमर्षिणा कपिलेनादौ आध्यात्मिकं तत्त्वज्ञानं साङ्ख्यं युक्तिभिः प्रवर्तितम्।

साङ्ख्ये सर्वदर्शनापेक्षया इदमेव वैशिष्ट्यमस्ति यदत्र स्थूलजगतः त्रिगुणात्मकव्यवहारस्य अध्यात्मप्रवृतेश्च बुद्धिपूर्वकं विवेचनं समन्वयश्च कृतोऽस्ति। अत एवेदं दर्शनं सर्वतोभावेन लोकोपकारकं सर्वप्रियञ्चेति प्रसिद्धमस्ति।

साङ्ख्यनिर्माणस्य उद्देश्यम्

भारतीयसंस्कृतौ साङ्ख्यदर्शनस्यात्युन्नतं स्थानमासीत्। देशस्योदात्तविचारवन्तो विद्वांसो दर्शनपद्धत्या विचारयन्ति स्म। महाभारते शान्तिपर्वाणि भगवता व्यासेन कथितमस्ति यत् लोके यत् किञ्चिद् ज्ञानं दृश्यते तत्सर्वं साङ्ख्यसम्बद्धमेवास्ति-

ज्ञानं च लोके यदिहास्ति किञ्चित् साङ्ख्यगतं तच्च महामहात्मन्।[1]

वस्तुतः महाभारते दार्शनिकविचारस्य या पृष्ठभूमिरुपलभ्यते, तत्र सांख्यदर्शनस्य महत्त्वपूर्णं स्थानमस्ति। तत्र पञ्चशिखधर्मध्वज-जनकसंवादे, सुलभा-जनकसंवादे, वसिष्ठकराल-जनसंवादे, याज्ञवल्क्यदैवरातिजनकसंवादे च साङ्ख्यदर्शनस्य विचाराणां

---

1 महाभारत - 12/301/119

काव्यमरोचकपद्धत्या उल्लेखः कृतोस्ति। साङ्ख्यदर्शनस्य प्रभावो गीतायां प्रतिपादितदार्शनिकपृष्टभूमौ पर्याप्तरूपेण वर्तते।

वस्तुतः साङ्ख्यदर्शनं प्रागत्यन्तं लोकप्रियमासीत्। भारतीयजीवने दर्शनस्यातिशयमुपयोगिता पूर्वत एवास्ति। भारतीयसंस्कृतेः इतिहासे भारतीयदर्शनेतिहासस्य विकसितं रूपमस्ति। प्राक्कालत एव विचाराणां नूतनाः प्रवाहाः चिन्तनशीलानां भारतीयानां बुद्धिषु निरन्तरमाविर्भवन्ति स्म। विचाराणां रसमयो निर्झर एव दर्शनमासीत्। तत्सहस्रवर्षपर्यन्तं भारतस्यानेकेषु भागेषु प्रसरणशीलमासीत्।

कर्मसु दार्शनिकपृष्ठभूमिर्भवति। कस्मिंश्चित् समये वेदानां प्रणववादो भारतीयजीवनस्य मूलप्रेरकसिद्धान्त आसीत्। कालान्तरे उपनिषदो ब्रह्मवादो भारतीयविचाराणां केन्द्रं जातम्, येन भारतीय दर्शनमध्यात्मवादेन सह सम्बद्धम्। अतिशयं प्रवर्द्धमानस्याध्यात्मवादस्य प्रतिक्रियास्वरूपं कियतामनुशीलनपरायणानां मनःसु आध्यात्म्यपेक्षया स्थूले लक्ष्ये प्रत्यक्षे चानुभवे लोकायतिकानां प्रत्यक्षवादोऽस्यैवान्दोलनस्य सूचकोऽस्ति।

एवमेषां नवविचाराणामाविर्भावसमये एव साङ्ख्यदर्शनेनातिसरलतया प्रवृतौ संभाव्यमानायाः सृष्टेः व्याख्या प्रस्तुता। प्रवृतौ जीवने च दृश्यमानस्य वैषम्यस्य त्रिगुणात्मकसिद्धान्तेन बुद्धिगम्यमतिसुन्दरं समाधानमुपस्थापितम्।

प्रायो गणनार्थकसङ्ख्याशब्देन साङ्ख्यशब्दस्य व्युत्पत्तिः क्रियते। केचन बुद्धिपूर्वविचारात् चक्षिङ्ख्यादेशं कृत्वा साङ्ख्यशब्दस्य व्युत्पत्तिं मन्यन्ते। महाभारते ज्ञानवाचिनः सङ्ख्याशब्दस्य संकेतमुपलभ्यते–

**"संख्या प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।**

**तत्त्वानि च चतुर्विंशत्तेन संख्याः प्रक्रीर्तिताः।।"[1]**

अपि च

**"पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः।।"[2]**

अर्थात् ये प्रकृतिं विवेचयन्ति चतुर्विंशतितत्त्वानि गणयन्ति सङ्ख्यया ज्ञानस्य च उपदेशं ददति ते साङ्ख्यशास्त्रप्रर्वत्तकाः कथ्यन्ते। साङ्ख्यसम्बन्धिनः इतिहासस्य विवेचनं प्राचीनभारतीयदार्शनिकविचाराणां साङ्गोपाङ्गेन इतिहासेन सह सम्बद्धमस्ति। बहुभिर्विद्वद्भिर्विवेचनात्मकप्रणाल्या साङ्ख्यदर्शनेतिहासविकासस्य प्रधानसमस्यासु प्रकाश उपस्थापितः। यत्र तिथिक्रमस्याभावोऽस्ति तत्र विचाराणां पौर्वापर्यस्याधार एव ऐतिहासिकानामेकमात्रं साधनमस्ति। साङ्ख्यशास्त्रस्य महत्वमाचार्यपरम्पराषु भगवान् कपिलोऽस्य शास्त्रस्य मूलप्रवर्तकरूपेण सर्वेभ्य उन्नतं स्थानं बिभर्ति। अनया दृष्ट्या विचारे क्रियमाणे भारतीयदर्शनेषु साङ्ख्यदर्शनस्य महत्त्वमद्वितीयमस्ति। इत्यत्र नास्ति

---

[1] महा. 12/306/42

[2] महा. 12/306/14

काचन संशीतिः। न केवलं प्राचीनतया, नापि भारतीयवाङ्मयेऽनुस्यूतप्रभावेण, किन्तु गूढ़ाध्यात्मिकदृष्ट्या एवास्य विशिष्टं महत्त्वं दरीदृश्यते।

साङ्ख्यशब्दस्य वैदिकसंहितास्वनुपलम्भेऽपि साङ्ख्यस्य विचारधारायाः मूलम् ऋग्वेदे "द्वा सपुर्णा सयुजा सखाया"[1] इति मन्त्रे स्पष्टं दृश्यते। साङ्ख्यप्रवर्तकस्य भगवतः कपिलस्य श्वेताश्वरोपनिषदि "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्विभर्ति"[2] इति वर्णनं स्पष्टरूपेण साङ्ख्यदर्शनस्य प्राचीनतां साधयति। एतदतिरिक्तमुपनिषदैः सह पुराणेतिहासयोः धर्मशास्त्रे आयुर्वेदादिसाहित्येषु साङ्ख्यस्य यावान् प्रचुरः प्रभावो विलोक्यते, न तावन् अन्यस्य कस्यापि दर्शनस्य।

वर्तमाने काले उपलब्धं साङ्ख्यदर्शनस्य साहित्यं यद्यपि विस्तृतं नास्ति तथापीदं निर्विवादमस्ति यद् प्राचीने काले अस्य बृहत्साहित्यमासीत्। अद्यत्वे साहित्यमुपलभ्यते तत्रापि गंभीरदर्शनवशात् अनुशीलनपरा विरला एव विद्वासो दृश्यन्ते।।

इह खलु जगतीतले केचन रोगग्रस्ताः, कतिपये दारिद्रयार्दिताः, केचित्पुत्रचिन्तातुराः, केचिद्दारापरिग्रहणपरायणाः कियन्तो राजदुःखदुःखिताः, अपरे प्रजापालनपीडिताः, इतरे मानवहानिहेयजन्मानः, अन्ये राज्यदण्डव्यथितहृदयाः, केचन काणाः, केऽपि पंगवः, अपरे मूकाः, परे वावदूकाः इतरे गृहाभावखिन्नचेतसः, कियन्तो रिपुकृत्रामापन्निमग्नाः। एवमनुदिनं विविधां दुःखसन्तति भुञ्जाना विलोक्यन्ते प्राणिनः।

---

[1] ऋग्वेदे - 1/164/20

[2] श्वेताश्व. - 5/2

न चैवं निश्चयो विश्वासो वा भवति यदग्रे कियत्कालानन्तरमापद्भ्य: एताभ्यो विमुक्ता भविष्यन्ति मानवा:। यद्वशै: प्राक्तनकर्मभि: तदानीं दु:खोपलब्धि: तथा तादृशेरेवाधुनिकै: कर्मभि: भाविन्यपि जन्मनि अवश्यं दु:खावाप्तिरिति समुचितमनुमानमुचिता विचारणा, अतथ्या चेयं सम्भावना। अत एवोक्तं भारद्वाजसंहितायाम्-

"कुर्वते कर्मभोगाय कर्म क्रतु च भुञ्जते।
नधा: कीटा इवावर्तादावर्तान्तरमाशु ते।।
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्।
यथा तृणजलौकेयं देही कर्मगतिं गत:।।"

न चात्र पुण्यकर्मभि: निरन्तरं सुखावाप्तिरिति कल्पयितुं शक्यम्। आसंसारं त्रिविधदु:खाभिघातस्यावश्यं भावित्वात् पुण्यकर्मभि: सुखोपलब्धावपि तत्फलभोगान्तरं दु:खप्राप्तेरनिवार्यत्वाच्च। न च कस्मैचिदपि दु:खमिष्टम् आपत्सु सहाविपच्चापरिहरणीया भवति। एवंस्थितौ अस्माकं पूर्वजै: भारतीयैर्महर्षिभि: साधुपरीक्षितं सम्यक्प्रतिपादितं सुनिश्चितं सुसिद्धान्तितं चात्मज्ञानमेवात्यान्तिकदु:खोपघाताय समर्थं भवति। अत एवोक्तमीश्वरकृष्णेन साङ्ख्यकारिकायाम्--

"दु:खत्रयाभिघाताज्जिासा तदपिघातके हेतौ।

न चैवं निश्चयो विश्वासो वा भवति यदग्रे कियत्कालानन्तरमापद्भ्यः एताभ्यो विमुक्ता भविष्यन्ति मानवाः। यद्वशैः प्राक्तनकर्मभिः तदानीं दुःखोपलब्धिः तथा तादृशेरेवाधुनिकैः कर्मभिः भाविन्यपि जन्मनि अवश्यं दुःखावाप्तिरिति समुचितमनुमानमुचिता विचारणा, अतथ्या चेयं सम्भावना। अत एवोक्तं भारद्वाजसंहितायाम्–

"कुर्वते कर्मभोगाय कर्म क्रतु च भुञ्जते।

नधाः कीटा इवावर्तादावर्तान्तरमाशु ते।।

व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्।

यथा तृणजलौकेयं देही कर्मगतिं गतः।।"

न चात्र पुण्यकर्मभिः निरन्तरं सुखावाप्तिरिति कल्पयितुं शक्यम्। आसंसारं त्रिविधदुःखाभिघातस्यावश्यं भावित्वात् पुण्यकर्मभिः सुखोपलब्धावपि तत्फलभोगान्तरं दुःखप्राप्तेरनिवार्यत्वाच्च। न च कस्मैचिदपि दुःखमिष्टम् आपत्सु सहाविपच्चापरिहरणीया भवति। एवंस्थितौ अस्माकं पूर्वजैः भारतीयैर्महर्षिभिः साधुपरीक्षितं सम्यक्प्रतिपादितं सुनिश्चितं सुसिद्धान्तितं चात्मज्ञानमेवात्यान्तिकदुःखोपघाताय समर्थं भवति। अत एवोक्तमीश्वरकृष्णेन साङ्ख्यकारिकायाम्--

"दुःखत्रयाभिघाताज्जिासा तदपिघातके हेतौ।

दृष्टे साऽपार्था चैन्नैकान्तात्यन्ततोऽभावात्।।"[1]

न चात्मज्ञानं विना आत्यन्तिकी दुःखनिवृत्तिः सुखावाप्तिश्च सम्भवति। अत एव भगवती श्रुतिः स्पष्टमुदघोषयति–"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, ऋते ज्ञानान्न मुक्तिः" सर्वमिदं मानवयोनावेव सम्भवति, यतस्तदितरयोनीनां भोगयोनित्वमेवास्ति। अतस्तत्र नास्ति कर्मणामधिकारव्यवस्था विधातुः सृष्टेः वैचित्र्यात् मानव एव केवलमीदृशोऽस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अत एव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मनुष्यनिर्माणादेव सन्तोषेऽजायत। यथोक्तं श्रीमद्भगवते–

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या

नानासरीसृपपशून् खगदंशमत्स्यान्।

तैस्तैस्तुष्टहृदयः पुरुषविधाय

ब्रह्मावलोकधिषणं मुदमाप देवः।।[2]

अत एव सम्प्राप्य मानवशरीरमवश्यं विज्ञेयमात्मतत्त्वम्। अयमेव परमपुरुषार्थः, उत्कृष्टा सिद्धिः, श्रेष्ठा च सम्पदस्ति। अनेनैव मानवजन्मनः साफल्यम्, एतेनैव कृतार्थोऽयं जनः, मनुनैव वसुन्धरा वस्तुतो वसुन्धरा। अत एवोपनिषदि "इह चेदवेदीदथ सत्यमस्ति चेदवेदीन्महती विनष्टिः" इत्युक्तम्।

---

[1] सा.का । का.

[2] श्रीमद्भ. 11/91/28

भगवती गीताऽपि वक्ति–

"ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः"।[1]

अतः आत्मज्ञानसम्पादनं प्रत्येकस्य मानवस्य प्रधानमस्ति कर्त्तव्यम्। विश्वं दुःखमूलं मन्यमानैर्भारतीयमहर्षिभिः आध्यात्मिकं ज्ञानमेव सुखं सुखमूलं वेति निश्चितम्।

विषयेष्वासक्तचेतसां जीवात्मा असंयतत्त्वाद् बन्धाय कल्पते, किन्तु योगसमाधिना विवेकैश्च विमलीकृतात्मा स एव पुरुषपुङ्गवः सर्वोपद्रवशून्यं सकलशास्त्रैकगम्यं निर्मलं कैवल्यं लभते–

"असंयतः कुबुद्धीनामात्मा बन्धाय कल्पते।

श्रीमद्भिः संयतः सोऽपि पदं दद्यादनामयम्।।"[2]

महाभारतस्याश्वमेधिपर्वणि प्रोक्तं यद् यः चतुर्विंशतितत्त्वानामुत्पत्तिविनाशौ सम्यक् जानाति सर्वप्राणिनां धीरः स मोहं नाधिगच्छति, यश्च सर्वाणि तत्त्वानि समस्तान् गुणान् अखिला देवताश्च यथार्थतो जानाति तस्य पापानि विधूयन्ते, सर्वबन्धनविमुक्तः सः सकलान् लोकान् लब्ध्वा दिव्यानि सुखानि अनुभवति।[3] आत्मपरायणस्य तत्त्वज्ञस्य मुक्तौ नास्ति कश्चित् सन्देहः।[4] यश्च सर्वभूतेषु प्रधानां

---

1 श्रीमद्भ.गी.15/4

2 स्कन्द पु. 4/41/38

3 महा. अश्वमेधि पर्व 35/50

4 महा. अश्वमेधि पर्व 46/46

प्रकृतिं तस्याः गुणान् तत्त्वानि च सक्यग् ज्ञात्वा ममताहंकाररहितो भवति सोऽवश्यं मुच्यते। निश्चितदर्शिनो वृद्धा ज्ञानमेव परमं कल्याणसाधनमामनन्ति। अतो मनुष्यः शुद्धज्ञानद्वारैव सर्वेभ्यः पापेभ्यो विमुक्तो भवति, नान्यथा। यथा पद्मनीपत्रसंस्थितो जलबिन्दुर्न संसक्तो भवति, तथैव विद्वान् सर्वैः गुणैः संसक्तोऽपि न काचन लिप्यते। यथा दीपकमादाय मानवोऽन्धे तमसि निर्भयं गच्छति, तथैव साधको ज्ञानदीपप्रकाशेन सन्मार्गे गच्छति। यथा नावमन्तरा भयंकरं समुद्रं तर्तुं न शक्नोति मानवः, तथैव ज्ञाननौकां विना भवसागरपारं गन्तुं न पारयति कश्चन् साधकः।

दुःखानामात्यन्तिकनिवृत्तिः न लौकिकैर्नापि वैदिकैरुपायैः सम्भवति, किन्तु ज्ञानद्वारा दुःखानां मूलकारणस्याज्ञानस्य नाशः सम्भवति। अज्ञानान्धकार इव सर्वेषां तथ्यानामावरकमस्ति, तथा ज्ञानमालोक एव सर्वतत्त्वप्रकाशकम्। यथाकाशे चन्द्रोदयेन अन्धकरो दूरीभवति तथैव ज्ञानोदयेन मानसपटलमाश्रित्य स्थितमज्ञानं नश्यति। ज्ञानं मुक्तिसाधकम्। अत एव वेदेषु उपनिषत्सु पुराणेतिहासेषु च ज्ञानस्य महिमा सविस्तरं गीतोऽस्ति। तत्त्वानां विश्लेषणेन दर्शनानां भिन्नभिन्नधारासु वैषम्ये सत्यपि ज्ञानगरिम्णि विषये समस्तानां तत्त्वज्ञानिनामैकमत्यमस्ति। इदमेवास्ति भारतीयदर्शनानां महन् महत्त्वम्।

यद्यपि महामुनिः कपिलः साङ्ख्यस्य प्रवक्ता आदिविद्वानित्युच्यते, तथापि अतः प्रागपि मुनीनां समाजोऽध्यात्मविद्या प्रचलितासीदित्यत्र नास्ति कापि केषाञ्चिदपि विप्रतिपत्तिः, यतो हि कपिलात् प्राग्वर्तिषु अपि ग्रन्थेषु सगुणनिर्गुणज्ञानपरम्पर समुपलभ्यते। शाकलसंहितायां निर्गुणस्यात्मज्ञानस्य सङ्केतोऽवगम्यते। पूर्वं मुनिसमाजे

सगुणनिर्गुणज्ञानमयः सोपपत्तिकोऽध्यात्मविद्याप्रवाहः प्रचलन्नासीत्। अत एवोपनिषत्सु तत्-तत् स्थले युक्तिपुर्वकमात्मज्ञाननिरूपणं दरीदृश्यते।

आत्मज्ञानस्य व्युत्पादनं खलु दर्शनशास्त्रस्य मुख्यमुद्देश्यमस्ति। तच्चान्विक्षिकीपद्धत्यनुसारमात्मविद्यायाः विवेचनं भगवता कपिलेन समारब्धम्। ततः तच्छिष्य- प्रशिष्यादिभिः आसुरिपञ्चशिखप्रभृतिभिः तत् प्रवर्तितम्। ततः प्रचलितः साङ्ख्यदर्शनसम्प्रदायः। सर्वप्रथमं कपिलेन स्वमातरं देवहूतिं प्रतिदर्शनानुगतपद्धत्या विश्लेषणपूवर्कं साङ्ख्ययोगयोः प्रवचनं कृतम्-

**विवित्वार्थं कपिलो मातुरित्थं जातस्नेही यत्र तन्वाभिजातः।**

**तत्त्वाम्नायं यत् प्रवदन्ति साङ्ख्यं प्रोवाच वैभक्तिवितानयोगम्।।**

ततः स आदिविद्वानित्युच्यते। अध्यात्मशास्त्रं चिन्ताप्रधानं भवति। सा च चिन्ता साङ्ख्यदर्शनानुयायिनी महाभारते प्रोक्ता-"साङ्ख्यागतं तन्निखिलं नरेन्द्रं" इति वदता भगवता व्यासेन साङ्ख्यदर्शनं सर्वदर्शनमूर्धन्यमभ्युपगतम्। अपि महाभारते आन्विक्षिकीविद्याप्राधान्यात् साङ्ख्यदर्शनं सर्वेषां समुद्बोधकरं स्वीकृतमस्ति।

साङ्ख्यशास्त्रस्य ऐतिह्यम्

भारतीयदर्शनेषु साङ्ख्यदर्शनस्य स्थानमतीवादरास्पदमस्ति। वैदिकदर्शनेषु साङ्ख्यदर्शनं प्रमुखं प्रथममिति परिगण्यते। वस्तुतः सर्वदर्शनेषु सांख्यदर्शनस्य प्राथम्ये कानिचित् महत्त्वपूर्णानि कारणानि दृश्यन्ते। इदं दर्शनं वेदेन साक्षाद् सम्बद्धं, महर्षिकपिलप्रणीतं च वर्तते, वैदिकग्रन्थेषु साङ्ख्दर्शनप्रणेतुः चर्चा भूयसि दृश्यते।

उपनिषत्सु यत्र विश्वदर्शनतत्त्वानां विवेचनं प्राप्यते तत्र साङ्ख्यगततत्त्वानां विश्लेषणं प्राथम्येन क्रियते। श्वेताश्वतरोपनिषदि साङ्ख्यशास्त्रप्रवर्तकत्वेन महर्षिकपिलस्य नामोल्लेखः प्राप्यते। पौराणिकवर्णनानुसारं प्राचीनभारते महर्षिकपिलप्रणीतस्य सांख्यदर्शनस्य दार्शनिकेषु समधिकसमादरः आसीत्। साङ्ख्ययोगाचार्याणां नियतक्रमेण काचित् सूची यद्यपि अद्यापि नोपलभ्यते, तथापि साङ्ख्यदर्शनस्य भारतीयदर्शनेषु अन्यतमत्वं प्रायः सुप्रसिद्धमस्ति।

साङ्ख्याचार्यत्वेन यद्यपि अनेकेषामाचार्याणां नामानि स्मर्यन्ते, तथापि साङ्ख्यदर्शनप्रणेतृत्वेन महर्षिकपिलस्य नाम सादरं संगृह्य कपिलादयोऽनेके साङ्ख्याचार्याः विद्यन्ते, अत्र तेषामैतिह्यं विवेच्यन्ते।

**महर्षिकपिलः**

संस्कृतसाहित्ये कपिलनाम्ना अनेके आचार्याः प्राप्यन्ते। कस्य कपिलाचार्यस्य साङ्ख्यदर्शनेन सह सम्बन्धः अस्तीति नितरां विचारणीयं विद्यते। श्वेताश्वतरोपनिषदि साङ्ख्यशास्त्रप्रवर्तकः महर्षिकपिलः इत्यधिगतः, केचन आचार्याः तमेव वस्तुतः साङ्ख्यदर्शनप्रणेतार इति मन्यन्ते। परन्त्वत्र केचन प्राच्यपाश्चात्याश्च विद्वांसः कपिलस्य पूर्वैतिह्यसम्बन्धे सन्दिहन्ते। तत्र मैक्समूलरपोलब्रुकप्रभृतभिः पाश्चात्यैः विचारकैः पुराणेषु समुपलब्धः कपिलः एव साङ्ख्यशास्त्रप्रणेता इति मन्यते। बौद्धास्तु कपिलवस्तु नगरनिर्मातारमपि तमेव मन्यन्तें। पाश्चात्यविद्वान् कीथः कपिलशब्देन हिरण्यगर्भाख्यः विष्णुः शिवः वा मनुते। "भागवतमहापुराणेऽपि कपिलः विष्णोः

पवमानावताररूपेण वर्णितः"।[1] "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्विभर्ति जायमानं च पश्येत्"।[2] "कल्पभेदेन कपिलः क्वचिदग्निरूपेण कुत्रचित् ब्रह्मपुत्ररूपेण च वर्णितः"। अग्निः स कपिलो नाम साङ्ख्ययोगप्रर्वतकः[3] महाभारते वायुपुराणे च कपिलः अग्निदेवतावतारः ज्ञानिनामग्रजः आदित्यनाम्ना समुपवर्णितः। "आदित्यसंज्ञः कपिलस्त्वग्रजोऽग्निरिति स्मृतः"[4]। भागवतमहापुराणे कर्दमदेवहूतिभ्यामुत्पन्नः ऋषिः कपिलः साङ्ख्यशास्त्रस्य प्रणेता अस्तीति निम्नैः श्लोकैः विमृष्टः-

"अयं सिद्धः गणाधीशः सांख्याचार्यैः सुसम्मतः।

लोके कपिल इत्याख्यां मन्यन्ते कीर्तिवर्धिताः।।"

ब्रह्मपुराणे कथानकमेकं प्रसिद्धं यत् महाराज्ञः सगरस्य षष्टिसहस्त्रपुत्राः महर्षेः कपिलस्य क्रोधाग्निना भस्मीभूताः। वामनकूर्मपुराणयोः ब्रह्मणः मनसः प्रसूतेषु सप्तपुत्रेषु कपिलो अन्यतमः प्रजापतिरूपः परिगणितः। अयं कपिलः ऋग्वेदोक्तदशसंख्यकेषु प्रजापतिषु अन्यतमः आम्नातः। तथा च मन्त्रवर्णः-

"सप्त वीरासो धरादुदायन्नष्टोत्वरात्वात्समजग्मिरन्ते।

नव पश्चातात्स्थिविमन्त आयन्दशप्राक् सानुवितरन्त्यश्नः।"

"दशानामेकं कपिलं समानं तं हिन्वन्ति ऋतवे पर्याय।

---

[1] श्रीमद्भा. - 1/3/11

[2] श्वेत. 5/2

[3] म.भा. 11-141

[4] वायुपुराणम् 3-43

गर्भं माता सुधितं वक्षणा स्वेनन्तं तुषयन्ती विभर्ति"।।[1]

बौद्धसम्प्रदाये दीक्षितः अश्वघोषः स्वकीये बुद्धचरितनामके ग्रन्थे कपिलं प्रजापतिरूपमुपगत्य एवमुल्लिखितवान्–

"स शिष्यः कपिलश्चेह प्रतिबुद्ध इति स्मृतः।

स पुत्रः प्रतिबुद्धश्च प्रजापतिरिहोच्यते"।।

श्वेताश्वतरोपनिषद्भाष्ये शङ्कराचार्येण सगरपुत्राणां भस्मकर्त्ता कपिलः कश्चिदन्यः प्रतिपादितः, तथा साङ्ख्यप्रणेता कपिलः कश्चिदन्यः इत्युक्तः।[2] एवमेव पुराणोक्तानां कपिलानां चतुर्धा समुल्लेखः कर्तुं शक्यते। तत्रादौ कश्चन बौद्धाः गौतममुनिवंशजं मन्वते यस्य च नाम्ना कपिलवस्तुनगरस्य निर्माणं जातम्। द्वितीये तु ब्रह्मणः मनसः प्रसूतो (मानसपुत्रः) मूलतत्त्वज्ञानी कपिलः। तृतीये तावत् अग्न्यावतारविशिष्टं तपस्वी कपिलः यस्य क्रोधाग्निना सगरपुत्राः भस्मीभूताः। चतुर्थे च कर्दमदेवहूतिभ्यां समुद्भूतः विष्णववतारभूतः सांख्यतत्त्वोपदेष्टा कपिलः। एतेषु चतुर्षु कपिलेषु कः कपिलः सांख्यशास्त्रस्य प्रणेता भवितुमर्हति इति नितरां विचारणीयो विषयः। तत्र साङ्ख्यबौद्धसाहित्योरनुशीलनेन इदं ज्ञायते यत् साङ्ख्यदर्शनं बौद्धदर्शनतो प्राचीनतरमस्ति। अतः कपिलवस्तुनगरस्य निर्माता गौतममुनिवंशजः कपिलः साङ्ख्यशास्त्रस्य प्रणेता इति बौद्धानां कथनं सर्वत्र असङ्गतमिति मे प्रतिभाति। एवमेव

---

[1] ऋ.वं. 10-27-15-6

[2] श.क.भा.

विष्ण्ववताररूपेण वर्णितः कपिलः वेदान्ताद्युपदेशकत्वेन अभिमतत्वाद् न साङ्ख्यशास्त्रप्रवर्त्तको भवितुमर्हति। अवशिष्टौ द्वौ कपिलौ स्तः, तत्र प्रथमः ब्रह्मणो मानसपुत्रः, द्वितीयो अग्न्यवतारश्चेति साङ्ख्यशास्त्रस्य प्रणेतारौ सम्भवतः। तत्र साङ्ख्यशास्त्रीयवाङ्मयानुशीलनेन इदमवगम्यते यत् ब्रह्मासुतः कपिलः तत्त्वसमासस्य रचयितास्ति। "तथा अग्न्यावतारभूतः कपिलः साङ्ख्यसूत्रस्य प्रणेता मन्यते"।[1]

वायुपुराणे मोक्षजिज्ञासुनां मुनीनां एका सूची प्राप्यते। तत्र आसुरिकपिलः प्रभृतिऋषीणां ब्रह्माणो मानसपुत्ररूपेण उल्लेखः प्राप्यते। साङ्ख्यकारिकाभाष्यकर्त्ता गौडपादाचार्योपि सनकादिसप्तर्षिसु कपिलं ब्रह्मसुतं विज्ञापयति।

"सनकश्च सनन्दश्च्च तृतीयश्च सनातनः।

आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा।

इत्येते ब्रह्माणः पुत्राः सप्त प्रोक्ता महर्षयः।।[2]

केचन सांख्यशास्त्रविचारकाः विद्वांसः विष्ण्वग्न्यावतारौ कपिलौ एक एव मन्यन्ते। अत्र एवमभिधीयते यत् विष्ण्ववतारः कपिलः एव दाहकत्वादिगुणयुक्तः अग्निसमो भूत्वा स्वक्रोधाग्निना षष्टिसहस्राणि सगरपुत्रान् भस्मीकृतवान्। पुराणेषु श्रूयते यद् अस्य जन्मसमये ब्रह्मा स्वयमेव सांख्यदर्शनस्य तत्त्वानि समुपदिदेश। अतः स्वतसिद्धज्ञानत्वात् ब्रह्मणा सममेव अपूर्ववैदुष्यश्च अयमेव ब्रह्मासुतः कपिलः

---

1 सां.शा. कर्त्ता-श्रीकृष्णशास्त्रितैलङ्गकृतलेखे

2 वायुपुराणे

सांख्यदिशास्त्रकर्त्ता इति प्रोक्तः। श्रीमद्भागवतपुराणे कपिलद्वारा स्वमातरं प्रति सांख्यतत्त्वज्ञानोपदेशस्य वर्णनं प्राप्यते। अस्मिन् वर्णने प्रकृतिपुरुषयोः यथोल्लेखः प्राप्यते तेनेदमनुमीयते यद् इदमेव वस्तुतः सांख्यशास्त्रं लोके प्रसिद्धमगात्। अत्रैव भागवतीयवर्णनानुसारं विष्णववताररूपस्य कपिलस्यास्य सम्बन्धः सांख्यदर्शनेन सह संजातः इति। यद्यपि सांख्यदर्शनतत्त्वानां इतः प्रागपि अवस्थानम् अविच्छिन्नपरम्पराप्राप्तमासीत्, परन्तु स्वमातरं देवहूतिमुद्दिश्य कपिलेन सर्वतः प्रथमं प्रकृतिपुरुषादिजागतिकतत्त्वानामुपदेशः कृतः। एतस्माद् कारणाद् सांख्यशास्त्रप्रणेता उपदेष्टा च अयमेव अग्निसमो विष्णववतारभूतः कपिलः मन्यते।

आसुरिः

अनेके ग्रन्थाः सांख्यसिद्धान्तप्रवर्त्तकं कपिलाचार्यं मन्वते, ते इदमपि प्रतिपादयन्ति यत् आसुरिः कपिलस्य प्रथमः शिष्यः आसीत्। महाभारतग्रन्थस्याभिधानं सांख्याचार्याणां सूचीं प्रकाशयति तथा वायुपुराणं महेश्वरयोगस्य योगिनां नामावलिं, पद्म-कूर्म-वामनपुराणानि इमानि ब्रह्मणः मनसः प्रसूतेषु पुत्रेषु गणयन्ति। तर्पणविधिः एतान् कपिलान् तृतीयेन स्थानेन योजयति। आसुरिं पञ्चशिखाचार्यस्य गुरुः मन्यते। हरिभद्रसूरिमहोदयेन षड्दर्शनसमुच्चयटीकायाम् अस्य एकस्य श्लोकस्योद्धरणं कृतं यस्य सम्बन्धः योगशास्त्रेण सह विद्यते।

विविक्त दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।

**प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रसमोअंभसः।।**[1]

शतपथब्राह्मणे वृहदारण्यके च आसुरेः इतिहासविषये लिखितं यत् सः आसुरिनामकस्थानस्य निवासी प्राश्नीपुत्रः आसुराणस्य पुत्रः आसुरिनामकः पुत्रः आसीत्। आसुरिकपिलयोः[2] सम्बादस्योल्लेखेन स्पष्टं प्रतीयते यत् कपिलेन आसुरये तत्त्वज्ञानस्योपदेशो प्रदत्तः आसीत्। एवं महाभारतेऽपि एतद्विषये बहुषु स्थलेषु उल्लेखो अस्ति।[3] आसुरेः साङ्ख्यविषयकस्य कस्यचिद् ग्रन्थस्योल्लेखो नास्ति। कीथमूर्वप्रभृतयः पाश्चात्यविद्वांसः आसुरिमैतिहासिकं पुरुषं नाङ्गीकुर्वन्ति। परमेषां कथनं निराधारं विद्यते। संस्कृतसाहित्ये तस्य बहुत्र नामोल्लेखात् स नूनमस्ति ऐतिहासिकपुरुषः।

**पञ्चशिखः**

सांख्येतिहासे पञ्चशिखस्य स्थानं महत्त्वपूर्णमस्ति। ईश्वरकृष्णेन विदितं यत् तेन सांख्यशास्त्रमुद्दिश्य एको विशालः ग्रन्थो लिखितः आसीत् यः षष्ठितन्त्रनाम्ना प्रसिद्धः आसीत्।

एतेषां विषयाणां एकं सूचीपत्रं अहिर्बुध्न्यसंहितायां प्राप्यते। एतेन ज्ञायते तत्त्वसमासमुद्दिश्य भाष्यं लिखितमासीत्। महाभारते पञ्चशिखाचार्यवंशस्य घटनायाश्च विवरणं प्राप्यते। एतस्य मातुः नाम कपिला आसीत्। यतः कपिलो यं इति उदीयते। जनैः सह कपिलस्यानुगामित्वादिदमुपनाम एतस्मै द्वयर्थकं सार्थकं वा प्रतीयते। अयं

[1] स्याद्वाद्मञ्जर्यां पृ.-15

[2] महाभारत शान्तिपर्व - 326-328

[3] महाभारते पृ. 12/220/10-13

वृद्धपराशरस्य गोत्रजः तथा राज्ञा जनकेन गुरुः इति तदभिधाने स्वीयं गौरवम् अनुभूयते।

**पराशरस्य गौत्रस्य वृद्धस्य समुहात्मनः।**

**भिक्षोः पञ्चशिखस्याहं शिष्यः परमसम्मतः।।**[1]

अयं भिक्षावृत्त्य स्वकीयं जीवनं यापयति स्म। अतः कतिपयैः जनैः भिक्षुः इति शब्देनापि अभिधीयते स्म। अस्य शिक्षादीक्षा पञ्चनददेशेऽभूत्। अयं पञ्चरात्रसिद्धान्ते निष्णातः आसीत्। पञ्चविद्याष्वयं प्रवीणः आसीत्। पञ्चप्रकारान् ज्ञानानि विशेषरूपेण जानाति स्म। तथा पञ्चभिः गुणैः युक्तः पञ्चशिखनाम्ना प्रसिद्धः आसीत्।

**पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदाः।**

**पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः।।**[2]

कूर्मपुराणे जैगीषव्यश्च गुरुः प्रतिपादितः वायुपुराणे माहेश्वरयोगस्य ज्ञाता येन अनेन मोक्षप्राप्तः इति कथितमभूत्। महाभारते अनेकेषु स्थलेषु पञ्चशिखस्योल्लेखोऽस्ति। शान्तिपर्वणि 220 अध्याये आसुरेः धर्मध्वजो जनकोऽन्यतमोऽभूत्। महाभारते पञ्चशिखजनकयोः संवादस्य वर्णनं विद्यते।

**"वैदेहो जनको राजा महर्षि वेदवित्तम्।**

**पर्यपृच्छत् पञ्चशिखं छिन्नधर्मार्थसंशयम्।।"**[1]

---

[1] महा. भा. पृ. 12/320, 241

[2] महा. भा प. 12/342/94

तत्र तेषां सिद्धान्तानामुल्लेखोऽस्ति, ये व्यक्तादयः सांख्यसम्बद्धाः सन्ति, ते तथैव सांख्यसूत्रे तत्त्वसमासे च वर्णिताः विद्यन्ते। वस्तुतोऽस्मिन् संवादे दार्शनिकरूपेण तत्त्वानां विवेचनाय कश्चित् प्रसङ्गो नास्ति, किन्तु केवलं जनकोक्त्या प्रतीयते यत् स आत्मानं सांख्ययोगाचार्यः मन्यते स्म। युक्तिदीपिकायां व्याख्यायते यत् पञ्चशिखाचार्यस्यानेके शिष्याः समभूवन्। तेषु जनकवशिष्ठावपि आस्ताम् महाज्ञानिनाविति।

**वार्षगण्यः**

वार्षगण्यः सांख्ययोगस्य विश्रुतः आचार्यः आसीत्। अस्य नाम महाभारतस्य सांख्याचार्याणां सूच्यां प्राप्यते। प्राचीनपरम्परायां तिब्बतपरम्परायां च अस्य नाम वृषः वृषगणो वा प्राप्यते यः संस्कृतशब्दस्य वर्षस्य वार्षगण्यस्य वा विकृतरूपं प्रतीयते।

कथासरित्सागरे वार्षगण्यस्योल्लेखोऽस्ति। स च ।।व्याडि।। भगवतो वर्षस्य शिष्यो नन्दसमकालीनः पाणिनिसूत्राणां संग्रहाख्यटीकायाः कस्यचित् कोषस्य च कर्त्ता द्राक्षायेणः पतञ्जलेरपि पुरोगामी सांख्ययोगाचार्यः।।[2] युक्तिदीपिकायां 108 पृष्ठे, सांख्यतत्त्वकौमुद्यां 47 कारिकायां, योगसूत्रव्यासभाष्ये 3/52, भामत्यां 2/1/3, लाटयायनश्रौत्रसूत्रे 10/9/210, निदानसूत्रे 33 पृष्ठे, वार्षगण्यस्य चर्चा विद्यते।

---

[1] महा. भा पृ.-12/319/4

[2] कथासरित्सागर -2

माठराचार्येण सांख्यस्य गुरुशिष्यपरम्पराविषये इत्थं प्रतिपादितं यत् कपिलादासुरिणां सांख्यं प्राप्तम्, ततः पञ्चशिखेन, ततो भार्गव-उलूक-वाल्मीकि-हारीत-देवलप्रभृतिभिः प्राप्तम्, तत ईश्वरकृष्णेन प्राप्तम्। एतेन देवलेश्वरकृष्णयोर्मध्ये नैके आचार्याः अभूवन् येषामस्यां परम्परायां नामोल्लेखो नास्ति। माठरानुसारं कपिल-उलूक-वाल्मीकि-हारीत-देवलानां साक्षान्नाम निर्दिष्टं वर्तते। जयमङ्गलायां गर्गगौतमावपि स्मृतौ स्तः। युक्तिदीपिकाकारेण सांख्यमतस्वीकृतेष्वाचार्येषु मनुनारायणद्वैपायनेनापि उल्लिखिताः सन्ति।

**ईश्वरकृष्णः**

सांख्यदर्शनस्येतिहासे श्रीमदीश्वरकृष्णस्य नाम समादरेण स्मृतिपथं नीयते। यद्यप्यस्य सम्बन्धे अद्यत्वेऽपि नितान्तमधिगम्यते, तथापि विद्वत्सु बहवः मतभेदाः सन्ति। अनेन एवामाभासते यदीश्वरकृष्णः सांख्यदर्शनस्य विहितं विवरणं पुनरपि प्रकाशयितुमेव "साङ्ख्यकारिकां" प्रणीतवान्। बौद्धभिक्षुणा परमार्थेन सुबन्धुचरितस्य रचनया सार्धमेव सांख्यकारिकायाः अनुवादः चीनीभाषायामपि कृतः। यस्य नाम "सुवर्णसप्ततिः, कनकपद्धतिसप्ततिः, हिरण्यसप्ततिः" वाऽस्ति। अस्य कालः डॉ. कुसुममहोदयानुसारं पञ्चमः ख्रिष्टाब्द इति मन्यते। डॉ. विद्याभूषणेन सुबन्धुईश्वरकृष्णयोः कालः समसामायिकः मन्यते। तदनुसारमेव चतुर्थशताब्द्यामस्य समयः निर्धारितः। "डॉ. वेसेण्टस्मिथेनापि एवमेवास्य समयः समर्थितोऽस्ति।" डॉ. एस.एन. दासगुप्तेन ईश्वरकृष्णस्य समयः द्वितीयशताब्द्यां मन्यते। वेल्करमहोदयेनास्य

समयः प्रथमशतकमिति स्वीकृतः। डॉ. गोपीनाथकविराजः उदयवीरशास्त्रिणः तथैवान्ये विद्वांसः एवमेव स्वीकुर्वन्ति। माठ्रवृत्तिः सांख्यकारिकायाः प्राचीनतमा टीका अस्ति। यस्य समयः विद्वांसः प्रथमशतमिति आमनन्ति।

**दर्शनशास्त्रेषु वाचस्पतिमिश्रस्य योगदानम्**

षड्दर्शनस्य मान्योऽयमाचार्यः सर्वतन्त्रस्वतन्त्रश्रीवाचस्पतिमिश्रो 'मिथिला' देशनिवास्यासीदिति श्रूयते। भारतेषु सर्वेष्वेव दर्शनेषु श्रीवाचस्पतिमिश्रस्याऽलौकिकमद्भुतं प्रतिभाभास्वरमप्रतिहतगतिकं पाण्डित्यमासीदिति सर्वेऽपि विद्वांसो विशेषतो दार्शनिकाश्च विदाङ्कुर्वन्तीति नहितिरोहितमस्ति केषामपि विदुषाम्।

वैदिकदार्शनिकसम्प्रदाये नास्ति कोऽप्येवंभूतं सम्प्रदायो यस्मिन् सम्प्रदायेऽस्य महानुभावस्य श्रीवाचस्पतिमिश्रस्य कश्चिन्महत्त्वपूर्णो ग्रन्थो न भवेन्नापि च मिलेदिति।

श्रीमिश्रस्य जीवनं सर्वथा सुजीवनमासीद् व्यक्तित्वञ्च तदीयमतीव वन्द्यं प्रशस्ततरं चासीदिति सर्वे विद्वांसो दार्शनिकाः जानन्ति। साङ्ख्यतत्त्वकौमुद्याः अन्तिमे भागे लिखितमस्ति यत्-

'मनांसि कुमुदानीव बोधयन्ती सतां सदा।
श्रीवाचस्पतिमिश्राणां कृतिः स्यात्तत्वकौमुदी।।'

साङ्ख्यतत्त्वकौमुद्यामेव प्रमाणप्रकरणे एवेत्यपि लिखितमस्ति यत्-"सर्वञ्चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां विचारितं नेहोक्तं विस्तरभयात्।"

अपि च न्यायवार्तिकटीकायां तृतीयाध्याये द्वितीये आह्निके–'प्रपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकलिकाभ्याम्' इति च लिखितमस्ति। 'तत्त्वबिन्दु' नामके च ग्रन्थे–'उपपादितं सर्व न्यायकालिकायाम्' इति च सर्वं लिखितमस्ति। भामत्यामपि च 'विस्तरस्तु ब्रह्मतत्त्वसमीक्षायाम्' 'उपपादितञ्चैतदस्माभिर्विस्तरेण न्यायकलिकायाम्' इत्थं लिखितमस्ति। एवं भामतीग्रन्थस्यैव समाप्तावपीदं लिखितं विलोक्यते–

**'यन्न्यायकलिका–तत्त्वसमीक्षा–तत्त्वबिन्दुभिः।**

**यन्न्यायसाङ्ख्ययोगानां वेदान्तानां निबन्धनैः।।**

**समये चैव महत् पुण्यं तत्फलं पुष्कलं मया।**

**समर्पितमथैतेन प्रीयतां परमेश्वरः।।'**

एतेषां ग्रन्थानां लेखनेनाऽवश्यं प्रतीयते यत् श्रीवाचस्पतिमिश्रस्य वैदुष्यमतीवोच्यकोटिकमासीत्, सर्वत्र च दर्शनेषु विस्तृतञ्चासीत्। अत एव श्रीमिश्रः षड्दर्शनस्य चाऽऽचार्यः खल्विदानीमपि मन्यते दार्शनिकास्तदीयां कृतिं विलोकयन्तः सन्ति।

भारतीये दार्शनिके जगति नाऽभूत् कोऽपि–एवम्भूतो महान् ज्ञानवान् विद्वान् यश्च समस्तानां वैदिकदर्शनानामुपरि लेखनीं समुत्थापितवान्, समुत्थापयितुं वा प्रयतेत।

श्रीमिश्रो न्यायवार्तिकस्योपरि तात्पर्यटीकामपि लिखितवान् यश्च न्यायवार्तिकग्रन्थोऽतीवाऽपूर्वोऽयं महत्वपूर्णग्रन्थोऽभ्युपगम्यते। एवमेवाऽन्येऽपि तत्तदर्शनानामुपरि षड्दर्शनाचार्यश्रीमिश्रस्य ग्रन्थाः समुपलभ्यन्ते यथा-

1. न्यायशास्त्रे चास्ति→'न्यायतात्पर्यटीका'='न्यायसूचीनिबन्धः'।
2. वेदान्ते→भामती, तत्त्वसमीक्षा अथवा ब्रह्मतत्त्वसमीक्षा।
3. मीमांसायाम्→न्यायकणिका तत्त्वबिन्दुश्च।
4. साङ्ख्यशास्त्रे च→साङ्ख्यतत्त्वकौमुदी।
5. योगदर्शने चास्ति→तत्त्ववैशारदी (योगभाष्योपरि टीका)

षड्दर्शनाचार्यश्रीवाचस्पतिमिश्रस्य बाल्यावस्थात्मककालीनेतिहासो ऽत्यन्तमेवाऽर्थविहीनः आसीत्। अयञ्च श्रीमिश्रः एतादृशीमर्थविहीनामवस्थां गतप्राय आसीत् यदस्य जननवेलायां नाभिस्थानीय 'नाले' ति छेदनकर्त्र्याः 'भङ्गिन' इत्याख्यायाः शूद्रत्वजात्यवच्छिन्नाया योषितः कृते प्रदातुं पणकादिक, कपर्दिकापर्यन्तमपि नासीत्। तदानीं श्रीमिश्रस्य जननीदमेव व्याहृतवती यदस्य बालकस्य प्राथमिकं यदपि समुपार्जनं भविष्यति मिलिष्यति वा तत्तुभ्यमेवाऽखिलं दास्ये।

तदनन्तरमस्य श्रीमिश्रस्य केनचिद् राजपण्डितेन सार्धं राज्ञ एव समक्षे शास्त्रार्थाऽपरपर्यायभूता प्रभूता शास्त्रचर्चा जाता। तदा राजपण्डितस्य पराजयनिमित्तीभूतः सर्वोऽपि पुरस्कारस्तस्यै योषिते 'भङ्गिन' इत्याख्यायै खलु प्रदत्तवान्।

तदनन्तरमस्य श्रीमिश्रस्य तन्नामधेयसहितं तदीयं तद्व्यक्तित्वं महतीं ख्यातिं गतमभूत्, विश्वख्यातिञ्च समवाप्नोति स्म। श्रूयते श्रीमिश्रोपाह्वो वाचस्पतिर्यदा ब्रह्मसूत्र-शाङ्करभाष्योपरि टीकां 'भामतीं' लिखितवानासीत्तदा लेखनकाले एवैकदा दीने दीपस्य वर्त्तिका खलु प्रायोऽस्तगताऽऽसीत्। आचार्यः श्रीवाचस्पतिमिश्रश्चिन्तयति यत् पूर्वं वर्तिकां पूरयामि आहोस्वित् पङ्क्तिमिति चिन्तासन्तानपरायणस्य तस्याऽऽचार्यप्रवरश्रीमिश्रस्य दीपवर्त्तिका प्रायोऽस्तं गताऽऽसीदेवेति तदानीमेव तादृशनाटकावलोकनकुतूहलकुशला श्रीआचार्यधर्मपत्नीसौभाग्यसम्पन्नाश्रीमतीभामती दीपवर्तिकामग्रे सारयति स्म।

यथा-पक्षधरमिश्रः, पार्थसारथिमिश्रः, मण्डनमिश्रः, मुरारिमिश्रश्चेत्येवमादयो विद्वांसो मिथिलादेशवासिनः आसन्, तथा मिश्रान्तः श्रीवाचस्पतिरपि मिथिलादेशनिवास्यासीदिति नूनं विभाव्यताम्। अस्य च आचार्यपादश्रीमिश्रस्य पूज्यचरणः गुरुः श्रीत्रिलोचनमिश्रनामधेय आसीदित्यपि विदाङ्कुर्वन्तु भवन्तः। वैदिकदार्शनिकसमुदायेऽसाधारणीं विख्यातिञ्च प्राप्तवान्। अयञ्च षड्दर्शनाचार्यः श्रीमिश्रोऽलौकिकपाण्डित्यसम्पत्यवच्छिन्नत्वाऽवच्छिन्नः सन् सर्वतन्त्रस्वतन्त्रोऽभूदिति नहि केषामपि विदुषामविदितोऽयं विषयः।

**सारबोधिनी टीकाकर्तुः परिचयः**

सांख्यतत्त्वकौमुद्यामुपरि नैके टीकाग्रन्था सन्ति तेषु सारबोधिनी टीकाकर्ता शिवनारायणशास्त्रि वर्तते। इतः प्राक् यद्यपि विद्वत्तोषिणी नाम्नी टीकापि रचिता किन्तु सा अपूर्णा अयं टीकाग्रन्थः प्रणीतः शास्त्रिपादः। तत्र स्वयमेव आचार्यः वदति-

"बालरामकृता व्याख्या न पूर्णा दैवयोगतः।
मर्गं तस्याः समालम्ब्य कृतेयं सारबोधिनी।।"[1]

इति लवपुरीयप्राच्यविद्यालयप्रधानाध्यापकमहामहोपाध्यायपदालङ्कृत-दाधिमथपण्डितश्रीशिवदत्तशर्मतोऽधीयविद्येन वर्तमानसमये बीकानेरराज्यान्तर्गतहरग्रामवासि श्रेष्ठि (सेठ) श्रीशिवलालात्मजश्रीरामलालकृष्णलालगुप्तस्थापितसंस्कृतपाठशालाप्रथमाध्याप- केन जयन्तीपुर (जींद) राज्यान्तर्गतगोतोलीग्रामवासिपण्डित श्री 108 अमीलालशर्मसूनुना सती श्री रजिया राज्ञा देवीसुगर्भजेन शाब्दिकचूडामणि विद्यावारिधिपण्डित श्री शिवनारायणशास्त्रिणा निर्मिता सारबोधिनीसमाख्या साङ्ख्यतत्त्वकौमुदीत्याख्या समाप्तिमगादिति शिवम्।

"सर्वेषामेव शास्त्राणां विज्ञाः सारं समुद्धृतम्।
वर्तते तु यतो ह्यस्यां ततस्तु सारबोधिनी।।"[2]

---

[1] सारबो. टीका, पृ. 506

[2] सारबो. टीका, पृ. 507

"अबोधानां सबोधानां व्याख्येयं हितसाधनी।

यतोऽत्र विषयाः सर्वे ग्राह्या उक्तां विशेषताः।।"[1]

**सारबोधिनीटीकायाः वैशिष्ट्यम्**

अयं टीकाग्रन्थः न केवलं सांख्यतत्त्वकौमुद्याः व्याख्यानरूपेण महत्त्वपूर्णः वर्तते, अपितु भाषादृष्ट्या विषयोपस्थापनदृष्ट्यापि अस्य अतीव महत्त्वपूर्णं स्थानं विद्यते। शास्त्रान्तरे प्रतिपाद्यमानानां विषयाणां यादृशमुपस्थानं अस्मिन् व्याख्याग्रन्थे व्याख्याकर्त्रा श्रीशिवनारायणशास्त्रिणा कृतं सांख्यतत्त्वकौमुद्या येऽपि टीकाग्रन्थाः यथा विद्वत्तोषिणी, सुषमा, साङ्ख्यतत्त्वदिवाकरः किरणावली प्रभृतयः सन्ति। यादृशी पद्धतिः अस्मिन् ग्रन्थे दरीदृश्यते, तादृशी अन्यत्र ग्रन्थेषु मया न दृष्टा। यथा- आदावेव मंगलाचरणे "अजामेकां लोहितशुक्लकृष्णां" इत्यस्य व्याख्याने- तत्र लोहिता चासौ शुक्ला चेति लोहितशुक्ला, सा चासौ कृष्णा चेति कर्मधारयः (प्रथमसमासे लोहिता शब्दस्य पुंवद्भावः, द्वितीये च लोहितशुक्लाशब्दस्येति बोध्यम्)। ततश्च प्रधानं न गुणेभ्यस्तत्त्वान्तरं, किन्तु गुणा एव साम्यवास्थामापन्नाः प्रधानव्यपदेश्या भवन्तीति सिध्यति। तत्रैवाग्रे अजामेकां लोहितं शुक्लं कृष्णं यस्यामिति बहुब्रीहिस्तु न। तथा सति बहुब्रीहेरन्यपदार्थप्रधानतया गुणेभ्योऽर्थान्तरस्य गुणिरूपस्य प्रधानस्य सिद्धिप्रसंगात्, तस्य चानिष्टप्रसंगात्। प्रकृतिसत्त्वे प्रमाणोपन्यासाय (विमताः प्रजाः सुखदुःखमोहात्मकवस्तुप्रकृतिकाः सुखाद्यन्वितत्वात्, यद्येनान्वितं तत्तदुपादानकम्, यथा

[1] सारबो. टीका. पृ. 507

मृत्सुवर्णान्वितं घटकटकादिकम्, तथा चेमा:, तस्मात्तथा इत्यत्र प्रयोग:) च बह्वी: प्रजा: सृजमानाम् इति तृतीयं विशेषणमिति विवेक:। एतादृशं सविशदं व्याख्यानं सांख्यतत्त्वकौमुद्या:, सांख्यकारिकाया: वा अन्यासु टीकासु नास्त्येव, अत: अनेन व्याख्यानेन शिवनारायणशास्त्रिणा न केवलं ग्रन्थग्रन्थेरूद्घाटनम् अपितु स्वस्य व्याकरणज्ञताऽपि साधिता एव।

एवमेव "असंदिग्धाविपरीतानधिगतविषया चित्तवृत्ति:, बोधश्च पौरुषेय: फलं प्रमा"[1] इति प्रमालक्षणमुक्तं वाचस्पतिमिश्रै:। तत्र व्याख्याने शास्त्रिपादै: यादृशं विशदं विवेचनं विहितं तथा व्याख्यानमन्यत्र व्याख्याग्रन्थेषु न दृश्यते यथा–

असंदिग्ध: = किंस्विदिति वितर्कात्मकानवधारणज्ञानविषय: 'इदमिदं न वा' इति संशयविषय: इति यावत् संदिग्ध: स न भवतीति असंदिग्ध: निश्चित:। अविपरीत: स्वरूपाप्रतिष्ठितो मिथ्याज्ञानात्मकविपर्ययज्ञानविषयो, विकल्पात्मकज्ञानविषयश्च विपरीत: "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प:"[2] इति लक्षितविकल्पात्मकज्ञानस्यापि विपर्ययविशेषत्वेन तद्विषयोऽपि विपरीत: इत्यनेन संगृहीतं, शब्दश्च ज्ञानञ्च शब्दज्ञाने, ते अनुपातिनी जनके यस्य स शब्दज्ञानानुपाती श्रोतु:= श्रूयमाणशब्दहेतुम: प्रयोक्तु: पदार्थोपस्थितिहेतुको, बाधनिश्चयेपि कलहादौ नर श्रृंगादिप्रयोगे, उत्प्रेक्षादौ च सर्वानुभवसिद्ध: वस्तुशून्य:= बाधितविषयप्रत्यय: नर विषाणं, खपुष्पं चैतन्यं पुरुषस्य

[1] सां. त. कौ.–4

[2] यो. सूत्र. –1/9

स्वरूपम्, इत्याद्याकारा विकल्पाख्या वृत्तिरिति तत्सूत्रार्थाद् इति ध्येयम्।) स न भवतीति अविपरीतः। अनधिगतः पूर्वानुभवजन्यसंस्कारमात्रोपस्थापितोऽधिगतः निश्चयात्मकज्ञानविषय इति यावत्, स न भवतीति अनधिगतः = अननुभूतः एवम्भूतः पदार्थो विषयो यस्याः निश्चितवृत्तेः सा असंदिग्धा विपरीता नाधिगतविषया चित्तवृत्तिः = इदमेव इत्येवं प्रकारा बुद्धेरध्यवसायाख्या वृत्तिः। "प्रमा" इत्यग्रिमेण संबंधः। "संशय-विपर्यय-विकल्प-स्मृतिरूपचित्तवृत्तिभिन्न या चित्तवृत्तिः सा प्रमा "इत्यर्थः"। इत्यत्र यत् प्रमायाः द्वैविध्यं व्याख्याकर्त्रा प्रतिपादितं, तत्तु सांख्यशास्त्राभितमेव, किन्त्वत्र आचार्यैः यादृशः विचारः उपस्थापितः, सः अस्य व्याख्यानस्य वैशिष्ट्मेव सूचयति। अस्यां टीकायां कर्त्रा पारिभाषिकशब्दानां या टिप्पणी उपस्थापिता सा निश्चितमेव अद्वितीयैव। अनया टीकया (टिप्पण्या सह) न केवलं ग्रन्थस्याध्ययने सौकर्यं भविष्यति, अपितु श्रुति-स्मृति-व्याकरण-धर्मशास्त्र-बौद्ध-न्या-मीमांसादिशास्त्रेषु प्रतिपादितानां प्रमाणप्रमेयादिदार्शनिकसिद्धान्तानामध्ययनेऽपि सारल्यं भविष्यतीति मे मतिः। एवमेव सर्वत्रैव, सम्पूर्णेऽपि व्याख्याग्रन्थे आचार्यैः तन्त्रान्तरीयसिद्धान्तानां सयुक्तिकं, सप्रमाणं च यथा उपन्यस्य तन्निराकरणं कृतं सांख्यशास्त्रीयसिद्धान्तानां च यथा व्यवस्थापनं कृतं तदपि मुक्तकण्ठस्वरेण अस्य वैशिष्ट्यं सूचयति। अनेन शास्त्रेण च श्री बालरामोदासीनाकृता अपूर्णाविद्वत्तोषिणीव्याख्या पूर्णतां यास्यतीति मां प्रतिभाति। अतः अस्य वैशिष्ट्यं तु स्वतः सिद्धमेवेति।

प्राय: विद्वतोषिणीकाराणां अनुकरणं प्रायश: सर्वत्त दृश्यते। ऐभि: स्वमतपोषणाय श्रुति–स्मृति–पुराण–दर्शनसाहित्यानां च सर्वत्तेव उपस्थानं कृतम्। अस्यां टीकायां प्रमाणतत्त्वोपस्थापने अथ च सृष्टिप्रक्रियां मिश्रमतमैव समर्थनं न तु विज्ञानभिक्षुमतम्। अस्मिन् टीकाग्रन्थे तात्पर्यटीकाया: उद्धारणं सर्वत्त दर्शनात् प्रतीयते। यत् ऐते आचार्या: नैयायिका: अथवा न्यायदर्शनस्य अस्यामुपरि बाहुल्येन प्रभाव:। अथ च प्रमाणानामुपस्थापनं भवतु प्रमेयनां वा सर्वत्तेव आचार्यै: नैयायिकानां मतं उपस्थापितं इति दृश्यते। अन्यत्रापि प्रायश: सर्वत्रेव वाचस्पतिमिश्राणां प्रभाव: अथवा अनुकरणं यादृशं ऐभि: आचार्यै: कृतं तादृशं नाऽन्यै: यतोहि प्रमाणनिरूपणप्रसङ्गे भामते: वाक्यं द्रष्टुं शक्यते। वेदान्तदर्शनं प्रमेयशास्त्रं तथापि प्रमाणानां स्वरूपप्रतिपादने टीकाकार: भामतीवाक्यं उद्धरति एवमेव न्यायदर्शनं प्रमाणशास्त्रं तथापि व्यक्ताव्यक्तादि तत्त्वानां स्वरूपप्रतिपादने प्रमाणत्वेन तात्पर्यटीकाया: उद्धरणं प्राप्यते। उभयत्र वाचस्पतिमिश्रस्यैव वैशिष्ट्यम् अत: वक्तुं शक्यते। अस्मिन् आचार्ये वाचस्पतिमिश्रस्य एव प्रभाव: नान्यस्य इति वक्तुं शक्यते।

**इति भूमिका**

# प्रथमोऽध्यायः

प्रमाणप्रकरणम्
अवैदिकदर्शनेषु प्रमातत्त्वोपस्थापनम्
वैदिकदर्शनेषु प्रमातत्त्वोपस्थापनम्
सांख्याभिमतप्रमाणतत्त्वनिरूपणम्
प्रमाणविषये वाचस्पतिमिश्रमत प्रदर्शनम्
प्रमाणविषये सारबोधिनीकारमतसमीक्षणम्



# प्रथमोऽध्यायः

प्रमाणप्रकरणम्

अवैदिकदर्शनेषु प्रमातत्त्वोपस्थापनम्

वैदिकदर्शनेषु प्रमातत्त्वोपस्थापनम्

सांख्याभिमतप्रमाणतत्त्वनिरूपणम्

प्रमाणविषये वाचस्पतिमिश्रमत प्रदर्शनम्

प्रमाणविषये सारबोधिनीकारमतसमीक्षणम्



# प्रथमोऽध्यायः

## वैदिकावैदिकदर्शनेषु प्रमाणतत्त्वोपस्थापनम्

"मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणम्" इति न्यायवचनमनुसृत्य साङ्ख्यशास्त्रेऽपि ईश्वरकृष्णेन उक्तं "प्रमेयसिद्धिः प्रमाणाद्धिः" अर्थात् तत्तच्छास्त्रेषु यानि अपि तत्त्वानि प्रतिपादितानि तेषां सिद्धिः प्रमाणेन भवति। अत्र इयं जिज्ञासा जायते यत् किमेकेनैव प्रमाणेन तत् तत् शास्त्राभिहितानां तत्त्वानां सिद्धिर्भवति, उत अनेकैः प्रमाणैः। अत्र दार्शनिकेषु प्रमाणसङ्ख्याविषये दृश्यते बहुधा विप्रतिपत्तिः।

एकप्रमाणवादः चार्वाकस्य, द्विप्रमाणवादः बौद्धवैशेषिकयोः, त्रिप्रमाणवादः साङ्ख्ययोगयोः, चतुर्प्रमाणवादः नैयायिकस्य, पञ्चप्रमाणवादः प्राभाकरस्य, षट्प्रमाणवादः भाट्टानामद्वैतीनाञ्च।

एवं खलु प्रमायाः प्रमाण्यविषये सङ्ख्याविषये च दार्शनिकेषु अत्र विप्रतिपत्तिः अतः न्यायेन सह मतान्तंरस्य तुलनात्मकं विचारः क्रियते।

"लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः न तु प्रतिज्ञामात्रेण" इति न्यायेन प्रतीयते अनेन इति निर्वचनेन निष्पन्नस्य प्रमाणास्य स्वरूपं तल्लक्षणं इत्यत्रापि किं शास्त्रकारेषु दृश्यते विप्रतिपत्तिः। दर्शनेषु प्रायः प्रमाणशब्दस्य प्रमाकरणेऽर्थेः प्रयोगो दृश्यते प्रमाकरणत्वं प्रमाणस्य लक्षणमित्यत्र भारतीयदार्शनिकानां मतभेदो नास्ति। 'प्र' उपसर्गपूर्वकात् 'मा' धातुना निष्पन्नस्य प्रमाशब्दस्यार्थोऽस्ति यथार्थज्ञानम्। 'प्र' पूर्वकात् 'मा' धातोः, करणार्थे ल्युट् प्रत्यये कृते सति प्रमाणशब्दो निष्पद्यते। अतः येन साधनेन यथार्थज्ञानं जायते तदेव प्रमाणं भवति।

चार्वाकदर्शने प्रमाणस्वरूपम्

चार्वाकैः केवलं प्रत्यक्षप्रमाणं मन्यते। यस्य पदार्थस्य सिद्धिः प्रत्यक्षेण न भवति तादृशः पदार्थः तेषां नये अप्रामाणिकः। चार्वाकः अनुमानादिप्रमाणस्य प्रत्यक्षातिरिक्तत्वं खण्डयति करोति। यतो हि अनुमानस्य आधारः साध्यसाधनरूपः व्याप्तिसम्बन्धो भवति। तस्य व्याप्तिसम्बन्धस्य मूलं साहचर्यनियमोऽस्ति। यथा-(यत्र-यत्र धूमस्तत्र तत्र वह्निः इति साहचर्यनियमो व्याप्तिः) साहचर्यस्य प्रत्यक्षत्वात् व्याप्तेरपि प्रत्यक्षं भवति। अतः व्याप्तिज्ञानजन्यं यद् ज्ञानं तदपि प्रत्यक्षमेव। अतः अनुमानस्य सत्ता एव नास्ति।

जैनदर्शने प्रमाणस्वरूपम्

जैनदर्शने सर्वप्रथमाचार्यः समन्तभद्रः स्वपरावभासकं ज्ञानं प्रमाणमाह। आचार्यसिद्धसैनः स्वपरावभासकं बाधवर्जितं च ज्ञानं प्रमाणमुक्तवान् पुनश्च

अकलङ्केन प्रमाणलक्षणे "अविसम्बादि, अनधिगतम्, व्यवसायात्मकम्" इत्येतानि पदानि निवेशयता स्वस्वाचार्यस्य च ग्राहकं ज्ञानं प्रमाणमित्युक्तम् विद्यानन्दः च प्रथमतः सम्यग्ज्ञानं प्रमाणमुक्त्वा पुनस्तत् स्वार्थव्यवसायात्मकमाह। न तेन प्रमाणलक्षणे अनधिगतमिति वा अपूर्वमिति वा विशेषणं प्रदत्तम्। अपूर्वार्थप्रकाशकं वा गृहीतग्राहि वा भवतु ज्ञानम्, स्वार्थव्यवसायात्मकमात्रतया तद् भवति प्रमाणमिति स मन्यते।

जैनदर्शनानुसारेण प्रमाणसामान्यविषये उक्तं-"मतिश्रुतावधिमनःपर्यायः केवलानि ज्ञानं"[1] अर्थात् अस्मिन् दर्शने ज्ञानमेव प्रमाणं। सूत्रकारेण नहि सम्यक् ज्ञानस्य लक्षणं प्रतिपादितम्। सम्यक्दर्शनस्य लक्षणमेव सम्यक्ज्ञानलक्षणम् अधिगतं भवति। तत्र सम्यक् ज्ञानमेव प्रमाणम्। तत् च प्रमाणं प्रत्यक्षपरोक्षभेदेन द्विविधं भवति। यथा तत्त्वार्थसूत्रकारेण उक्तं-तत् प्रमाणे, आद्ये परोक्षं, प्रत्यक्षमन्यत्।[2] अर्थात् तादृशं सम्यक्ज्ञानं प्रमाणं द्विविधं भवति। परोक्षं प्रत्यक्षञ्चेति।

**प्रत्यक्षप्रमाणम्**

प्रत्यक्षप्रमाणं द्विविधं भवति। मनः पर्ययज्ञानं केवलज्ञानञ्च।

---

[1] तत्त्वा.सू. -1/9

[2] तत्त्वा.सू. -1/10,11,12

मनः पर्यायज्ञानं मनसः तत् तत् पर्यायानां ज्ञानं मनः पर्ययज्ञानम्। तत् च ज्ञानं अरूपिद्रव्यस्य सर्वपर्यायरहिते-अनन्ते भागे भवति। यथोक्तं सूत्रकारेण "तदनन्तभागे मनः पर्यायस्य।"

कवेलज्ञानम्-सर्वद्रव्यसर्वपर्यायविषयकं ज्ञानं केवलज्ञानम्। इदं ज्ञानम् आत्मनि साक्षादुदेति अतः उक्तं-"सर्वद्रव्यपर्यायेषु केवलस्य" एतत् पञ्चविधं ज्ञानमेव प्रमाणपदवाच्यं जैनदर्शनाभिमतं इति।

परोक्षम्-परोक्षं ज्ञानं इन्द्रियमनसा संयुज्य जायमानं सम्यक्ज्ञानं परोक्षज्ञानम् अर्थात् इन्द्रियेण मनसा सहायेण यद् ज्ञानं जायते तत् परोक्षम्। यथा-घटपदादिविषयकं ज्ञानम्। तत् च ज्ञानं त्रिविधं भवति। (1) मतिज्ञानं (2) श्रुतज्ञानं (3) अवधिज्ञानञ्चेति।

(1) मतिज्ञानम्-"इन्द्रियाऽनिन्द्रियनिमित्तं जायमानं ज्ञानं मतिज्ञानम्। तत्र चक्षुरादि इन्द्रियाणि बाह्यसाधनानि, मनश्च अनिन्द्रियम् आभ्यान्तरसाधनम्। यथा उक्तं-तदिन्द्रयाऽनिन्द्रिनिमित्तम्"[1]।

(2) श्रुतज्ञानम्-मतिज्ञानपूर्वकं यज्जानं जायते तद् श्रुतज्ञानं, मतिज्ञानं कारणं, श्रुतज्ञानं च कार्यम्। श्रुतज्ञानस्य मतिज्ञानजन्यत्वात् मतिज्ञानस्य प्रवृत्तिः विद्यमानं वस्तूनि भवति। श्रुतज्ञानं तु त्रैकालिके विषयं प्रवर्त्तते।

[1] तत्त्वार्थसूत्रम्

(3) **अवधिज्ञानम्**–"अवधिज्ञानं द्विविधं भवति भावप्रत्ययः उपायप्रत्ययश्च। इन्द्रियमनसोः सहाय्यमन्तरा आत्मना साक्षात्रूपिपदार्थानां जायमानं ज्ञानम् अवधिज्ञानम्। "रूपिष्ववधे"[1]।

**बौद्धदर्शने प्रमाणस्वरूपम्**

बौद्धाः अनधिगतार्थज्ञापकं ज्ञानं प्रमाणमुच्यन्ते। दिङ्नागः विशेष्यसारूप्य प्रमाणम्, विषयाकारमर्थनिश्चयं च प्रमाणफलमाह। प्रमाणलक्षणे अविसंवादि पदं निवेशयता धर्मकीर्तिनाऽपि दिङ्नागप्रोक्तलक्षणमेव समर्थितम्। तत्त्वसङ्ग्रहकृता शान्तिरक्षितेन सारूप्ययोग्यता च प्रमाणं विषयाधिगतिः संवित्तिश्च प्रमाणफलमुक्तम्, मोक्षाकरगुप्तोऽपि अपूर्वमर्थं विषयीकुर्वत् सम्यग्ज्ञानं प्रमाणमिति तर्कभाषायां स्वीयायामाह। एवं च बौद्धा अज्ञातार्थज्ञापकमविसंवादिज्ञानं प्रमाणमाहुः। बौद्धानां निकाये प्रमाणफलयोरभेदात् यद्यपि प्रमाणं ज्ञानरूपं तथापि ते विषयाकारितामेव प्रमाणमाहुः। यद्यपि ज्ञानगतसारूप्यं ज्ञानस्वरूपमेव तथापि ज्ञानस्य विषयाकारा परिणतिः जटिलतरा प्रक्रिया। विषयाकारतायाः प्रमाणत्वाभिमतिरत एव न सम्भवति, यतोहि ज्ञानं तदा विषयाकारेण परिणमते यदा तद्विषयकं ज्ञानं प्रागुत्पद्यते। उत्पन्नज्ञानगतसारूप्यस्य प्रमाणत्वस्वीकारे तु नास्त्येव प्रयोजनम्। अस्याः समस्यायाः समाधातुमिष्यते प्रमाणं न तेन सा समाहिता भवति। ज्ञानोत्पत्तये एव तु प्रमाणमपेक्ष्यते, परं तत्तदाऽविद्यमानमेवास्ति। अतश्च विशेषसारूप्यमेव प्रमाणं

---

[1] तत्त्वार्थसूत्रम्

भवितुमर्हति? किं च विषयाकारतायाः प्रमाणत्वस्वीकारे संशयविपर्ययोरपि प्रामाण्यं स्यात् तयोरपि विषयाकारत्वात्।

**न्यायवैशेषिकदर्शनयोः प्रमाणस्वरूपम्**

न्यायदर्शने प्रमा प्रमिति यथार्थानुभवः विद्यते पर्यायभूताः शब्दाः।

'प्रमीयते ज्ञायते इति प्रमा'[1] इति भावव्युत्पत्तिमङ्गीकृत्य सूत्रकारेण महर्षिगौतमेन प्रथमसूत्रान्ते तत्त्वज्ञानात् निःश्रेयसाधिगमः इति प्रतिपादितम् तेन स्पष्टं भवति यत् महर्षिणा निःश्रेयसोपायत्वेन तत्त्वज्ञानस्योपदेशः कृतः। ततः परं द्वितीये सूत्रे "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"[2] तत्त्वज्ञानात् मिथ्याज्ञानस्य नाशो उपदिष्टः। अत्र तत्त्वज्ञानं प्रमात्मकं यथार्थानुभवरूपं ज्ञानमेव इति सूत्रकारस्याशयः सुदृढमेव। न्यायभाष्यकारः आचार्यवात्स्यायनो उपलब्धिसाधनानि प्रमाणानि इति भाषितवान्। अत्रोपलब्धिपदं बुद्धिर्ज्ञानमिति अनर्थान्तरम्। यथा सूत्रकारैः 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्'[3] प्रमा रूपेण प्रयुक्तस्य ज्ञानस्य निर्विकल्पकस्याभावात्। अत्रोपलब्धिपदेनार्थविषयकं ज्ञानत्वरूपं प्रमात्वमेव भाष्यकारेण स्वीकृतमित्युपलभ्यते। भाष्यकारः वदति 'यत् तदर्थविज्ञानं सा प्रमिति'।[4] व्याख्याकारः आचार्यवाचस्पतिमिश्रः तात्पर्यटीकायामपि

---

[1] तर्कभाषा परिच्छेदः

[2] न्या. द. $^{1}/_{2}$ 1, 2

[3] न्या. द. $^{1}/_{2}$15

[4] न्या. भा. 2

अर्थविषयकज्ञानमेव प्रमेति उक्तवान् - अप्रमायां स्मृतौ चातिव्याप्ति वारणाय व्यभिचारिस्मृतिभिन्नं ज्ञानं प्रमा इति प्रमा लक्षणं परिष्कृतवान्। आचार्यवात्स्यायनः वदति 'यत् तदर्थविज्ञानं सा प्रमिति'[1]

वैशेषिकदर्शने प्रमा विद्या पदेन व्याख्याता। अविद्या भ्रमरूपा। अतः विद्या एव प्रमेति उक्तम्- 'दोषरहितं ज्ञानं विद्येति। अदुष्टं विद्या' इति सूत्रकारैः सूत्रं निर्दिष्टम्। न्यायकुसुमाञ्जलौ यदुक्तम् - 'यत्र यदस्ति तत् तस्यानुभव प्रमा' इत्येन तद्वति तत्प्रकारकानुभवः प्रमा इति प्रमालक्षणम्। न्यायमते चतुर्विधं प्रमाणम् - "न्यायशास्त्रे प्रत्यक्षानुमानोपमानशब्दभेदेन प्रमाणं चतुर्विधम्। अर्थापत्यादेः यथायथं एषु प्रमाणेषु अन्तर्भावात् चत्वारि प्रमाणानि प्रसिद्धानि सन्ति। तथा च सूत्रम्- 'प्रत्यक्षानुमानोपमानशब्दः प्रमाणानि'[2] इति।

न्यायमते प्रत्यक्षप्रमाणम् - इन्द्रियस्यार्थेन सह सन्निकर्षात् यद् ज्ञानमुत्पद्यते तत् प्रत्यक्षम्। तथा च गौतमसूत्रम्- 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'[3] इति। ज्ञानसामान्यकारणसामग्र्यां आत्ममनःसंयोगः मनः इन्द्रियसंयोगादिरूपायां सत्याम् अस्य प्रत्यक्षज्ञानासाधारणतया अनुमानादिभ्यः भेदमुपदर्शयत अत्रैव लक्षणमुक्तम्। न तावत् एतावदेव प्रत्यक्षकारणमिति मन्तव्यम्। चक्षुः सन्निकृष्टेषु मरुमरीचिकाषु जायमानस्य उदकमिति ज्ञानस्य भ्रमात्मकस्य

---

[1] न्या. भा. पृ. 19

[2] न्या. सू. 1/1/3

[3] न्या. द. 1/1/4

प्रत्यक्षत्ववारणाय अव्यभिचारीति पदम्। अतस्मिंस्तदिति ज्ञानं व्याभिचारि। तस्मिंस्तदिति ज्ञानमव्यभिचारि। एतेषां मते अनुभवस्य प्रमात्वेन अप्रमात्वेन च द्वैविध्याङ्गीकारात् प्रत्यक्षज्ञानस्य यथार्थनुभवविषयत्वाच्च अव्यभिचारित्वं तेन भाषितमिति।

अत्र सुखादिव्युदासार्थं ज्ञानपदम्। अन्यथा इन्द्रियार्थसन्निकर्षात् भवतो सुखदुःखयो अतिव्याप्तिः स्यात्। अत्र सूत्रस्थव्यपदेश्यपदेन निर्विकल्पकप्रत्यक्षं व्यवसायात्मकमित्यनेन सविकल्पकप्रत्यक्षं चोच्यत इति वाचस्पतिमिश्रः, तत् तु अन्यैः नाङ्गीकृतम्। अत्र 'ज्ञानग्रहणं विशेष्यनिर्देशार्थम्'[1] इति। यत् इन्द्रियार्थ सन्निकर्षोत्पन्नत्वादीनां विशेषतया ज्ञानग्रहणमिति न्यायमञ्जर्यां जयन्तभट्टेनोक्तं तत् नोचितं प्रतिभाति। सुखादिष्वतिव्याप्तिवारकत्वरूपस्य विशिष्टप्रयोजनस्य विद्यमानत्वात्। ज्ञानस्य विशेषतया अन्वयश्च कथञ्चिदपि अनुपालनीयः। "इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणैः न स्वरूपं, नापि सामग्री वा विशेष्यते"[2]

न्यायमते अनुमानप्रमाणम्

प्रत्यक्षनिरूपणानन्तरं तदुपजीवकत्वात् बहुवादिसम्मतत्वाच्च अनुमानं निरूप्यते[3]। तथा च गौतमसूत्रम् 'अथ तत्पर्वूकं त्रिविधमनुमानम् पूर्ववत् शेषवत्

---

[1] न्या. भा. 74

[2] न्या. भा. 65

[3] त. चि. 4

समान्यतो दृष्टं च'[1] इति। अत्र समानासामानजातीयेभ्यः व्यवच्छेदाय तत्पर्वूकमिति। अथवा ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षम्। ते च, लिङ्गलिङ्गिसम्बन्धदर्शनं प्रथमं प्रत्यक्षम् लिङ्गदर्शनं च द्वितीयं प्रत्यक्षम्। पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणमिदमन्तिमप्रत्यक्षं लिङ्गपरामर्शरूपमनुमानं सम्पद्यते इति वार्तिककारः।[2] अनुमानपदार्थश्च अनुमीयते अनेनेति। तात्पर्यटीकायामपि अयमेव प्रकारः विपुलतया विवृतः।[3] वस्तुतस्तु लिङ्गविषयं ज्ञानं ज्ञानविषयीकृतं वा लिङ्गं प्रतिबन्धस्मरणसहितमनुमानम्। परोक्षः अर्थः लिङ्ग्यते गम्यतेऽनेनेति लिङ्गम्। लिङ्गमिदं पञ्चलक्षणम्। तानि च लक्षणानि पक्षधर्मत्वं सपक्षसत्त्वं, विपक्षादव्यावृत्तिरूपं, अबाधितत्वम्, असत्प्रतिपक्षत्वं चेति जयन्तभट्टः न्यायमञ्जर्याम् -

पञ्चलक्षणकाल्लिङ्गात् गृहीतान्नियमे स्मृतेः।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते।[4]

मणिकारस्तु अनुमानस्वरूपमेवं न्यरूपयत् - 'तत्र व्याप्तिविशिष्टपक्षधर्मता ज्ञानजन्यं ज्ञानमनुमितिः तत्करणमनुमानम्। तच्च लिङ्गपरामर्शो न तु परामृश्यमानं

1 न्या. द. 1/5
2 न्या. वा. 292
3 ता. टी. 303
4 न्या. भा. 109

लिङ्गमिति'[1] इति। व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यं ज्ञानमनुमितिः। तादृशप्रमाकरणमनुमानम्।

केशवमिश्रेणापि लिङ्गपरामर्श एव अनुमानमित्यपि तर्कभाषायाम् उक्तम् "येन अनुमीयते तदनुमानम्। लिङ्गपरामर्शेन चानुमीयते। अतः लिङ्गपरामर्शोऽनुमानम्"[2]। अनुमितौ व्याप्तिज्ञानस्यैव करणत्वम्। परामर्शः व्यापारः। ज्ञायमानस्य लिङ्गस्य नैव करणत्वम्। अनागतेन अथवा विनष्टेन लिङ्गेन अनुमित्यनुत्पादात् इति विश्वनाथन्यायपञ्चाननः।[3]

**न्यायमते उपमानप्रमाणम्**

नैयायिकानां मते यथार्थज्ञानस्य तृतीयं करणमस्ति उपमानप्रमाणम्। प्रसिद्धवस्तुनः साधर्म्यात् साध्यसाधनं किं वा प्रसिद्धस्य कस्यचिद्वस्तुनः सादृश्येन अप्रसिद्धस्य वस्तुनः सादृश्यमवधार्य प्रकटनम् उपमानमिति न्यायसूत्रकृतां मतम् विषयोऽयं स्पष्टतया भाष्यकृता वात्स्यायनेनाभिहितः - ज्ञातस्य वस्तुनः सादृश्यबलेन ज्ञापनीयस्य वस्तुनो ज्ञानमुपमानम्। सञ्ज्ञा सञ्ज्ञिसम्बन्धप्रतीतिश्चास्य प्रयोजनम्। तद्यथा 'गौरिव गवयः' इति श्रुत्वाऽरण्यकेन पुरुषेण तत्र कस्मिंश्चित् पशुपिण्डे गोगतधर्मानवलोक्य 'अयमेव गवयः' इत्यवधारणमुपमानम्। सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानं चेदमुपमानमिति।

---

[1] त. चि. 20/21

[2] त. भा. 36

[3] मुक्तावली 471

तत्र गोसादृश्यविशिष्टपिण्डदर्शनं यत्कारणं तदेवोपमानप्रमाणम् 'गौरिव गवयः' इत्यतिदेशवाक्यार्थस्मरणं च तत्रावान्तरव्यापारः। अत्र गोसादृश्यविशिष्टपिण्डः सञ्ज्ञी गवय इति च तस्य सञ्ज्ञा तयोः सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिः (गवयो गवयपदवाच्यः) इति उपमितिः प्रमा। नैयायिकानां मते सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिमुपमितिमभिधायकतत्करणमुपमानं त्रिधा. विभक्तम् –

1. **सादृश्यविशिष्टपिण्डदर्शनम्**

2. **वैधर्म्यविशिष्टपिण्डदर्शनम्**

3. **असाधारणधर्मविशिष्टपिण्डदर्शनञ्चेति।**

आचार्यविश्वनाथः सादृश्यज्ञानस्य स्थाने सादृश्यदर्शनमुपमितिकरणमाह। अस्मिन् मते सादृश्यदर्शनं करणम्, अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः 'गवयो गवयशब्दवाच्यः' इति ज्ञानं च तस्य फलम्।

अत्रेदं ध्यातव्यम् – 'पुरोदृश्यमानो गोसदृशोऽयं पशुपिण्डे गवयसञ्ज्ञकः इति ज्ञानं नोपमानमिति, किन्तु 'गवयो गवयपदवाच्यः' इति ज्ञानमुपमितिः, अन्यथा कालान्तरे गवयान्तरं पश्यतो 'गवयोऽयम्' इति प्रतीतिर्न प्रत्यक्षं स्यात्, किन्तु सर्वत्रोपमितिव्यवहारापत्तिरेव स्यात्। न च सर्वत्र गवयदर्शने सति अतिदेश वाक्यार्थस्मरणं सादृश्यज्ञानादि च भवति। अतश्च गवयोऽयं गवयपदवाच्यः' इति प्रतीतिरुपमितिः न तु 'पुरो दृश्यमानोऽयं गवयः' इति प्रतीतिः।

**न्यायमते शब्दप्रमाणम्**

न्यायदर्शने यथार्थज्ञानसाधनेषु शब्दश्चतुर्थ प्रमाणम्, शाब्दबोधरूपयथार्थज्ञानकरणं शब्दनाम प्रमाणमुच्यते। अयमेव 'आप्तवाक्यम्' आगमः इति चाभिधीयते। न्यायसूत्रकारो गौतमः आप्तोपदिष्टशब्दं प्रमाणमाह। परवर्तिभिस्तु आचार्यैः किञ्चित् परिवर्त्य 'आप्तवाक्यं शब्द प्रमाणम्' इत्युक्तम्। येन धर्मः साक्षात्कृतः स ऋषिर्वा आर्यो वा म्लेच्छो वा आप्तो भवति इति भाष्यकारो वात्स्यायन अभाषत्। परिशुद्धावुदयनाचार्यस्तु न्यायसारमतमेवमनुवदति। समयसामर्थ्यवशात् सम्यक् परोक्षानुभवसाधनं शब्द इति।

वैशेषिकास्तु शब्दस्य पृथक् प्रमाणत्वं नाभ्युपगच्छन्ति। अपि तु अनुमान एव तमप्यन्तर्भावयन्ति। तत्त्वचिन्तामणिकारेण गङ्गेशोपाध्यायेन शब्दलक्षणमेवं प्रत्यपादि। 'प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्' इति। विश्वनाथन्यायपञ्चाननस्तु पदज्ञानमेव शब्दप्रमाणं पदजन्यपदार्थस्मरणं व्यापारः, शक्तिज्ञानं सहकारिकारणं, शब्दबोधः फलमिति च निरूपयामास। अन्नम्भट्टेन आप्तवाक्यस्य शब्दत्वमुक्तम्। यथार्थवक्ता आप्त इत्युक्तः। एवं च नैयायिकानां शब्दप्रमाणम् आप्तोपदेशत्वं च तस्य लक्षणमिति फलितम्।

**मीमांसादर्शने प्रमाणस्वरूपम्**

प्रभाकरमते - अयथार्थानुभवः एव नास्ति। अतः यदनुभव स यथार्थ एवेति अनुभूतिरेव प्रमा। सा चानुभूतिः स्मृतिभिन्ना। स्मृतेरनुभवत्वाभावात्। स्मृतिः न

प्रमाणम्। अनुभूतिः प्रमाणम् तत् स्मृतिभिन्नम्, स्मृतिः पुनः पूर्वविज्ञानं संस्कारमात्रजं ज्ञानमुच्यते।

न प्रमाणं स्मृतिपूर्वं प्रतिपत्तिरपेक्षणात्।
अन्योन्यनिरपेक्षस्तु धारावाहिकबुद्धये।।[1]

प्रभाकरमतानुसारेण ज्ञानं द्वयोः ज्ञानयोः समीक्षणं भवति। यथा – "अयं सर्पः" इत्याकारकं यद् ज्ञानं भवति, तत्र द्वयोः भिन्नयोः ज्ञानयोः समावेशः भवति। तत्रादौ अयमित्याकारकं, द्वितीयं 'सर्पः' इत्याकारं ज्ञानं भवति। अत्र द्वितीये ज्ञाने प्रमारूपे एव अयमित्यस्य ज्ञानं अयमित्याकारकेन एव भवति, सर्पज्ञानं सदैव सर्परूपेणैव। अत्र 'अयम्' इति ज्ञानं प्रत्यक्षविषयः, 'सर्पः' इति ज्ञानं स्मृतिविषयः। कुमारिलभट्टमते – कुमारिलभट्टमीमांसकाः प्रमाकरणं इति परिभाषायाम् दोषं दर्शयन्ति श्लोकवार्तिके प्रमायाः लक्षणं प्रतिपादयन्ति यत् विषयस्य तत् निश्चयात्मकं ज्ञानं यस्य प्रमाण्यावधारिणे कथञ्चिदपि ज्ञानान्तरस्यापेक्षा नैव भवति सा प्रमा।

पार्थसारथिमिश्रानुसारेण – तदेव ज्ञानं प्रमा यत् कारणदोषरहितत्वे सति बाधज्ञानरहितत्वमनधिगतं च स्यात् यथा– 'कारणदोषबाधकज्ञानरहितमगृहीतग्राहीज्ञानं

---
[1] प्र. प. 1/4

प्रमाणम्'[1] अर्थात् तदेवज्ञानं प्रमा भवितुमर्हति यस्य कारणे न कोऽपि दोषः स्यात् प्रमाणान्तरेण बाधोऽपि न स्यात् अनधिगतञ्च स्यात्।

भट्टमते तु प्रमा प्रमिति यथार्थानुभवः इत्यनर्थान्तरम्। धर्मचोदनायाः प्रामाण्यं व्यवस्थापयद्भिः पूर्वमीमांसासूत्रकारैः **'अव्यतिरेकं अर्थस्यानुपलब्धित्वं पुरुषनिरपेक्षत्वमिति हेतुत्रितयमुपदर्शितम्।'**

यथा- **'अव्यतिरेकाश्चार्थेऽनुपलब्धे तत्प्रमाणं वादरायणस्यानपेक्षत्वात्'** [2] इत्यनेन पदेनोच्यते। प्रमाणान्तराज्ञातत्वमर्थस्यानुपलब्धत्वमित्येनाभिधीयते। शब्देन कुमारिलभट्टेनापि श्लोकवार्तिकेऽपि प्रमा स्वरूपं न भावार्थकतया अपि च प्रमाण परत्वेन प्रयुक्तः।

**मीमांसामते प्रत्यक्षप्रमाणम्**

भाट्टसिद्धान्तः - मीमांसासूत्रकारस्य भगवतो जैमिनेः मतानुरोधेन इन्द्रियाणां विषयैः सह सति संयोगे पुरुषस्य जायते या बुद्धिः तत्प्रत्यक्षमुच्यते तथा च सूत्रम् - **'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भत्वात्'** इति। यथाश्रुतसूत्रात् एवमेवगम्यते इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति। तथा सति भ्रमात्मकज्ञानेऽपि प्रत्यक्षलक्षणस्यातिव्याप्तिः स्यात्। पुरोवर्तिपदार्थस्य चक्षुषा सह संयोगे सति हि भ्रम उपजायते। अतः अत्र तत्सतीः

---

[1] शाब्दी 2/80

[2] मीमांसा 5/1/1/5

व्यत्ययं कृत्वा स एवं वारितः। यथा – 'तत्सप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्यसत्प्रत्यक्षम् इति अत्र तदिति तृतीयान्तमव्ययम्। तेनेति यावत्। न च साक्षात्कारसम्प्रयोगजत्वोक्तावेव कुत्रापि व्यभिचारासंभवात् तत्सतोर्व्यत्ययः अनावश्यक इति वाच्यम्। पीतशङ्खद्विचन्द्रादिज्ञाने अतिव्याप्तिवारकतया तत् सार्थक्यसम्भवात्।

मानमेयोदयकारः नारायणस्तु 'तत्र इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षम् इति प्रत्यक्षलक्षणमभ्यधात्। इन्द्रियं च प्रमाणमित्यभिप्रायेण गङ्गाभट्टस्तु भाट्टचिन्तामणौ त्रीणि लक्षणानि प्रत्यक्षप्रमायाः उक्तवान् यथा- 'इन्द्रियार्थसम्बन्धजन्य ज्ञानं प्रत्यक्षमिति सूत्रकारः'।

'ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्।

जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा।।' इति

नवीनैरपि मीमांसकैः भाट्टमतावलम्बिभिः एवमेव प्रत्यक्षप्रमायाः लक्षणं प्रतिपादितम्।

**प्राभाकरसिद्धान्ते प्रत्यक्षप्रमाणम्**

प्राभाकरैः नैयायिकोक्तं प्रत्यक्षलक्षणं नाभ्युपगतम् तत्र तैः दोषाः उद्भाविताः। 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति खलु प्रत्यक्षस्य लक्षणं नैयायिकैरुच्यते। सजातीयविजातीयभेदकं हि नाम लक्षणम्। शब्दाद् भेदस्य इन्द्रियार्थसन्निकर्षजं प्रत्यक्षमित्यनेनैव सिद्धत्वात् नात्र

तत् प्रस्तावमर्हति। शब्दस्य सर्वस्य अनुमानशङ्का यथा शब्दपरीक्षाप्रकरणे प्रतिपाद्यते तथा शब्दसंकल्पनानुबिद्धस्य प्रत्यक्षस्य शाब्दत्वशङ्कापि तत्रैव निराकरणीया। अतः निरर्थकमत्र **'प्रत्यक्षलक्षणगतमव्यपदेश्यपदमिति'** एवमेवाव्यभिचारिपदमपि विपर्ययदूषणायेति नैयायिकमतं नैव घटते। प्राभाकरमते सर्वज्ञानानामव्यभिचारिरूपत्वात्।

अपि च तन्मते संशयवारकं व्यवसायात्मकपदमपि निरर्थकम्। **'स्थाणुर्वा पुरुषो वेति हि स्मृतिरूपज्ञानद्वयम्'**। **'साक्षात्प्रतीति प्रत्यक्षम्'** इति प्रत्यक्षलक्षणम्। न चैवं भावनाप्रकर्षपर्यन्तजा स्मृतिरिति साक्षात्कारवतीति सापि प्रत्यक्षं प्रसज्यते इति वाच्यम्। प्रमाणाधिकरणबलात् तद्वारणस्य सुलभत्वात्। तथा हि अनुभूतिः प्रमाणं तद्विशेषं च प्रत्यक्षमिति स्मृतेः तत्राप्रवेशात् न प्रत्यक्षत्वापत्तिः। अनुभूतेः स्मृतिव्यतिरिक्तायाः प्रागेव व्यवस्थापितत्वात्। प्रभाकरविजये नन्दीश्वरैस्तावत् साक्षात्वमिदं प्रत्यक्षलक्षणघटकं द्विधा व्याख्यातम्। यथा –

**'साक्षात्प्रतीतिः स्वरूपप्रतीतिः। स्वस्यैव रूपं स्वरूपम् असाधारणरूपमित्यर्थः।'** 'यद्वा' अव्यवहितप्रतीतिः साक्षात्प्रतीतिः। अव्यवहितत्वं नाम स्वविषयान्तर्गतज्ञानान्तराव्यवहितत्वमभिप्रेतम्। 'साक्षात्वं स्वकालकलितवस्तुसत्त्वावबोधकत्वं यत्कालीनं ज्ञानं तत्कालसम्बन्धिवस्तुविषयामित्यर्थः' इति।

अत्रायं विशेषः। चोदना प्रमाणमिति नियमप्रतिष्ठापनार्थं लौकिकवाक्याप्रमाण्यं सर्वज्ञानयथार्थतावादम् अथवा अख्यातिवादम् उपस्थापयन्ति प्राभाकराः। प्रमाणत्वेन तथा अभ्युपगता चोदनैव धर्मे प्रमाणमिति। सिद्धान्तव्यवस्थापनार्थं च धर्मे प्रत्यक्षस्य अप्रामाण्यं प्रतिपादयितानाम् एव साक्षात्प्रतीतिः प्रत्यक्षमिति तल्लक्षणकरणाभिनिवेश इति। तन्त्ररहस्यकारस्तु 'साक्षात्प्रतीतिः प्रत्यक्षम्'। साक्षात्वं चापरोक्ष्यं विषयावभास इति। तच्च सर्वसंवित्तीनामात्मस्वात्मांशयोः इत्येवं व्यवारीत् प्रत्यक्षलक्षणम्।

**भाट्टसिद्धान्ते अनुमानप्रमाणम्**

भाट्टमतानुरोधमिदमनुमानप्रमाणलक्षणम्। यथा शबरस्वामिः 'अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनात् एकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिः' इति। अयं भावः अत्र अनुमानशब्दः अनुमितिपरः। ज्ञातहेतुहेतुमदोः व्याप्त्याख्यासम्बन्धः येन प्रमाता जनेन तस्येति विग्रहः। हेतुहेतुमत्सम्बन्धाख्यव्याप्तिज्ञानवन्तः प्रमातारः इत्यर्थः। एकदेशदर्शनात् धूमात्मकलिङ्गदर्शनात् एकदेशान्तरे वह्न्यात्मकलिङ्गिनि असन्निकृष्टे इन्द्रियसम्प्रयोगरहिते पदार्थे या बुद्धिः तदनुमानमिति। एतदेव शास्त्रदीपिकायां पार्थसारथिमिश्रेणापि अनुमानलक्षणं प्रतिपादितम्। मानमेयोदयकारस्तु अन्यथा अनुमानमिति लक्षितम्। यथा- 'व्याप्यदर्शनाद् असन्निकृष्टार्थज्ञानमनुमानम्। यथा पर्वते धूमवत्त्वदर्शनात् अग्निमत्त्वज्ञानम्' इति। माधवसरस्वती तु सर्वदर्शनकौमुद्याम् भणति- 'तत्र व्याप्यव्यापकां- शरूपनुमानम्। तत्र व्याप्यांशेन व्यापकांशोऽनुमीयते'।

**अनुमानभेदाः**

यथा शाबरभाष्यम् अनुमानं प्रत्ययतो दृष्टसम्बधं सामान्यतोदृष्टसम्बन्धं चेति द्विविधम्। धूमात् कृतिदर्शनादग्न्याकृतिज्ञानं प्रथमस्य, देवदत्तस्य देशान्तरप्राप्तिं गतिपर्वकमुपलभ्य सूर्यगत्यनुमानं द्वितीयस्य चोदाहरणम्।

तदनन्तरकालिकैः इदमेवानुमानं स्वार्थपदार्थरूपेण विभक्तम्। असूचि च तथैव पार्थसारथिमिश्रेणापि स्वार्थपरार्थविभागः तादृशशब्दप्रयोगं विनैव शास्त्रदीपिकायाम्। अभ्यधायि च मानमेयोदयेऽपि अयं विभागः नारायणेनैवम्, यथा – 'तच्चानुमानं स्वार्थपरार्थभेदेनाऽपि द्विविधमाहुः। यत्तु स्वयमेव धूमादिकं दृष्ट्वा व्याप्त्यादिनिरूपणेनानुमीयते तत् स्वार्थम्'।

यदा पुनः स एवार्थः परवाक्येन बोध्यते।
तदा परार्थमित्याहुः तयोरेतावती भिदा।।

गङ्गाभट्टेनापि भट्टचिन्तामणौ स्वार्थपरार्थभेदेन अनुमानद्वैविध्यमुपन्यस्तम् माधवसरस्वती तु अन्वयव्यतिरेकी केवलान्ययिभेदेन द्विविधमनुमानमित्यवादीत् सर्वदर्शनकौमुद्याम्।

**प्रभाकरमते अनुमानप्रमाणम्**

शबरस्वाम्युक्तमनुमानलक्षणं परिगृह्य बृहत्यां प्रभाकरगुरुरेवं व्याचख्यौ यथा – 'अनुमानमेकदेशदर्शनात् एकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिः'। कस्यैकदेशस्य दर्शनात्? ज्ञातसम्बन्धस्य इति। प्रकरणपञ्चिकायां शालिकनाथस्तु यस्य

सम्बन्धनियमः ज्ञातः तस्यैकदेशस्य दर्शनात् असनिकृष्टे पदार्थे एकदेशान्तरे यद् ज्ञानं जायते तदेवानुमानमित्येवं वर्णयामास। अत्र एकदेशस्येत्यनेन हेतुः, एकदेशान्तर इत्यनेन साध्यं च अभिधीयते। असन्निकृष्टपदं स्मरणाभिमाननिरसनायेति अत्र दर्शनशब्देन निश्चय इत्येवार्थलाभः। अतः एवार्थापत्तितः अनुमानस्य वैलक्षण्यं प्रतिपादितं भवति। प्रत्यक्षवत् प्रसिद्धतया बहुवादिसम्मतत्वाच्च प्रत्यक्षानन्तरमवेदमनुमानं निरूपयति इति नयविवेके भवनाथः। शाबरभाष्ये अनुमानलक्षणमनेन प्रभाकरसिद्धान्तरीत्या सुबहु विचारितम्।

एवं च समानाश्रयाश्रितयोः एकदेशिनोः ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् एकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः अनुमानमिति फलितम्। इदमेव लक्षणं भङ्ग्यन्तरेणोपायादि तन्त्ररहस्ये। इयान् विशेषः अत्र शाबरभाष्यवाक्यस्यार्थ-ज्ञातसम्बन्धनियमस्य एकदेशस्येति वर्णितं प्रभाकरभाट्टैः।

अनुमानभेदाः

शाबरभाष्यानुरोधमनुमानं द्विविधम् प्रत्यक्षतो दृष्टसम्बधः सामान्यतो दृष्टसम्बन्धः चेति। धूमाकृतिविज्ञानादन्याकृतिविज्ञानं प्रथमस्य गतिपूर्विकां देवदत्तस्य देशान्तरप्राप्तिमभिलक्ष्य सूर्येऽपि गतिस्मरणं द्वितीयस्य च क्रमेणोदाहरणं भवति।

इदं च द्विविधम् प्रमेयद्वैविध्यमनुपलक्ष्येति प्रभाकरगुरुः। विशेषात् विशेषावगतिरेकत्र, अन्यत्र च सामान्यत सामान्यवगतिरिति तस्याभिप्रायः। एवं च अनुमानस्य प्रमेयं द्विधा भिद्यत इति। यथोक्तं प्रकरणपञ्चिकायां 'प्रमेयमनुमानस्य

दृष्टादृष्टस्वलक्षणम्' इति। दृष्टस्वलक्षणं यथा- वह्न्यादिः। अदृष्टस्वलक्षणं यथा-कर्मादि।

वस्तुतः अनुमानं द्विधा समुत्पद्यमानं सत् भिद्यते स्वार्थानुमानं परार्थनुमानञ्चेति। स्वयमनुमानोत्पादकसामग्र्या अवगम्यमानं प्रथमम्। इतरप्रयुक्तवाक्यबोधितं च द्वितीयमिति शालिकनाथः प्रकरणपञ्चिकायां प्रतिपादितवान् शालिकनाथोक्तमेव अनूदितवान् रामानुजाचार्यः तन्त्ररहस्ये।

भाट्टसिद्धान्तमते शब्दप्रमाणम्

भाट्टमतानुरोधेन शब्दप्रमाणं निरूप्यते। गृहीतपदपदार्थसमष्टिमतः पुरुषस्य कतिचित्पदश्रवणानुपदं पदार्थस्मृतौ समुत्पन्नायां स्मृतेस्तैः पदार्थैः अज्ञातबाधितार्थविषयकं यद्विशिष्टं वाक्यार्थज्ञानमुत्पद्यते सैव शाब्दी प्रमेत्याख्यायते। तादृशप्रमाजनकशब्दः प्रमाणं भवितुमर्हति। शब्दज्ञानजन्यं व्यवहितार्थविषयकं यथार्थज्ञानं शब्दज्ञानम्, तत्करणं शब्दप्रमाणम् इति भाट्टचिन्तामणौ गङ्गाभट्टः प्राह। ननु शाबरभाष्ये शास्त्रं शब्दविज्ञानात् इत्यादिशब्दसामान्यलक्षणो शास्त्रपदं प्रयुक्तम्। शास्त्रमिति खलु शब्दविशेषस्य मीमांसाशास्त्रे व्यवहारः। शास्त्रलक्षणं चैव कुमारिलभट्टैः अभ्यधायि श्लोकवार्तिके यथा -

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्यते तच्छास्त्रमभिधीयते[1]।।

---

[1] श्लोकवार्त्तिकम्.पृ-288

अतः कथं नाम तदुपपद्यत इति चेत्-वेदप्रामाण्यप्रतिष्ठापनार्थं वेदार्थविचारार्थं च शब्दविशेषस्य शास्त्रस्यैव मीमांसकैः वस्तुमुचितत्वात्। चोदनोपदेशशब्दाभ्यां तस्यै प्रस्तुतत्वात्। वेदप्रामाण्ये तदर्थविचारे वा अनुपयोगित्वेऽपि शास्त्रैकवाक्यतया अन्येषामपि लौकिकशब्दानां उपचारात् शास्त्रत्वमभ्युपगम्यात्र शब्दसामान्यलक्षणमुच्यते। किञ्च अत एव मीमासंकैः मीमांसाशास्त्रपर्यायतया च 'शास्त्रम्' इति व्यवहारः क्रियते। वस्तुतः 'विधायकशब्दविज्ञानात् असन्निकृष्टेऽर्थे धर्माधर्मलक्षणे विज्ञानं शास्त्रम्' इति सिद्धान्तचन्द्रिकाकारः रामकृष्णः न्यरूपयत्।

**प्रभाकरसिद्धान्तमते शब्दप्रमाणम्**

मीमांसका हि शब्दशास्त्रमिति व्यवहरन्तीति प्रागवोचम्। शाबरभाष्यानुरोधं तस्य शास्त्रस्येदं लक्षणम्। यत् - 'शास्त्रं शब्दविज्ञानात् असिन्नकृष्टेऽर्थे विज्ञानम्' इति। अत्र प्रभाकरः किं शब्दाद्विज्ञानम् शब्दविज्ञानम्? उक्त शब्दे एव विज्ञानं शब्दविज्ञानम् इति विकल्पद्वितीयात्पक्षात् प्रेरणां न किमप्यवगम्यते। प्रेरणां नाम शास्त्रम्। यस्मात् शासनमवगम्यते तच्छास्त्रम्। शासनात् खलु शास्त्रमिति व्यपदिश्यन्ति लोके। शब्दात् अर्थे यत् विज्ञानमुत्पद्यते तत् शब्दविज्ञानम्। तत्र विशेषोऽवगतौ कारणं शास्त्रमित्युक्तम्। लक्षणं हि सर्वदा लक्ष्यानुरूपं भवति। अत्र लक्ष्यं शास्त्रम्। अतस्तदनुरूपं हि लक्षणं वक्तव्यम्। तथा च पञ्चमीसमास एवाश्रयणीयः इति।

शालिकनाथस्तु प्रकरणपञ्चिकायां शास्त्रलक्षणमेवमभिदधे। यथा– 'शब्दविज्ञानापेक्षात् आत्मनः सन्निकर्षात् यददृष्टार्थविषयं विज्ञानं तच्छास्त्रं नाम प्रमाणम्' इति। अन्विताभिधानवादिनां प्राभाकराणां अयमभिप्रायः यदान्वितार्थप्रतिपादकैः आकांक्षादिविशिष्टैः पदैः अन्वयस्याप्यभिधानमिति। अर्थस्वरूपे अन्वये च पदस्यैव शक्तिः किन्तु इयान् विशेषः पदार्थांशे ज्ञाता शक्तिः कारणमुच्यते।

तन्त्ररहस्ये रामानुजाचार्यस्तु 'सम्बन्धग्रहणद्वारा अर्थप्रत्यायकः पदसमूह एव शाब्दम्' इति शब्दप्रमाणं लक्षयति। तदैव प्रत्यक्षाद्यसंनिकृष्टार्थं शास्त्रमित्युच्यते।

**भाट्टसिद्धान्तेः उपमानप्रमाणम्**

भाष्यकारेण शाबरस्वामिना उपमानलक्षणमेवभ्यधायि यथा – 'उपमानमपि सादृश्यमान् सन्निकर्षेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्य इति पूर्वानुभूतेः स्मर्यमाणोऽर्थे दृश्यमानार्थदृश्यज्ञानं उपमानमिति। यथा 'या नगरे अस्माभिः दृष्टाः गौः सा गवयेनानेन सादृशीति सादृश्यज्ञानम्।'

**प्राभाकरसिद्धान्ते उपमानप्रमाणम्**

दृश्यमानसादृश्यजन्यं गवयसादृश्यं ज्ञानमुपमानमिति उपमानलक्षणं फलितम्।

दृश्यमानार्थसादृश्यात् स्मर्यमाणार्थगोचरम्।
असन्निकृष्टसादृश्यज्ञानं ह्युपमितिर्मता।।

गोस्मरणस्येति अनुभूतयोः पुरुषस्येत्यर्थः।

यथोक्तम् शालिकनाथेन ऋजुविमलापञ्चिकायाम् –

सादृश्यात् दृश्यमानाद्यत् प्रतियोगिनि जायते।

सादृश्यविषयं ज्ञानं उपमानं तदुच्यते[1]।।

भट्टमते अर्थापत्तिप्रमाणम्

अर्थापत्तिरपि पञ्चमप्रमाणम्। अभाषि च तत्स्वरूपमेवं भाष्यकारेण शबरस्वामिना। यथा 'अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना। यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना' इति। अन्यथानुपपत्तिं प्रमाणान्तरेण प्रमितस्यार्थविशेषस्य अर्थान्तरेण विना जायमानमनुपपत्तिं विभाव्यं तदुपपत्यर्थं कस्यचनार्थस्य कल्पनां अर्थापत्तिरिति फलितम्। अत्र प्रमाणाद्वयविरोधः अनुपपत्तिः यथा–साधारणप्रमाणेन गणितागमादिना देवदत्तस्य जीवने गृहे बहिर्वा निश्चिते। सति, गृहे आसतः तस्य जीवतः बहिर्भावकल्पना विना नोपपद्यते जीवनमिति जीवनं बहिर्भावकल्पनां कल्पयतीति सा अर्थापत्तिः।

प्राभाकरसिद्धान्ते अर्थापत्तिप्रमाणम्

अर्थापत्तिशब्दः अर्थस्य आपत्तिः कल्पना यस्मादिति व्युत्पत्त्या प्रमाणपरम्। अर्थस्यापत्तिरिति तत्पुरुषसमासेन फलपरः। यथा च असत्यामर्थान्तरकल्पनायां यः अर्थान्तरमनुपपन्नं विद्यते सा अर्थापत्तिः। अनुपपत्तिश्चात्र प्राभाकरमते सन्देह एव।

[1] प्रकरणपञ्चिका-146 श्लोक सं.

यथा देवदत्ते जीवति गृहाभावदर्शनेनादृष्टस्य बहिर्भावस्य कल्पनं अर्थापत्तिः। तथा चोक्तं शालिकनाथेन प्रकरणपञ्चिकायाम् –

विना कल्पनयार्थेन दृष्टेनानुपगताम्।

नयतादृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना[1]।। इति

तन्त्ररहस्यकारेणापि अयमेवाशयः विशदीकृतः। 'देवदत्तः जीवन्नपि गृहे नास्ति' इति गृहाभावे दृष्टे श्रुते वा सः जीवनमुपपन्नं कल्पयति च तस्य बहिर्भावम्। अत्र सन्देह एवानुपपत्तिः अनुकल्पिते बहिर्भावे गृहाभावे च निश्चिते। अयं जीवति न वा इति खलु जायते सन्देहः। बहिर्भावे कल्पिते तु तस्य सन्देहस्य प्रशान्तिः। अत्र प्रमाणमर्थसन्देहोत्पादकः अर्थः। प्रमा च बहिर्भावकल्पना। कल्प्यमानश्चार्थः प्रमेयम्। अथवा प्रमितिः प्रमाणमिति रीत्या कल्पनैव प्रमाणम्। विशिष्टज्ञानं तदुत्तरकालीनं फलमिति।

**भाट्टसिद्धान्तेः अनुपलब्धिप्रमाणम्**

अभावलक्षणमेवमभाणि भाष्यकारेण शबरस्वामिना। यथा – 'अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य' इति। भाट्टमतानुरोधं षष्ठं प्रमाणमभावः। अस्यैवानुमानादिप्रमाणपञ्चकप्रवृत्तिप्रतियोगिकः सः अभावः भवति। तथा च प्रवृत्तियोग्यानां प्रत्यक्षादीनां पञ्चानां प्रमाणानां यत्र न प्रवृत्तिः सा

---

[1] प्रकरणपञ्चिका.पृ-272

योग्यानुपलब्धिरित्युच्यते। सा च घटादिभावविषयिणी षष्ठं प्रमाणमिति भाट्टसिद्धान्तः।

**वेदान्तदर्शने प्रमाणस्वरूपम्**

अद्वैतवेदान्तदर्शने प्रमाशब्दस्यार्थः द्विविधो वर्तते। 'यथार्थज्ञानमेव प्रमा' यथार्थज्ञानं पुनः स्मृतिरनुभवभेदेन द्विविधम्। यथा – 'घटं दृष्ट्वाऽयं घटः' इत्याकारकं यज् ज्ञानं तद् यथार्थज्ञानं इयमेव प्रमा। अनेनैव ज्ञानेन मनसि संस्कारः जायते, तत एव कालान्तरे घटः स्मृतिः। स्मृतिः पुनः यथार्थश्चेति प्रमोच्यते। अतः स्मृतिरियं प्रमास्ति न वा इत्यस्मिन् सन्दर्भे विप्रतिपत्तिरस्ति। येषां मते स्मृतिर्नास्ति सा प्रमा। तेषां प्रमालक्षणम् – अनधिगताबाधितविषयज्ञानत्वं प्रमात्वम्'। यद् विषयकं ज्ञानमनधिगताबाधितं च स्यात् सैव प्रमा। यथा – व्यवहारदशायामज्ञातस्य घटस्य यत् ज्ञानं भवति सा प्रमा एव।

**वेदान्तमते प्रत्यक्षप्रमाणम्**

इन्द्रिजन्यं ज्ञानं प्रत्यक्षम् इति नैयायिकाः। वेदान्तिनां मते तु नेदं प्रत्यक्षलक्षणं भवितुमर्हति तथा सति स्मृत्यनुमित्योः अपि मनो रूपेन्द्रियजन्यत्वेन प्रत्यक्षप्रसङ्गात्। विषयेण सह साक्षात्सम्बन्धे सत्येव प्रत्यक्षज्ञानमुदेति इति विषयमवलम्ब्य एव प्रत्यक्षलक्षणं करणीयम् इति केचन वदन्ति। तेषां मते 'विषयजन्यज्ञानं प्रत्यक्षम्'। तदपि न सङ्गतम् मनोविशेष्यकानुमितेः प्रत्यक्षत्वप्रसङ्गात्। विषयजन्य-ज्ञानस्य प्रत्यक्षत्वे विषयस्यैव प्रत्यक्षजनकत्वम् इति वक्तव्यम्। प्रत्यक्षज्ञानविषयत्वं

प्रत्यक्षातिरिक्तज्ञानविषयेषु न वर्तते, प्रत्यक्षज्ञानविषयेषु तु वर्तते इति तदेव प्रत्यक्षजनकतायाः अवच्छेदम् इत्यपि न वक्तव्य। प्रत्यक्षज्ञानावबोधार्थं प्रत्यक्षविषयत्वं ज्ञातव्यम्।

अत्र ज्ञानम् अन्तःकरणवृत्तिः। तथाहि चक्षुरादीन्द्रियद्वारा बहिर्निर्गच्छति अन्तकरणं विषयदेशं गत्वा विषयाकारेण परिणमते, अयं अन्तःकरणस्य विषयरूपेण परिणामः वृत्तिः इत्युच्यते। सा च वृत्तिः इन्द्रियजन्या, इन्द्रियविषययोः संयोगानन्तरं तस्याः उत्पादात्। तया वृत्या घटादिविषयकमावरणं दूरीकृत्य विषयः इन्द्रियगोचरः क्रियते। 'अन्तःकरणवृत्तौ ज्ञानत्वोपचारात् इति'। सा च वृत्तिः इन्द्रियजन्या इति गौणत्वेन ज्ञानपदवाच्यां वृत्तिं प्रति गौणत्वेनैव इन्द्रियाणां करणत्वम्।

वेदान्तमते अनुमानम्

व्याप्तिप्रकारकज्ञानत्वेन व्याप्तिज्ञानजन्या। यदा पर्वतो धूमवान् इत्येवं पक्षधर्मताज्ञानं धूमः वह्निव्याप्यः इत्येवं च धूमविशेष्यकं व्याप्तिप्रकारकं ज्ञानं जायते, तस्माद् पर्वतो वह्निमान् इति अनुमितिर्जायते। अनुमितिकरणं च व्याप्तिज्ञानम्। पक्षधर्मताज्ञानव्याप्तिसंस्कारः एव अनुमतिकारणम्, न लिङ्गपरामर्शः। लिङ्गपरामर्शस्य कारणत्वाभावात् च तस्य करणत्वं निरस्तम्। करणत्वस्य कारणत्व-व्याप्यत्वात्। अनुमानम् अन्वयिरूपम् एकमेव।

अन्वियित्वं च अन्यवसहचारणमात्रगृहीतव्याप्तिकत्वम्।

वेदान्तमते उपमानप्रमाणम्

ते हि सादृश्यज्ञानमुपमानप्रमाणमभिदधाना 'मदीया गौरेव गवयसदृशी' इत्याकारकं गवि गवयसादृश्यज्ञानम् उपमित्यात्मकं फलमित्याहुः। "वेदान्तपरिभाषायां तथा शास्त्रदीपिकायामुपमाननिरूपणे" [1] । यद्यपि तदभिमतप्रक्रियायामपि उपमितिकरणरूपं प्रमाणमुपमानं नाम गोनिष्ठसमानधर्माणां गवयवृत्तित्वज्ञानमेव, तथापि फलविषये तयोरस्ति अन्तरं महत्। तथा हीयं वेदान्त्यभिमता प्रक्रिया अरण्यगतस्य पुरुषस्य अतिदेशवाक्यार्थस्मरणं विनैव गोसदृशपशुपिण्डस्य दर्शनानन्तरं 'मदीया गौरेतत्सदृशी' इति निश्चयात्मिका प्रमितिरुत्पद्यते। अनयोः सादृश्यज्ञानयोरन्वयव्यतिरेकाभ्यां गवयनिष्ठतया प्रतीयमानं गोसादृश्यज्ञानं गोनिष्ठगवयसादृश्यज्ञानं प्रति कारणम्। उपमानं प्रमाणमुपमितिश्च प्रमा उभेऽपि तेषां मते सादृश्यज्ञानमेव। फलकरणयोर्मध्ये व्यापारकल्पनमपि न तेऽवश्यं विदधति। सादृश्यज्ञानायोपमानं प्रमाणं स्वीकुर्वन्ति।

**वेदान्तमते शब्दप्रमाणम्**

आप्तवाक्यं शब्दप्रमाणम्। आप्तेन सत्यद्रष्टापुरुषेण उच्चारितं वाक्यं प्रमाणम्, आप्तानां भ्रमप्रमादविप्रलिप्सारहितत्वात्। इदम् आगम प्रमाणम् इत्यपि उच्यते, आ सम्यक् गम्यते ज्ञायते अर्थः अनेन इति व्युत्पत्तिः वाक्यविशेषः। स एव प्रमाणम् आगमप्रमाणम्।

[1] शास्त्रदीपिका

ननु शब्दजज्ञानं कथमुत्पद्यते इति चेत् उच्यते शाब्दबोधे पदज्ञानं करणं साक्षात्साधनं वा, पदार्थस्मरणं तस्य करणस्य व्यापारः शाब्दबोधश्च फलम्। वाक्यजन्यज्ञाने च आकाङ्क्षा योग्यता आसक्तिः तात्पर्य्यज्ञानं चेति चत्वारि सहकारिकारणानि। तत्र पदार्थानां परस्परजिज्ञासाविषययोग्यत्वम् एकपदार्थज्ञानजन्यापरपदार्थज्ञानेच्छाविषययोग्यत्वं अकाङ्क्षा। यथा क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इति कर्त्तव्यतायाश्च जिज्ञासा उदेति इति तेषां जिज्ञासा विषययोग्यत्वम् आकाङ्क्षा वा अस्तीति ज्ञायते।

आप्तवाक्यं द्विविधम् दृष्टार्थमदृष्टार्थञ्च। यस्य वाक्यस्य प्रतिपाद्यः अर्थः चक्षुरादीन्द्रियग्राह्यः तत् दृष्टार्थमाप्तवाक्यम्। वेदान्तिनः तावत् वेदादिभिः आगमैः एव ब्रह्मतत्त्वं निरूपयन्ति। ब्रह्मतत्त्वनिरूपणे शास्त्रमेव केवलं प्रमाणम् इति ब्रह्मशास्त्रयोनिशब्देन उच्यते। वेदानां ईश्वरमुखानिःसृतत्वात् अपौरुषेयत्वाच्च स्वतः प्रामाण्यम् इति न तत्र संशयविपर्ययादीनां सम्भावना अस्ति इति।

**वेदान्तमते अर्थापत्तिप्रमाणम्**

'अर्थापत्तिप्रमाकरणमर्थापत्तिप्रमाणम्' तत्रार्थापत्तिप्रमां निरूपयति प्रमाणनिरूपणस्य तदधीनत्वात् अर्थस्योपपादकस्य आपत्तिः कल्पनम्। उपपाद्यज्ञानत्वेन तज्जन्यज्ञानमर्थापत्तिरित्यर्थः। तेन तदनुव्यवसायादौ नातिव्याप्तिः। व्यतिरेक- सहचारज्ञानजन्यान्वयव्याप्तिज्ञानस्यैव तत्र हेतुतया तदभावव्यापकाभावप्रतियोगित्वविषकोपपाद्यज्ञानस्याहेतुत्वान्नातिव्याप्तिः।

व्यतिरेकसहचारज्ञानजन्यव्यतिरेकव्याप्तिज्ञानादनुमितिः। तथापि तस्य व्यभिचारज्ञानविरोधिज्ञानतया हेतुत्वेन तदभावव्यापकाभावप्रतियोगित्वज्ञानत्वेनाहेतुत्वान्नातिप्रसङ्ग इति दिक्। तत उपपाद्यज्ञानत्वेन तज्जन्यज्ञानत्वं फलभूतार्थापत्तिलक्षणं तत्करणं चार्थापत्तिप्रमाणलक्षणम्। द्विविधमर्थापत्तिप्रमाणम् दृष्टार्थापत्तिः श्रुतार्थापत्तिः च। श्रुतार्थानुपपत्त्याऽऽपत्त्युपपादकार्थज्ञानं श्रुतार्थापत्तिः च बन्धनिष्ठज्ञाननिवर्त्यत्वार्थेनापत्त्युपपादकमिथ्यात्वज्ञानम्।

वेदान्तमते अनुपलब्धिप्रमाणम्

'ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्। तत्करणत्वं च व्यापाराभावादसाधारणकारणत्वं ज्ञानकरणेति। भावानुभवकरणे चक्षुरादावतिव्याप्तिवारणायाभावपदम्। अदृष्टादौ साधारणकारणेति अव्याप्तिवारणायासाधारणेति पदम्, अभावस्मृत्य-साधारणहेतुसंस्कारेऽतिव्याप्तिवारणायानुभवेति विशेषणम्, चाभावानुमितिस्थलेऽप्यनुपलब्ध्यैवाभावो गृह्यतां विशेषाभावादिति वाच्यम्।। अभावानुभवेत्यनेन प्रत्यक्षस्मृत्योर्निरासः इत्थं श्लोकवार्तिकादिसिद्धमनुपलब्धिलक्षणमंवेदम्। तथा च श्लोकवार्तिककाराः -'प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।

वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता[1]।।'

इत्युक्त्या 'प्रमाणपञ्चकाभावः' अनुपलब्धिप्रमाणलक्षणम् भवति। भाष्यकाराः शबरस्वामिनोऽपि 'अभावोऽपि प्रमाणाभावोऽपि नास्तीत्यार्थस्य असन्निकृष्टस्य' इति वदन्त एतमेवार्थमभिप्रयन्ति। अत्र च प्रमाणभावः स्वरूपत एव चक्षुरादिन्द्रियवत् प्रमाणम् न तु ज्ञायमानः ज्ञानद्वारेति न अभावहेतुकानुमानस्यापि अनुपलब्धित्वम् इति न दोषः। तथा च अनुपलब्धेः स्वरूपं तावदिदम् – "ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलिब्धः। अर्थात् ज्ञानरूपं यत् करणं तज्जन्यो यः अभावानुभवाऽसाधारणकारणत्वम्"।

साङ्ख्याभिमतप्रमाणतत्त्वनिरूपणम्

साङ्ख्यदर्शने प्रमा यथार्थज्ञानं च बुद्धावेव तिष्ठति। अस्मिन् मते 'ज्ञानमुत्पद्यते इत्यनेन ज्ञानमुत्पत्तिधर्मकम्। अस्य ज्ञानस्याश्रयः पुरुषः नैव भवितुमर्हति अविकाराभावात् यतोहि–'असङ्गोऽयं हि पुरुष'[2] इति श्रुतिः सूचयति। पुरुषः ज्ञानसुखादीनामाश्रयः नास्ति, ज्ञानादयः अष्टौभावाः बुद्धौ एव तिष्ठन्ति।

न्यायवैशेषिकदर्शने यथा ज्ञानसुखाादयः आत्मधर्मकत्वेन स्वीकृताः सन्ति, तथा साङ्ख्ये नास्ति ज्ञानं बुद्धावेव विद्यते, साङ्ख्यमते संशयविपर्यय–विकल्प–निद्रा–स्मृतिरूपा चित्तवृत्तिः भिन्ना या चित्तवृत्तिः सा प्रमा।

---

[1] श्लोकवार्त्तिकम्.पृ-325

[2] बृ.उ.-3/15

**प्रमाणविषये आचार्यवास्पतिमिश्रमतप्रदर्शनम्**

आचार्यवास्पतिमिश्रः साङ्ख्यतत्त्वकौमुद्यां द्योतयति 'तच्च संदिग्धविपरीतानधिगतविषय ाचित्तवृतिरिति प्रमालक्षणम्।' इयञ्च इन्द्रियार्थसन्निकर्षजन्या चित्तवृत्तिः बौद्धप्रमा। चित्तवृत्तेश्च फलरूपा प्रमा मुख्या, **'पौरुषेय प्रमा बोधश्च पौरुषेयफलं प्रमा।'**[1] सूत्रकारः महर्षिकपिलः साङ्ख्यसूत्रे द्विधा प्रमा प्रतिपादयति 'द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्ति प्रमा'[2] पुनः यदुक्तं "प्रमाकरणं प्रमाणं" इत्थं लक्षणोक्तप्रमायाः किं स्वरूपमिति जिज्ञासायां कौमुदीकारेण प्रमायाः लक्षणं विहितं **"असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः बोधश्च पौरुषेयः फलं प्रमा।"** दृष्टप्रमाणस्य लक्षणे प्रतिविषयाध्यवसायो दृष्टम् इत्यत्र यत् प्रतिपदं प्रयुक्तं कारिकाकारेण तस्य व्याख्यानं कृतं कौमुदीकारेण 'प्रतिग्रहणेन च इन्द्रियार्थसन्निकर्षसूचनात् अतः टीकाकारोऽपि वदति- **"विषयं विषयं प्रति वर्तते" इत्यनेन इन्द्रियस्य विषयवृत्तित्वकथनादीन्द्रियार्थयोः सन्निकर्षलाभ इति भावः।**[3] अनेन अनुमान शाब्दबोधस्मृत्यादीनां निराशः भवति। अत एव उक्तं **"तासां विषयेन्द्रियसन्निकर्षजन्यत्वाभावान्न प्रत्यक्षप्रमाणत्वमिति भावः"**[4] अत्र

---

[1] सां.त.कौ.-4

[2] सां.सू. -1/87

[3] सा. बो. टी.-पृ. 123

[4] सा. बो. टी.-पृ. 123

कौमुदीकारेण यदुक्तं **"समानासमाजातीय व्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसाय इति दृष्टस्य संपूर्ण लक्षणम्।"** [१] अत्र बुद्धिवृत्तिः पौरुषेयबोधश्च प्रमोच्यते। अत्राचार्यः विज्ञानभिक्षुः उभयोः प्रमात्वव्यवहारे युक्तिं प्रदर्शयति प्रवचनभाष्ये, अत्र यदि प्रमारूपफलं पुरुषनिष्ठं भवति, तर्हि इन्द्रियसन्निकर्षादिरेव प्रमाणमिति वक्तुं शक्यते। पुरुषस्तु साक्षी एव न तु प्रमाता। यदि पुरुषेण बोधः बुद्धिः वृत्तिश्च प्रमोच्यते, तर्हि उभयार्थकमेव प्रमा भेदेन प्रमाणमेव।

साङ्ख्यदर्शने प्रमेयतत्त्वानां ज्ञानाय प्रमाणानामनिवार्यता स्वीक्रियते। साङ्ख्यमते प्रमाणानि त्रीणि सन्ति। दृष्टम्, अनुमानम्, आप्तवचनञ्चेति। इतरशास्त्रेषु यानि अतिरिक्तानि उपमानादीनि प्रमाणन्युक्तानि तेषामेषु त्रिष्वेव प्रमाणेषु अन्तर्भावोऽत्र कृतः। साङ्ख्यकारिकानुसारेण-

**"दृष्टमनुमानाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धिः।।**[2]

**"प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्।**
**तल्लिङ्गलिङ्गिपूर्वकम् आप्तश्रुतिराप्तवचनं तु।।**[3]

---

[1] सां. त. कौ.-पृ. 123

[2] सा.का. 4 का.

[3] सा.का. 5 का.

**प्रमाणविषये सारबोधिनीटीकाकारमतविवेचन समीक्षणं च**

सांख्यकारिकाकृता श्रीमदीश्वरकृष्णेन दुःखत्रयाणां ऐकान्तिकात्यन्तिकनिवृत्तये तद् हेतुभूतानां पञ्चविंशतितत्त्वानां उद्देश्यं विधाय तेषां तत्त्वानां ज्ञानं कथं स्यात् इति जिज्ञासया तत् साधनानां प्रमाणानां चर्चा कृता। तथाहि–

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**

**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि।।**[1]

तत्र कौमुदीकारेण प्रमाणसामान्यलक्षणं विधाय तत् भेदानां कथं निर्देशः इति आक्षेपम् उपस्थाप्य विवृणोति। तस्य व्याख्याने आदौ टीकाकर्तृभिः तत्त्वानि उक्तानि इत्यनेन शास्त्रेण उपक्रमः कृतः। टीकाकारः इदं स्पष्टयति यत् सांख्यप्रतिपादितानां तत्त्वानां यथार्थज्ञानमेकेनैव प्रमाणेव न सम्भवति। अतः प्रमाणभेदाः चर्चिताः। **"न चैकप्रमाणेन सर्वेषां तत्त्वानां सिद्धिः संभवति, अतएव प्रमाणबहुत्वमुचितम्"।**[2] तत्र प्रमाणबहुत्वविषयेऽपि आचार्यः वदति– कानिचित् तत्त्वानि प्रत्यक्षगम्यानि किञ्चित् च अनुमानगम्यं ततोऽपि अन्यत् आगमगम्यमिति, अतः एतद् त्रिविधं प्रमाणम् उपदिष्टं सांख्यैः। उक्तञ्च **"तत्र किंञ्चित् प्रत्यक्षेण साध्यं किञ्चिदनुमानेन किञ्चिदागमेनेति त्रिविधं प्रमाणमुक्तम्। अन्यानि तु प्रमाणानि एष्वेव त्रिष्वन्तर्भवन्तीति तानि नोक्तानीत्यत उक्तम्"।**[3] अत्र आचार्यैः

---

[1] सां. का.–4का.

[2] सा. बो. टी.–पृ. 95

[3] सा. बो. टी.–पृ. 95

अयं पक्षः उपस्थापितः यत् न्यायवैशेषिकादिशास्त्रेषु यत् प्रमाणस्वरूपं विवेचितं तेनैव प्रमाणेन सांख्याभिमतप्रमेयानां सिद्धिः स्यात्, किमर्थं पृथक् आलोचितं तर्हि उच्यते **"नहि शिष्टैः अंगीकृताः प्रमाणभेदाः"।** अर्थात् न्यायादिशास्त्रोक्तप्रमाणभेदाः शिष्टैः मन्वादिभिः नैवांगीकृतः अतः सांख्यशास्त्रे प्रमाणभेदं पुनः चर्चितं तदेव च अभिमतमिति। तथाहि उक्तम्– **"महर्षिमनुप्रमुखसम्मता इत्यर्थः। कणादादिनिरूपिताः प्रमाणभेदास्तु न सतां सम्मताः।"**[1] अत्र मनुनोक्तं प्रमाणस्वरूपमपि टीकाकर्तृभिः उपस्थापितम्–

**"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।**

**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सिता।।"**[2]

श्रीशिवनारायणशास्त्रिणा अत्र कौमुदीकारोक्त न च सामान्यलक्षणम् अन्तरेण शक्यं विशेषलक्षणं कर्तुम् इत्यस्य व्याख्याने वार्तिककाराणां भाट्टपादानां मतमुपस्थापितम्। तद्यथा–

**"सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम्।**

**न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता।।"**[3]

अर्थात् यद्यपि कारिकायां प्रमाणसामान्यलक्षणं साक्षात् न दृश्यते। तथापि इदं कारिकाकारस्य न्यूनता इति न वक्तुं शक्यते। यतोहि– "समाख्या लक्ष्यपदं

---

[1] सा. बो. टी.–पृ. 95

[2] मनुस्मृतिः– 12/105

[3] सा. बो. टी.–पृ. 96

तन्निर्वचनं च लक्षणं इति" मिश्रपादैः उक्तम् तस्य तात्पर्यं इत्थमेव अस्ति यत्- "तथा च लक्षणपदमपि 'प्रमाणम्' इत्येवेति बोध्यम्। सकृदुच्चरितमपि प्रमाणपदं तन्त्रेणोच्चरितत्वात् 'प्रमाणं प्रमाणम्' इत्येवं द्विरावृत्तिं कृत्वा **"प्रमाणं- प्रमाकरणं- प्रमायाः साधनं जनकं यत् तत् प्रमाणं प्रमाणपदप्रतिपाद्यम् इत्यर्थेन एकमेव प्रमाणपदं लक्ष्यलक्षणोभयपरमिति भावः।"**[१] पुनः यदुक्तं "प्रमाकरणं प्रमाणं" इत्थं लक्षणोक्तप्रमायाः किं स्वरूपमिति जिज्ञासायां कौमुदीकारेण प्रमायाः लक्षणं विहितं **"असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः बोधश्च पौरुषेयः फलं प्रमा।"**[२] इत्यस्य व्याख्याने टीकाकारः आदौ असन्दिग्धपदस्य लक्षणं करोति **"वितर्कात्मकानवधारणज्ञानविषयः 'इदमिदं न वा' इति संशयविषयः इति यावत्, संदिग्धः स न भवतीति असन्दिग्धः निश्चितः इति"**[३] तथा च अविपरीतपदस्य व्याख्यानं किञ्चित् विशिष्टं उपस्थापयति। **"अविपरीतः स्वरूपप्रतिष्ठितो मिथ्याज्ञानात्मकविपर्ययज्ञानविषयो, विकल्पात्मकज्ञानविषयश्च विपरीतः स न भवतीति अविपरीतः।"**[४] अर्थात् लक्षितविकल्पात्मकस्य ज्ञानस्य विपर्ययविषयत्वेन तद्विषयोऽपि विपरीतः, न भवति सः अविपरीतः। अनाधिगतपदस्य लक्षणं करोति **"अनधिगतः-**

---

[1] सा. बो. टी.-पृ. 96
[2] सां. त. कौ.-पृ. 22
[3] सा. बो. टी.-पृ. 97
[4] सा. बो. टी.-पृ. 97

**पूर्वानुभवजन्यसंस्कारमात्रोपस्थापितोऽधिगतः निश्चयात्मकज्ञानविषय इति यावत्, स न भवतीति अनधिगतः, अननुभूतः एवम्भूतः पदार्थो विषयो यस्याश्चित्तवृत्तेः सा असन्दिग्धाऽविपरीताऽनधिगतविषया चित्तवृत्तिः 'इदमेव' इत्येवंप्रकाराः बुद्धेरध्यवसायाख्याः वृत्तिः। 'प्रमा' इत्यग्रिमेण सम्बन्धः"।**[1] उक्त त्रिविधविशेषणैः विशिष्टा या चित्तवृत्तिः सा एव प्रमा पदवाच्या इति टीकाकर्तुः अभिप्रायः। अत एव उक्तं **"संशय-विपर्यय-विकल्प-स्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सा प्रमा"**[2] इत्यर्थः। अत्र टीकाकारेण प्रमायाः द्वैविध्यं प्रतिपादितं तद्यथा इन्द्रियार्थसन्निकर्षजन्यप्रमा अमुख्या, चित्तवृत्तेः फलरूपा प्रमा मुख्या प्रमा। कौमुदीकारेण यदुक्तं बोधश्च पौरुषेय फलं प्रमा तस्य तात्पर्यं प्रकाशितं टीकाकारेण चित्तवृत्तेः फलं यः पुरुषवर्ती बोधः सा मुख्या प्रमा इत्यर्थः। अर्थात् यद्यपि इन्द्रियार्थसन्निकर्षजन्यप्रमाऽपि अस्ति प्रमा किन्तु चित्तवृत्तिजन्या प्रमा एव पौरुषेयबोधः इति। अत्र टीकाकारेण कपिलोक्तप्रमालक्षणं निर्दिष्टम्। तत्र उभयोः प्रमात्वं निर्दिष्टम्। टीकाकारेण अत्रेदं तत्त्वं इत्यनेन शास्त्रेण सांख्यशास्त्रीया प्रमाणव्यवस्था उपस्थापिता। तद्यथा **"सांख्यनये कश्चिदर्थः प्रमाणमेव, यथा चक्षुरादिः 'अयं घटः' इति बौद्धप्रमाया जनकत्वात्। कश्चित् प्रमाप्रमाणोभयरूपः, यथा चित्तवृत्तिः एषा हि चक्षुरादिजन्यत्वेन 'प्रमा' इति**

---

[1] सा. बो. टी.-पृ. 97

[2] सा. बो. टी.-पृ. 97

**पौरुषेयबोधं पुरुषनिष्ठज्ञानरूपफलप्रमां प्रति करणत्वेन च 'प्रमाणम्' इति व्यवह्रियते। कश्चित् प्रमैव, यथा पौरुषेयबोधः। 'घटमहं जानामि' इति पुरुषनिष्ठबोधस्य फलरूपत्वेन कस्यापि करणत्वाभावात्। कश्चित् प्रमातैव, यथा बुद्धिप्रतिबिम्बितचैतन्यम्। बुद्धिप्रतिबिम्बितचेतनस्य प्रमाया आश्रयत्वात्। कश्चित् साक्षी एव, यथा बुद्धिवृत्त्युपहिता चित्तिः। बुद्धिवृत्युपहितशुद्धचेतनस्य साक्षिमात्रत्वादिति।"**[1] अत्र इयं जिज्ञासा जायते, पौरुषेयबोधः सा मुख्या प्रमा भवितुमर्हति। कुठारेण खदिरेण व्यापारे कृते पलाशे छिदा न जायते इतिवत्। अत्र समाधीयते पौरुषेयबोधो जायते सः चित्तवृत्त्या न भवति अपितु चैतन्यमेव बुद्धौ प्रतिबिम्बितं भूत्वा प्रमात्वेन भाषते। तत्र च चित्तौ प्रतिबिम्बतं चैतन्यं अतः उभयो अभेदग्रहात् प्रमाणभूतायाः चित्तः चित्तात्मकत्वात् फलभूतस्य चैतन्यस्य प्रमाणभूतायाः चित्तवृत्तेश्च उभयोः अस्ति एकाधिकरण्यमनेनैव पौरुषेयबोधः चित्तवृत्तेः फलम् इति उच्यते। पुनः पौरुषेय बोधः पुरुषनिष्ठा स्वीक्रियमाणेऽपि पुरुषे प्रमातृत्वादिधर्मकल्पने तस्य प्रमाणत्वप्रसंगः। अतः कथं पौरुषेयबोधः पुरुषनिष्ठः इति जिज्ञासामुपस्थाप्य तत् समाधीयते **"बोधो हि वस्तुतो बुद्धिवृत्त्यात्मकं एवास्ति, न तु पुरुषधर्मः केवलं चितिचित्तयोरभेदग्रहात् पुरुषे स उपचर्य्यते।"**[2] अर्थात् पुरुषे यत् पौरुषेयव्यवहारः भवति तत् तु उपचारात्

[1] सा. बो. टी.-पृ. 98

[2] सा. बो. टी.-पृ. 99

एव न तु तात्त्विकम्। स्वयमेव टीकाकारः स्पष्टयति **"योऽयं प्रमारूपो बोधो वरीवर्ति, नासौ पुरुषस्य मुख्यो धर्मः।"**[१] तत्र श्रुतिप्रमाणमपि प्रस्तौति शास्त्रिपादः **"असंगो ह्यऽयं पुरुषः' साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिविरोधात् अपि तु चित्तप्रतिबिम्बितचेतनस्य चित्ताविविक्तत्वात् पुरुषे स उपचरित इति।"**[२] अत्र पुनः योगभाष्यकाराणामपि मतं प्रमाणरूपेण उपस्थापितम्। **"फलम् विशिष्टः पौरुषेयश्चित्तवृत्तिबोधः, बुद्धेः प्रतिसंवेदी पुरुषः"**[३] इत्यादयः। अत्र आचार्यशिवनारायणशास्त्रिणा पञ्चशिखाचार्यवचने विश्वासः प्रदर्शितः, अतः उक्तं पञ्चशिखचार्यवाक्ये च स्पष्टमिति तत्रैव अधिगमनिरीक्षणीयम्। अन्ते निष्कर्षरूपेण वदति- **"परमार्थतस्तु न पुरुषस्य प्रमातृत्वं न वा तन्निष्ठो बोधः फलमिति निष्कर्षः।"**[४] अस्याः प्रमायाः करणं साधनं प्रमाणं अत एव वदति टीकाकारः **"तस्याः चित्तवृत्तेर्यत् साधनं सन्निकर्षरूपव्यापारवक्षुरादि, यच्च पौरुषेयबोधकरणं चित्तवृत्तिरूपं तदुभयमपि प्रमाणमित्यर्थः।"** [५] प्रमाणलक्षणोक्तकरणपदस्य विवरणं इत्थं करोति। इन्द्रियार्थसन्निकर्षजन्योऽयं घटः इति बोधप्रमायाः करणं चक्षुरादि, अत इयं गौणप्रमा घटमहं जानामि इत्याकारकानुव्यवसाये चित्तवृत्तावेव करणम्। अतः मुख्या प्रमैव। अत्र करणस्य

---

[1] सा. बो. टी.-पृ. 99
[2] सा. बो. टी.-पृ. 99
[3] सा. बो. टी.-पृ. 99
[4] सा. बो. टी.-पृ. 100
[5] सा. बो. टी.-पृ. 101

लक्षणं करोति **व्यपारवदसाधारणं करणं** प्रवचनभाष्यकारैः **फलायोगव्यवच्छिन्नमेवकारणं करणं** इति लक्षणं कृतम्। अतः तेषामपि मतम् अत्र उपस्थापितम्। यथा च भाष्ये **"अथ यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते, तदा बुद्धिवृत्तिरेव प्रमाणम्, यदि च बुद्धिनिष्ठमात्रमुच्यते, तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्, यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते, तदा तु उक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति, चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथा" इति प्राहुः।** [१] प्रमाणलक्षणे कौमुदीकारेण यद् विशेषणं प्रदर्शितं तेषां सार्थक्ता प्रदर्शयति। **"असन्दिग्ध-इत्यादिविशेषणत्रयोपादानेन, संशयविपर्ययस्मृतिरूपवृत्तिभिन्न-चित्तवृत्तेरेव प्रमात्वाभिधानेन"** [२] अतः संशयादिवृत्तीनां प्रमात्वाभावाद् तत् साधनानां न प्रमाणत्वं इति भावः। यद्यपि प्रमाणसांख्यविषये अस्तिवादिनां विप्रतिपत्तिः तथापि अस्मिन् मते त्रिविधमेव प्रमाणं अभिमतम्। न न्यूनं नाप्याधिकं कथं इति चेत् विशेषलक्षणनिरूपणावसरे वक्ष्यामः। अत्र इदं वैशिष्ट्यं यत् वेदस्य साक्षात् द्रष्ट्टणां ऋषीणां योगीनां च अतीतनागतवर्त्तिनां अपि सार्वदेशिकपदार्थानां च साक्षात्कारः भवति। अतः कथमेतद् त्रिविधं प्रमाणं उपदिष्टं तर्हि उच्यते- **"प्रमाणत्रैविध्याभिधानं च, लौकिकप्रमाणाभिप्रायम्-**

---

[1] सा. बो. टी.-पृ. 101

[2] सा. बो. टी.-पृ. 101

**योगिजनभिन्नसाधारणजनानां यानि प्रमाकरणानि तदभिप्रायम्, साधारणजनज्ञानजननोपयोगीनि प्रमाणानि त्रीण्येवेति तात्पर्यकमित्यर्थः।"** [1] आर्षज्ञानस्य यथा निर्देशः प्रशस्तपादाचार्यैः कृतः यस्य लक्षणमित्थं कृतं- **"यत् पुनः ऊर्ध्वस्त्रोतसाम्-ऊर्ध्वं-विषयेभ्यो बहिः परतत्त्वे स्रोतः -वृत्तिप्रवाहो येषां तेषां योगिनां संबन्धिआर्षविज्ञानम्।"** [2] पुनश्च प्रशस्तपादानां वाक्यमपि निर्दिष्टम्। अत्र किमर्थं त्रिविधमेव प्रमाणं उक्तं न न्यूनं न अधिकं तत्र टीकाकारः वदति **"एकविधद्विविधाभ्यां प्रमाणाभ्यां सर्वार्थसिद्धिर्न स्यादिति न्यूनसंख्या नादियताम्, अधिकसंख्या तु पुनः कथं नाद्रियते, तन्त्रान्तराचार्यैः लौकिकप्रमाणानामप्यधिकसंख्यत्वांगीकारादिति भावः।"** [3] अतः एतदतिरिक्तानां प्रमाणानां एषु त्रिषु एव पुष्टिकरणत्वात्। न्यूनाधिकं प्रमाणं नांगीकृतम्। कस्य प्रमाणस्य कुत्र अन्तर्भावः एतद् सर्वं प्रमाणभेदनिरूपणे वक्ष्यामः। अत्र पुनः जिज्ञासा जायते प्रमेयप्रतिपादकम् इदं शास्त्रं किमर्थं प्रमाणं व्यवस्थापितं तत् समाधाने उच्यते। यद्यपि **"पदवाक्यप्रमाणप्रमेयभेदभिन्नेषु विद्याप्रस्थानेषु सांख्ययोगवेदान्तरूपप्रस्थानत्रयस्य प्रमेयप्रतिपादनपरत्वात् प्रमेयव्युत्पादनस्यैव प्रकृतोपयोगितया प्रमाणव्युत्पादनं व्यर्थमित्याशंक्य परिहरति- अथेत्यादिना।**

---

[1] सा. बो. टी.-पृ. 103
[2] सा. बो. टी.-पृ. 104
[3] सा. बो. टी.-पृ. 105

**प्रमाणाद्धि -हि-यतः प्रमेयावगतिः प्रमाणाऽऽयत्ता।"**[1] अतः प्रमेयनिरूपणात्प्रागेव प्रमाणं व्यवस्थापितम्। अत्र कौमुदीकारेण यदुक्तं **"सेयमार्याऽर्थक्रमानुरोधेन पाठक्रममनादृत्यैव व्याख्याता।"**[2] तस्य व्याख्यानं करोति टीकाकारः यथा 'अग्निहोत्रं जुहोति' यवागुपाकं विना अग्निहोत्रं असम्भवम् अत एव अत्र प्रयोजनानुसारिक्रमः आदृतः न तु पाठक्रमः तथा च वदति शिवनारायणशास्त्री **"इत्युत्तरवाक्यमेवार्थक्रममादाय व्याख्यातम्, प्रमाणसामान्यज्ञानमन्तरा दृष्टादीनां प्रमाणविशेषत्वप्रतीतेर्दुघटत्वात्।"**[3] अत्र टीकाकारः समाधानं प्रस्तौति अर्थात् बुद्धितत्त्वतादात्म्यापत्त्या बुद्ध्या सह तादात्म्यत्वात् चैतन्यचित्तयोश्च भेदस्य ज्ञानं न भवति। अयमेवास्ति (अविकेकः) इत्यभिधीयते। टीकाकारः उदाहरणरूपेण स्पष्टयति यथा- **"सरः प्रतिबिम्बितस्य सूर्यस्य सरस्तरंगेण तरंगायमानत्वमिवेति भावः। तस्मात् 'ज्ञानसुखादिमानिव' इति 'इव' शब्दः सुष्ठुः उक्तः।"**[4] अत्र टीकाकारेण शंका उपस्थापिता यत्-बुद्ध्या सह तादात्म्ये सति पुरुषे ज्ञानसुखादिमत्त्वस्य प्रतीतिः भवतु, परञ्च अचेतनबुद्धितत्त्वं तस्य धर्मरूपाध्यवसायं चेतनत्वेन किमर्थं प्रतीतिः भवति। समाधानं च कृतं कर्तृभिः शिवनारायणशास्त्रिपादैः- "चितिच्छायापत्त्या च इति। **"बुद्धिपुरुषयोरसंसर्गाग्रहात्**

---

[1] सा. बो. टी.-पृ. 106

[2] सां. त. कौ.-पृ. 23

[3] सा. बो. टी.-पृ. 107

[4] सा. बो. टी.-पृ. 119

**विवेकग्रहाभावात् पुरुषगतं चैतन्यं बुद्धौ, बुद्धिगतं च ज्ञानसुखादिकं पुरुषे प्रतीयते, वस्तुतो न चैतन्यं बुद्धिधर्मो नापि ज्ञानसुखादिकं पुरुषधर्म इत्यत्र फलितम्।"** [१] उक्ताभिप्रायस्य प्रामाणिकतासिद्धयर्थं **"तस्मात् तत्संयोगात्"** [२] विंशतिः कारिकायां प्रमाणरूपेण उद्घाटयति "तथा च वक्ष्यति" इति। यथा **"बुद्धावेव प्रमाख्यं फलं जायते न पुरुषे, तस्याऽसंगत्वेन प्रमाधारत्वाभावात्, चितिचित्तयोरभेदग्रहाच्च पौरुषेयबोध इत्युपचर्यत इत्यत्र फलितम्।"** [३] यथाचित्तवृत्तिरेव प्रमाणं, पौरुषेयबोधश्च प्रमा टीकाकारेण कथ्यते **"चित्तवृत्तिस्तु न प्रमा, चक्षुरादि च परम्परयैव प्रमाणत्वव्यवहारो न साक्षादिति सिद्धान्तः"** [४] अत्र टीकाकारः अध्यवसायपदस्य विशिष्टरूपेण व्याख्या कृता यथा– **"अनवधारणात्मकमनेककोटिकं ज्ञानं व्यवच्छिनत्ति- व्यावर्तयति इत्यर्थः।"** [५] टीकाकारेण उपस्कारभाष्यकृता शंकरमिश्रामतमपि दीयते। कणादमतमपि उल्लिखितं "एकधर्मिकविरुद्धभावाभावप्रकारकमनवधारणात्मकं ज्ञानं संशयः" इति निकृष्टलक्षणम्। लक्षणे यत् "विषय" पदं प्रदत्तम्। तस्य व्याख्यानं कृतं कौमुदीकारेण विषयग्रहणेनाऽसद्विषयं विपर्ययमपाकरोति। अस्य व्याख्याने टीकाकारः योगसूत्रोक्तं वैशेषिकदर्शनोक्तं विपर्ययलक्षणम् उद्धृतं प्रमाणरूपेण।

---

[1] सा. बो. टी.–पृ. 119
[2] सां. का.–20का.
[3] सा. बो. टी.–पृ. 120
[4] सा. बो. टी.–पृ. 121
[5] सा. बो. टी.–पृ. 121

विपर्ययस्य लक्षणमपि कृतं **"विपरीतवृत्तिरूपं ज्ञानं विपर्ययः"**[१] विवृतमपि स्थाणौ या पुरुषाकारा वृत्तिः तत्र विषयः स्थाणुवृत्तिः पुरुषाकारः अतः अयमस्ति विपर्ययः।

दृष्टप्रमाणस्य लक्षणे प्रतिविषयाध्यवसायो दृष्टम् इत्यत्र यत् प्रतिपदं प्रयुक्तं कारिकाकारेण तस्य व्याख्यानं कृतं कौमुदीकारेण 'प्रतिग्रहणेन च इन्द्रियार्थसन्निकर्षसूचनात् अतः टीकाकारोऽपि वदति- **"विषयं विषयं प्रति वर्तते" इत्यनेन इन्द्रियस्य विषयवृत्तित्वकथनादीन्द्रियार्थयोः सन्निकर्षलाभ इति भावः।**[२] अनेन अनुमान शाब्दबोधस्मृत्यादीनां निराशः भवति। अत एव उक्तं **"तासां विषयेन्द्रियसन्निकर्षजन्यत्वाभावान्न प्रत्यक्षप्रमाणत्वमिति भावः"**[३] अत्र कौमुदीकारेण यदुक्तं **"समानासमाजातीय व्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसाय इति दृष्टस्य संपूर्ण लक्षणम्।"**[४] तस्य व्याख्यानावसरे किंचित् विशिष्टं व्याख्यानं प्रस्तौति टीकाकारः समानजातीयं अनुमानादि असमानजातीयं पुनः प्रत्यक्षाभासादीनां लक्ष्यपदार्थात् दृष्टात् व्यावर्त्तनायैव इदं लक्षणं कृतं, अत एव उक्तं **"सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धः आकारो**

---

[1] सा. बो. टी.-पृ. 122
[2] सा. बो. टी.-पृ. 123
[3] सा. बो. टी.-पृ. 123
[4] सां. त. कौ.-पृ. 123

**लक्षणम्।"**[१] अत्र दृष्टस्य प्रत्यक्षस्य बौद्धादिभिः लक्षणं कृतं तेषामपि 'प्रत्यक्षं कल्पनाप्रौढ़मभ्रान्तम्' अत च जैमिनिसूत्रे न्यायसूत्रे च यल्लक्षणं दृश्यते तत् सर्वं निराकरणीयमेव सांख्यशास्त्रऽसमयत्वात्। परन्तु तत्र सांख्यशास्त्रस्य प्रयोजनंतन्त्रान्तरप्रतिपादित सिद्धान्तानां निराकरणे नास्ति, अत एव संक्षेपेण टीकाकारेण उक्तं **"कथं तानि दुष्टानीति तु प्रत्यक्षलक्षणोपसंहारावसरे न्यायवार्तिके तात्पर्यटीकायां, तत्त्वप्रदीपिकायां च सुधीभिराकलनीयं, ग्रन्थविस्तरभिरैव तु नास्माभिः विविच्यते"**[२] अतः इदं ज्ञायते यत् यथा युक्त्या आचार्यमिश्रैः बौद्धानां मीमांसकानां मतं निराकृतं तथैव अत्रापि निराकरणीयमिति।

अत्र प्रमाणविशेषलक्षणं वर्णितम्। यथा-

**"प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्।**
**तल्लिंगलिंगिपूर्वकमाप्तश्रुतिराप्तवचनं तु।।"**[३]

अत्र टीकाकारेण व्याख्याकृता प्रमाणानां ये विशेषाः प्रत्यक्षादयो भेदास्तेषां यानि लक्षणानि तन्निरूपणावसरे सति तदेव प्रत्यक्षमेव तावत् आदौ लक्षयतीति सम्बन्धः। कौमुदीकारेण उक्तञ्च प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वादिति। प्रत्यक्षप्रमाणस्य लक्षणं इत्थं कृतम्- प्रतिविषयाध्यवसायो दृष्टं इति। अतः प्रतिविषयाध्यवसायः **"घटादिविषयव्यापृतेन्द्रियाधीनं ज्ञानं दृष्टं प्रत्यक्षम्। अनुमानप्रमाणं**

---

[1] सां. त. कौ.-पृ. 123
[2] सा. बो. टी.-पृ. 124
[3] सां. का.-5का.

**लिंगलिंगिपूर्वकं- व्याप्यव्यापकपूर्वकम् अनुमानम्- अनुमानसामान्यलक्षणम्। तत् सामान्यतो लक्षितमनुमानं त्रिविधं विशेषतः त्रिप्रकारम् पूर्ववत्, शेषवत्, 'सामान्यतोदृष्टम्' इति भेदात् आख्यातम् उक्तं 'सांख्याचार्यैः इति शेषः। आप्तश्रुतिः= युक्तवाक्यजन्यज्ञानम् आप्तवचनम्= शब्दप्रमाणम् इत्यन्वयः।"**[१] दृष्टं इति दृष्टपदप्रयोगेण लक्ष्यनिर्देशः। लक्षणकरणस्य प्रयोजनमाह समानेति। तत्र शिवनारायणशास्त्रिणा समानासमानजातीयेभ्यः इत्यनेन प्रत्यक्षस्यानिदुष्टत्वप्रकाशनेन लक्षणं उपस्थापितम्। **"समानजातीयेभ्यः= सजातीयेभ्यः असमानजातीयेभ्यः=विजातीयेभ्यश्च पदार्थेभ्यो यो व्यवच्छेदः=व्यावर्तनं विभज्य लक्ष्यस्थापनं स लक्षणार्थः= लक्षणकरणप्रयोजनमित्यर्थः।"**[२] लक्षणं हि व्यतिरेकिहेतुवचनं सत् सजातीयविजातीयेभ्योऽर्थेभ्यो व्यावर्त्य लक्ष्यं व्यवस्थापयतीति भवति लक्षणस्य सजातीयविजातीयव्यवच्छेदकत्वम्। यथा- **"नीलमुत्पलम् इत्थं सजातीयमात्रव्यवच्छेदके विशेषणेऽतिव्याप्तिवारणाय असमानेति"**[३] प्रतिपादितम्। टीकाकारैः प्रत्यक्षलक्षणं इदृशं कृतं- **"सजातीयविजातीयव्यवच्छेदकं तथाऽग्रे प्रत्यक्षलक्षणावसाने मूल एव स्पष्टीभविष्यतीति नाऽत्र किंञ्चिद् वचनीयम्"**[४] उदाहरणरूपेण स्पष्टयति यथा-

---

[1] सा. बो. टी.-पृ. 108
[2] सा. बो. टी.-पृ. 109
[3] सा. बो. टी.-पृ. 110
[4] सा. बो. टी.-पृ. 110

**"अस्मिन् ग्रामे देवदत्तगृहम्" इति वार्ता श्रुतवतः पुरुषस्य तद् ग्रामस्थेषु सर्वेषु गृहेष्वपि देवदत्तगृहबुद्धिप्रसक्तौ "पताकावद् देवदत्तगृहम्" इति लक्षणज्ञाने सति "इदमेव देवदत्तगृहं, नान्यत्" इत्यवधारणज्ञानं जायते।"**[1] इदं तु बोध्यम् इत्यनेन शास्त्रेण टीकाकारेण किञ्चित् नूतनं व्याख्यानं प्रस्तौति लक्षणस्य तत्र अव्याप्तिः, अतिव्याप्तिः, असम्भवदोषरहितत्वं लक्षणं कृतं तद्यथा- **"किंचिल्लक्ष्यवृत्तित्वे सति किंचिल्लक्ष्यावृत्तित्वम् अव्याप्तिः।"** [2] यथा 'कपिलत्वं गोत्वं' अर्थात् यत्र कपिलत्व वर्तते तत्र गोत्वम् स्यात् परन्तु कपिलत्वं वर्तते न सर्वासु गोव्यक्तिषु तस्मात् कपिलत्वं न सर्वलक्ष्यवृत्तीति उक्तं लक्षणेऽव्याप्तिः प्रथमो दोषः। **"लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः"** [3] **"अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम्"**[4] यथा 'शृंगीत्वं गोत्वम्' इति, तन्न लक्षणम्, अजासु, महिषासु शृंगीत्वं तु लक्ष्यते। तस्मात् शृंगीत्वं लक्ष्यवृत्ति सत् अलक्ष्यवृत्यपि भवतीति उक्तं लक्षणेऽतिव्याप्तिलक्षणो दोषो द्वितीयः। अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः। **"असंभवश्च लक्ष्यमात्रावृत्तित्वम्, यत् क्रियमाणं लक्षणं लक्ष्यमात्रे कुत्रापि न घटते, स दोषोऽसम्भवो नाम"**[5] यथा चतुष्पादवत्त्वं तु मानवाः अत्र असंभवदोषग्रस्तत्वात्। चतुष्पादत्वात् केवलं मानवाः

---

[1] सा. बो. टी.-पृ. 110
[2] सा. बो. टी.-पृ. 110
[3] सा. बो. टी.-पृ. 110
[4] सा. बो. टी.-पृ. 110
[5] सा. बो. टी.-पृ. 111

न सन्ति इति तृतीयो दोषः। कापि लक्ष्येऽवर्तनमसंभवः। इदं च त्रयं सर्वत्र परिहर्तव्यम्। एतदोषत्रयरहितं यत् स एवासाधारणो धर्मः, तदेव लक्षणम्। टीकाकारेण 'प्रतिविषयाध्यवसायो दृष्टं प्रत्यक्षस्य लक्षणस्य विशदं वर्णनं कृतम्। 'प्रतिविषयाध्यवसायः इति प्रत्येक पदार्थः अवयवार्थः सन्ति। अत्र पदानामेव वाक्यावयवत्वात्। अतः विषयपदस्य निर्वचनमाह– 'विसिन्वन्ति' इति षिञ् बन्धने' इत्यस्य रूपम्। तस्य विवरणमाह– **"विषयिणमनुबन्धन्तीति। विषयिणं चित्तवृत्तिरूपं ज्ञानम्। 'अनुबन्धन्ति इत्यस्यार्थं स्वेन रूपेणेति। स्वेन–स्वकीयेनरूपेण–आकारेण निरूपणीयं–निरूपणार्हं स्वाकारोपरक्तं कुर्वन्तीति यावत्।"** [१] विषयी अर्थात् चित्तरूपविषयाणां विषयः स्वाकारणे समर्पितम्। चित्तस्य विषयाकाराणामेव विषयमाध्यमेन विषयीनां स्वरूपेण निरूपणं कुर्वन्तीति। आद्य विषयशब्दबोध्यमाह– **"पृथिव्यादयः स्थूलपृथिव्यादयः। विषयशब्देन न केवलं स्थूला एव विषया गृह्यते अपि तु सूक्ष्मा अपीत्याह– अस्मदादीनामिति।"** [२] टीकाकारेण तन्मात्रलक्षणव्याख्याने योगसूत्रस्य मतमपि उपस्थापितम्। सूक्ष्मभूतात्मका ये पदार्थाः स्थूलसूक्ष्मविषयाः योगिनां विषयाः इत्यत्र **"परमाणुपरममहत्तत्वान्तोऽस्य वशीकारः"** [३] टीकाकारः ऊर्ध्वस्त्रोतव्याख्याने विष्णुपुराणस्य देवसर्गस्य सिद्धान्तं अत्र प्रस्तुतवान् तद्यथा–

---

[1] सा. बो. टी.–पृ. 111

[2] सा. बो. टी.–पृ. 112

[3] योगसूत्रम्– 1/40

"प्रकाशाद्बहिरन्तश्च ऊर्ध्वस्रोतोभवाः स्मृताः।
तुष्टात्मनस्तृतीयस्तु देवसर्गस्ततः स्मृतः॥"

अत्र विषयस्तदन्तरं प्रतिविषयशब्दस्य व्याख्यानमाह- **"विषयं विषयं प्रति वर्त्तते' इत्यनेन यदीन्द्रियाणां विषयं प्रति वर्तनमभिहितं, तन्नेन्द्रियाणां स्वस्थानपरित्यागपूर्वकं विषयदेशगमनं तथा सत्यन्धत्वादि प्रसंगात्, अपि तु संबन्धविशेष इत्याह- वृत्तिश्च सन्निकर्ष एव न त्विन्द्रियाणां विषयदेशगमनमित्यर्थः।**[१] टीकाकारः न्यायभाष्यतात्पर्यटीकाकारस्य **"वृत्तिस्तु सन्निकर्षः"**[२] **इति।** व्याख्यानमपि अत्र उपस्थापितम्। अतः टीकाकारस्योपरि न्यायदर्शनस्य प्रभावः दरीदृश्यते। अत्र आश्रितार्थः **"अध्यवसाय इन्द्रियधर्मः' इति नाऽऽस्थेयम् अपि त्विन्द्रियमाश्रित्य बुद्धौ वर्तमानत्वेन बुद्धेरेव स धर्मोऽभ्युपेयः।"**[३] यथा- यो बीजः जायमानं भवति ताः अंकुरोत्पन्नं भवति न हि संयोगसन्निधाने कालसलिलो अंकुरः भवति। अर्थात् **"तस्य तद्धर्मत्वाभावाद् अपि तु बुद्धिधर्मत्वेनैव तस्य भवति व्यपदेशो बुद्धिवृत्तिः इति"**[४] पुनरत्र **"अध्यवसायपदाभिधेयबुद्धिव्यापारस्य ज्ञानस्य लक्षणमाह अर्थात् बुद्धेस्तमोरूपावरणानादरपुरस्सरसत्त्वात्मकप्रकाशबाहुल्यरूपो धर्मविशेषः**

---

[1] सा. बो. टी.-पृ. 112
[2] न्यायदर्शनम्- 1/1/3
[3] सा. बो. टी.-पृ. 114
[4] सा. बो. टी.-पृ. 114

**सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाभिधीयते इत्यर्थः।"**[१] कौमुदीकारेण उपात्तविषयाणामिन्द्रियाणां वृत्तौ इत्यत्र यो हि उपात्तशब्दः प्रयुक्तः तस्य अर्थः कृतः उपात्तशब्दः सन्निहितवाचीति। तच्च उक्तं **"सन्निहित एव विषयेसन्निकर्षो जायते न व्यवहित इति भावः"** [२] पुनश्च वृत्तिपदस्य व्याख्यानं कृतं **"तमोऽभिभवतुल्यकाले जातो यो बुद्धेः सत्त्वसमुद्रेकः स एव वृत्तिपदार्थत्वेनाभिप्रेयते"** [३] तात्पर्यमिदं यत् तमोगुणस्य अभिभवे जाते विषयेन्द्रियसन्निकर्षजन्यस्यैव बुद्धेः सत्त्वोद्रेकस्य वृत्तिलक्षणत्वं इत्यर्थः। अत्र टीकाकारेण अत्रेदं बोध्यं इत्यनेन शास्त्रेण वृत्तेः स्वरूपं प्रकाशितं यथा तडागोदकं मार्गप्रबन्धे सति क्षेत्राकारं नैव अकारितं भवति प्रतिबन्धस्य च अपगमे तुल्या क्षेत्रं प्राप्य क्षेत्राकारं परिणतं भवति तथैव सर्वाथप्रकाश- सामर्थ्या बुद्धिः तमोगुणेन प्रतिबंद्धे सति घटाद्याकाराकारितं नैव परिणमति तमोगुणस्य नाशे सति विषयाकारेण परिणमते बुद्धेः अयमेव विषयाकारः परिणामः अध्यवसायः वृत्तिपदवाच्यः ज्ञानं प्रमाणमिति च बोध्यते। बुद्धेः अस्य विषयाकारः परिणामः एव प्रत्यक्षप्रमाणमिति उच्यते, पुनश्च योहि व्याप्तिज्ञानजन्यः विषयाकारपरिणामः स अनुमानप्रमाणं वाक्यजन्यपरिमाणः आगमप्रमाणमिति उच्यते। यथा हि सूचितः टीकाकारेण **"इयांस्त्वत्र विशेषः यः खलु चक्षुरादीन्द्रियसन्निकर्षद्वारा**

---

[1] सा. बो. टी.-पृ. 114

[2] सा. बो. टी.-पृ. 115

[3] सा. बो. टी.-पृ. 115

**तमोऽभिभवसमकालीनसत्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणामः सोऽयं 'प्रत्यक्षप्रमाणम्' इति व्यवह्रियते, व्याप्तिज्ञानजन्यश्च यस्तथाविधः परिणामः सोऽनुमानप्रमाणमिति व्यपदिश्यते, वाक्यजन्यश्च यस्तादृशः परिणामविशेषः स आगमप्रमाणमित्यभिधीयते। तदेवाह– इदं तावत् प्रमाणमिति।"** [1] अत्र पूर्वपक्षिनां मतं निराकर्तुं तमुद्धरति टीकाकारः बुद्धेः सत्त्वाधिक्यात् योहि विषयाकारः परिणामः स प्रमाणं तदुक्तं तत्र जिज्ञासा जायते यत् चित्तं तु निरवयवं निरवयवत्वात् च पुरुषवद् अपरिणामित्वं तर्हि कथं तस्याः विषयाकारपरिणामः इति उच्यते सांख्यशास्त्रे यद् निरवयवत्वस्य प्रकृतेः परिणामित्वदर्शनात्। वस्तुतस्तु इत्यनेन शास्त्रेण आचार्यः व्यक्ताव्यक्तयोः स्वरूपं प्रतिपादितवान्। तत्र अन्तःकरणादिनां सावयवत्वं उक्तं सावयवत्वात् च विषयाकारपरिणामः उपपन्नः एव। टीकाकारः अत्र बुद्धेः मध्यमपरिमाणवत्त्वमपि उक्तवान् अन्तःकरणं अणुपरिमाणवत्त्वं उच्यते चेत् अणुपरिमाणवतं प्राणादीनां यथा बर्हिदेशगमनं भवति तथैव अन्तः करणस्यापि निर्गमने देहपातापत्तिः स्यात्। विभुपरिमाणवत्वं अन्तःकरणं इति उच्यते चेत् निष्क्रियत्वापतिः अतः मध्यं परिमाणं अन्तःकरणं इति उक्तम्। अत्र टीकाकारः योगभाष्यकाराणां सांख्यसूत्रकाराणां च वाक्यम् उद्धृतं तथाहि– **"घटप्रसादप्रदीपकल्पं संकोचविकाशिचित्तं शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्नाः, तथा चान्तराभावः संसारश्च युक्तः" इति। यथा चान्तःकरणस्य**

---

[1] सा. बो. टी.–पृ. 116

**नाणुत्वं विभुत्वं वा, तथा, "न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा"( ५/६९ ) "सक्रियत्वाद् गतिश्रुतेः"( ५/७० ) "न निर्भागत्वं तद्योगाद् घटवत्"( ५/७१ ) इत्यादिसांख्यसूत्रेषु व्यक्तम्।"**[1]

अत्र एतावत् पर्यन्तं दृष्टप्रमाणस्य लक्षणं निरूपितं तस्य फलं किम् इति जिज्ञासायां उक्तं कौमुदीकारेण **"अनेन यश्चेतनाशक्तेरनुग्रहः, तत् फलं, प्रमा बोध इति"**[2] अस्य व्याख्यानं कुर्वद्भिः शिवनारायणशास्त्रीमहोदयैः चिन्तितं यदाकारितेन बुद्धितत्वेन चेतनस्य पुरुषस्य यत् गृहीतानां विषयाणां स्वऽस्मिन्नेव प्रतिबिम्बिते चेतने समर्पणं तत् फलं सा एव प्रमा। अतः उक्तं शास्त्रिणा **"अन्तः करणस्य स्वभाव एव अयं यदिदमिन्द्रियैरूपनीतान् विषयान् स्वस्वामिन आत्मने समर्पयतीति।"**[3] टीकाकारः अत्र विष्णुपुराणस्यापि प्रमाणं दर्शितम्। कौमुदीकारेण चेतनाशक्तेऽनुग्रहः इत्यत्र योहि अनुग्रहः शब्दः प्रयुक्तः तस्य तात्पर्य प्रकाशयति बुद्धिः अचेतनप्रकृतेः कार्यत्वात् अचेतनं, अतः तस्याः वृत्तिरपि अचेतनैव, कार्यगुणाः कारणगुणानारभन्ते इति न्यायेन अचेतनस्य बुद्धितत्त्वस्य तत् कार्यस्य च अचेतनत्वं तन्तुपटवदिति स्यात्।

अतः बुद्धेकार्यस्य सुखदुःखादिनामकमपि अचेतनतत्वं सिद्धं भवति। किन्तु पुरुषस्तु चेतनः सुखाद्यननुषंगी इति। अत्र पुनः जिज्ञासा उत्पादिता यत् पुरुषः

---

[1] सा. बो. टी.-पृ. 117

[2] सां. त. कौ.-पृ. 27

[3] सा. बो. टी.-पृ. 117

चेतनः बुद्धिः अचेतना तर्हि कथं ज्ञानसुखादीनां बुद्धिधर्माणां चैतन्यसमानाधिकरण्येन पुरुषस्यैव उपचारः सम्भवति। चेतनोऽहं जानामि इत्यस्य निराकरणं करोति श्रुतौ असंगोह्यऽयं पुरुषः इत्यत्र पुरुषस्य असंगतत्वं अभिहितं तन्त्रान्तरेऽपि ज्ञानसुखादिनां आत्मधर्मत्वं अनंगीकृतं तत् प्रमाणमपि प्रस्तौति–

**"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।**

**दुःखाज्ञानमया धर्मा प्रकृतेस्ते तु नाऽऽत्मनः॥"[1]**

पुनश्च अन्यैः अनुभूतेन ज्ञानसुखादिना अन्यः ज्ञानसुखादिमान् नैव भवितुमर्हति अत एव कथं चित्तगतेन ज्ञानादिना पुरुषस्य ज्ञानादिमत्त्वप्रतीतिः। अस्य समाधानं करोति वाचस्पतिमिश्रः तच्छायापत्त्येति। गृहीतानां विषयाणां स्वस्मिन्नेव प्रतिबिम्बिते चेतने समर्पणं तत् फलं सा एव प्रमा इति।

**अनुमानप्रमाणम्**

"प्रत्यक्षादतिरिक्तमनुमानाद्यप्यस्त्येव प्रमाणं न प्रत्यक्षमात्रम्। अन्यथा गृहाद् गतं पतिमपश्यन्ती चार्वाककामिनी मृतं मत्वा सा सोरस्ताडमाक्रन्देत्, पत्रादिलिंगेन तत्सत्ताज्ञाने तु अनुमानप्रमाणस्वीकार इति सर्वथा **"नाप्रत्यक्षं प्रमाणम्" इत्यभिधानं युक्तिप्रमाणविरुद्धं चार्वाकस्येति सर्वं समञ्जसम्।"[2]**

[1] सा. बो. टी.–पृ. 118

[2] सा. बो. टी.–पृ. 129

अनुमानस्य प्रामाण्यं प्रसाध्य तल्लक्षणपरं अनुमानप्रमाणस्यावश्यकताऽपि प्रतिपादिता यद् युक्तेन सिद्धयति तद् तस्य लक्षणादिद्वारेण प्रतिपादनं, प्रत्यक्षप्रमाणप्रतिपादनस्य परमेव भवेत्। **"विशेषस्य सामान्यधर्मव्याप्यधर्मवत्त्वेन अनुमानसामान्यधर्मज्ञानमन्तरेण तद्विशेषज्ञानासम्भवादिति भावः।"**[1] अतः 'लिंगलिंगीपूर्वकमनुमानम्' इत्यनुमानसामान्यलक्षणम्। 'लिंगलिंगीज्ञानजन्यं ज्ञानमनुमानम्' इति तदर्थः। टीकाकारैः अत्र न्यायभाष्यकाराणां मतमपि प्रस्तूयते। तस्य अनुमानस्य लक्षणं इत्थं वर्तते **'अनुमानं च लिंगलिंगीनोः संबन्धदर्शनम्'**[2] **इति। तत्र लिंगं=साधनं धूमादि, लिंगि=साध्यं वह्न्यादि। 'लिंगलिंगिपूर्वकम्' इत्यनुमानलक्षणं विवृण्वन् लिंगलिंगिशब्दौ व्याचष्टे- लिंगं व्याप्यमिति। लिंगयते=गम्यते- ज्ञायतेऽप्रत्यक्षोऽर्थोऽनेनेति लिंगम्।"**[3]

अत्र टीकाकारः वैशेषिकमतमपि उपस्थाप्यते-

**"यदनुमेयेन संबद्धं प्रसिद्धं च तदन्विते।**

**तदभावे च नास्त्येव तल्लिंगमनुमापकम्॥"**

**इति प्रशस्तपादलक्षितं पक्षवृत्तित्वसपक्षसत्त्वविपक्षव्यावृत्तत्वादिधर्मोपपन्नं धूमादिवस्तु इति यावत्। धूमादिना हि वह्न्यादिंप्रत्यक्षोऽर्थोज्ञायते इति धूमादिवस्तु लिंगम्, एतदेव च पक्षवृत्तित्वादिधर्मैर्व्याप्यमानत्वाद्**

---

[1] सा. बो. टी.-पृ. 129

[2] न्या.1/1/5

[3] सा. बो. टी.-पृ. 130

**व्याप्यमित्यभिधीयते।"**[१] टीकाकारः व्यापकस्य लक्षणं इत्थं करोति- **"यस्य च वह्न्यादेस्तद् धूमादि लिंगमस्ति तद् वह्न्यादि लिंगि=व्यापकमिति चोच्यत इत्यर्थः।"**[२] व्याप्यस्य लक्षणे सारबोधिनीकारः न्यायबिन्दुकारमतमाश्रित्य स्वाभिप्रायं प्रकाशयति तथाहि- **"स्वभावप्रतिबन्धे सत्यऽर्थोऽर्थे गमयेत् तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात्।"** इति न्यायबिन्दवाभिहितत्वेन **"स्वभावप्रतिबन्धो व्याप्तिः इति।"**[३] जयन्तभट्टमतमपि निर्दिश्यते- **"अनौपाधिकः संबन्धो व्याप्तिः।"**[४] इति जरन्तस्तार्किकाः। ततः परं उपाधेः विस्तृतव्याख्यां करोति टीकाकारः शङ्कितः=शङ्काविषयत्वेन सन्दिग्धः, समारोपितः=सम्यगारोपितत्त्वेन निश्चितः। अर्थात् उपाधिः द्विविधा शङ्कितोपाधिः निश्चितोपाधिश्च। अत्र न केवलं उपाधिनिरूपणप्रसङ्गे अपितु प्रायः सर्वत्रैव आचार्यैः नैयायिकानां मतमुद्धृत्य एव प्रमाणानां विवरणं प्रस्तौति। यद्यपि पूर्वमपि मयेदमुक्तं तथापि पुनवर्चनस्येदमेव तात्पर्य यत् पुनः-पुनः इयमेव परम्परा आचार्यैः पालिता। तथाहि- सारबोधिनीकारैः उपाधिव्याख्याने तत्त्वचिन्तामणिकाराणां मतमुपस्थाप्यते। यथा- "स चायं द्विविधः, निश्चितः सन्दिग्धश्च। साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाभिधायकत्वेन निश्चितोपाधिः। यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये

---

[1] सा. बो. टी.-पृ. 130

[2] सा. बो. टी.-पृ. 130

[3] सा. बो. टी.-पृ. 130

[4] सा. बो. टी.-पृ. 130

आर्द्रेन्धनप्रभववह्निमत्त्वम्। यत्र साधनाव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो श्यामत्वे साध्ये शाकाद्याहारपरिणतित्वम्" इति।

**"एवंविधौ यावदुपाधी तयोर्निराकरणेन=राहित्येनेत्यर्थः।**

**एतेन अनौपाधिकः संबन्धो व्याप्तिः" इत्यंशः संगृहीतः॥"**[1]

पुनश्च व्याप्तिलक्षणं इत्थं प्रकारेण स्पष्टयति "स्वभावप्रतिबन्धो व्याप्तिः" अत्र वस्तुनः=धूमादेर्यः स्वभावः=वह्न्यादिनाविनाभावाभावः- अविनाभावनियमः, तेन प्रतिबद्धम्=आक्रान्तमित्यर्थः। तथाहि स्पष्टयति- "स श्यामो मित्रातनयत्वात्, दृष्टश्यामत्वविशिष्टमित्रातनयवत्' इत्यत्र मित्रातनयत्वमपि श्यामत्वप्रतिबद्धत्वेन व्याप्यं स्यात् तन्माभूदित्यत'। उक्तं- 'शङ्कितोपाधिनिराकरणेन' इति। 'अयं धूमवान् वह्निर्महानसवत्' इत्यत्र वह्नेरपि महानसादौ धूमाविनाभूतत्वदर्शनाद् वह्निरपि धूमव्याप्यत्वं स्यादत उक्तम्- **'समारोपितोपाधिनिराकरणेन'**[2] इति अन्वयेन प्रवर्तमानं केवलान्वयि एव वीतं वर्तते। अन्वयव्यतिरेकि वीतं न स्यात् अतेव व्यतिरेक मुखेन उक्तम्- वीतत्वे प्रयोजकं अन्वयव्याप्तिः प्राधान्यमेव भवति। न तु व्यतिरेकव्याप्त्यसत्वमपि, अतः ज्ञेयं वाच्यत्वात् केवलान्वयिनः 'पर्वतो वह्निमान्' अन्वयव्यतिरेकिणः उभयोः अन्वयमुखेन प्रवर्तमानत्वात् 'वीतमेव भवति' निषेधविधायकमवीते अतिव्याप्तिः न भवेत् इत्युक्तं 'अन्यवमुखेन प्रवर्तमानमिति।'

---

[1] सा. बो. टी.-पृ. 131

[2] सा. बो. टी.-पृ. 132

अत्र 'अवीतम्' अर्थात् न वीतम् अवीतम्=व्यतिरेकव्याप्तिहेतुकम् अस्येव "व्यतिरेकमुखेनेति। "व्यतिरेकमुखेन=व्यतिरेकसहचारमात्रग्रहजन्यव्याप्तिग्रहत्वेन। निषेधकम्- व्यतिरेकं अप्रसिद्धसाध्यकम् 'तदसत्त्वे तदसत्त्वं व्यतिरेकः' अस्य आकारे व्यतिरेकसहचारे यत्र मुखं प्रारम्भः अर्थात् 'साध्याभावव्यापकीभूताभावप्रतियोगित्वरूप-व्यतिरेकव्याप्तिप्राधान्येन 'यत्र ग्राह्यः इतरभेदाभावः तत्र गन्धभावस्य अतः गन्धाभावस्य पृथिव्ये निवृत्तौ सति हेतु-क्षितिभेदस्य निषेधकः यद् पृथिव्ये इतरभेदवती गन्धवत्त्वादि अनुमानं तद् अवीतं भवति।" अर्थात् टीकाकारस्य अभिप्रायमिदमस्ति यत् पृथिवी जलादिचतुष्कात् भिद्यते गन्धवत्त्वात्" अत्र गन्धवत्त्वात् व्यापकसाध्यसामानाधिकरण्यज्ञानं प्रथमं न भवति अपितु जलादि चतुष्टयभेदाभावे सति जलादिचतुष्टये गन्धवत्त्वाभावस्य ज्ञानमेव प्रथमतः भवति। इत्येवं गन्धवत्त्वं हेतुः, साध्याभावव्यापकीभूताभावप्रतियोगित्त्वरूप- व्यतिरेकव्याप्तिसद्भावे इदमनुमानं केवलव्यतिरेकि। पृथिव्यां जलादिचतुष्ट्यस्य तादात्म्यं नास्ति। अभावग्राहकस्य कारणं अवीतानुमाने निषेधकत्वं सिद्ध्यति। अवीतस्य लक्षणे 'व्यतिरेकमुखेन' कथमस्ति इति। टीकाकारः समाधानं करोति यत् "वर्णा न क्षणिकाः एवेति प्रत्यभिज्ञायमानत्वात्" इति क्षणिकत्वनिषेधकानुमाने अतिव्याप्तेः वारणार्थं कथयति। उक्तानुमाने निषेधकत्वे सति व्यतिरेकमुखेन तस्य प्रवृत्तिः नास्ति। टीकाकारः वाचस्पतिमिश्रानुसारेण वीतावीतभेदेनानुमानस्य द्वौ भेदौ प्रतिपाद्यौ, सम्प्रति

तदवान्तरभेदेन त्रिविध- माख्यातुं सूचीकटाहन्यायेन प्रागवीतं निरूपयति। वीतावीतयोर्मध्ये यदवीतं तत् शेषवत्संज्ञकमेवेत्यर्थः। 'शेषविषयम्' इत्यस्य व्युत्पत्तिः 'शिष्यते' परिशिष्यते इति शेषः अस्ति अस्य इति शेषवत्। कर्मघञन्तात् शेषशब्देन मतुप् प्रत्ययः।

**"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।**

**संबन्धेऽस्तिविवक्षायां भवन्ति मतुवादयः"**

वार्त्तिकेन सम्बन्धस्य विवक्षायां मतुवस्य विधानम्। सर्वपदार्थज्ञाने विषयतासंबन्धेन दर्शयति। इत्यस्य "विषयतया" ध्येयम्। शेषवत् एव नामान्तरं परिशेषः। टीकाकारैः अत्र न्यायभाष्यकारमतमुपस्थापितम्- यदाहुः इति। तत्र हि "शेषवन्नाम परिशेषः" इत्युक्त्वा 'प्रसवप्रतिषेधे इत्युक्तम्। यथा- **"शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति समवायिकारणकत्वात्, यन्नैवं, तन्नैवं यथारूपम्" इति परिशेषानुमानम्"**[1] टीकाकारः न्यायमकरन्दकारमतमपि विवेचितम्। साररूपेण इत्थं वक्तुं शक्यते यत्-**"शब्दो गुणः, मानुषचाक्षुषप्रत्यक्षाविषयत्वे सति बहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्।"**[2] सारबोधिनीकारः पुनः उद्योतकराचार्यस्य मतं प्रस्तूयते। यथा- **"इच्छादीनां गुणत्वेन पारतन्त्र्यप्रतिपत्तिः सामान्यतो दृष्टानुमानेन साधनीया, आत्मतन्त्रता प्रतिपत्तिस्तु परिशेषानुमानादिति।"**[3] अतः

---

[1] सा. बो. टी.-पृ. 142

[2] सा. बो. टी.-पृ. 142

[3] सा. बो. टी.-पृ. 142

नैयायिकानुसारेण इच्छादिकमात्मनां धर्मः वर्तते। अतः शंका जायते यत् सांख्यसिद्धान्तानुसारेण इच्छादीनामात्मधर्मत्वाभावेनावीतोदाहरणासंभवात् तदतिरिक्तं प्रकृतशास्त्रीयसिद्धान्तानुसारमवीतोदाहरणं किमिति। टीकाकारेण अस्य निराकरणं प्रस्तूयते यथा–'पूर्व' शब्दं विवृणोति प्रसिद्धमिति। प्रसिद्धपदार्थमाह– दृष्टस्वलक्षणसामान्यमिति। स्वलक्षणशब्दः 'स्वम्=असाधारणं लक्षणं=रूपम्' इति व्युत्पत्त्या तत्तदवयवसन्निवेशविषयं अवीतं निरूपणानन्तरं सम्प्रति वीतं निरूपणीयम् अतः आदौ विभजते– वीतानुमानं द्विविधम्–एकं पूर्ववत्, द्वितीयं सामान्यतोदृष्टमिति। तयोः किमिति अत्र निरूप्यते– यत् पूर्ववत् अतिलघुपदेन दृष्टस्वरूपसामान्यविषयमहतोऽर्थ कथं उपलभ्यते। टीकाकारः समाधानं करोति यो हि अर्थः पूर्ववत् शब्दस्य व्युत्पत्या उपलब्धः। व्युत्पत्तित्वात् पूर्वशब्दः विवृणोति प्रसिद्धम्। प्रसिद्धपदार्थश्च– 'दृष्टस्वलक्षणसामान्यम्' स्वलक्षणशब्दः "स्वम्–असाधारणं लक्षणं=रूपम्" व्युत्पत्त्या सन्निवेशविशेषाल्लिंगितत्तद्व्यक्तिपरः। टीकाकारः न्यायबिन्दुकारस्य मतमपि उपस्थापितम्– "यस्यार्थस्य सन्निधानाऽसन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम्" इति। तार्त्पमिदमस्ति वस्तुनो हि द्विविधं रूपम् असाधारणं साधारणं च। सकलव्यक्तिसाधारणघटत्वादिकं तत् सामान्यलक्षणम्। यद् असाधारणं यस्य सामान्यस्य तद् दृष्टस्वलक्षणं सामान्यम्। दृष्टस्वलक्षणसामान्यविषयकं यद् ज्ञानं तद् पूर्ववदनुमानमिति। अर्थात् प्रत्यक्षीकृतजातीयसाध्यकानुमानं पूर्ववदिति सरलं लक्षणम्। टीकाकारः पर्वतो

वह्निमान् धूमात्' उदाहरणेन स्पष्टयति। सारबोधिनीकार: योगभाष्यकारप्रशस्तपादाचार्याणां मतमुपस्थाप्यते मतमपि प्रस्तूयते। अर्थात् 'पर्वतो वह्निमान् धूमात्' अत्र धूमहेतुना पर्वतपक्षे वह्नित्वसामान्यविशेषस्य अनुमानमिति। वह्नित्वसामान्यस्य विशेष: अर्थात् वह्नित्वसामान्यरूपजातित्वस्य विशेषवह्निव्यक्ते: एतादृश अर्थ: न करणीय:। अन्यथा व्यक्तिविशेष एव अनुमेयो भवेत्। अत्र वह्नित्वरूपसामान्यविशेषस्य अनुमितौअभिप्रेत: अस्ति। तात्पर्यमिदं यत् सत्ताजाति: द्रव्यगुणकर्मणि सामान्यरूपत्वात्, द्रव्यत्वादि जातिनां सामान्यविशेषोभयरूपत्वाच्च। लक्षणं लक्ष्ये समन्वितो भवति इति। सामान्यतोदृष्टं इत्यस्यार्थ:- अदृष्टस्वलक्षणेति। "न दृष्टं प्रत्यक्षेण तत् अदृष्टं, अदृष्टं च तत् स्वलक्षणं च अदृष्टस्वलक्षणं तस्य सामान्यं यज्जातीयं, तद् विषयो यस्य साध्यतया अनुमानस्य तत् अप्रत्यक्षीकृतजातीयसाध्यकमनुमानं सामान्यतोदृष्टमिति सरलं लक्षणम्। **'यज्जातीयं साध्यं व्याप्तिज्ञानविषय:, तज्जातीयभिन्नविषयकानुमिति: यथा- रूपादिज्ञानानि करणवन्ति क्रियात्वात् छिदिक्रियावत्।"** [१] अस्य इन्द्रियसाधकानुमानं सामान्यतोदृष्टम् उच्यते। अस्योपपादनं वर्तते। टीकाकार: अत्र शंका उपस्थापितवान्- यत् छेदनादिक्रियायां कुठारादिस्वलक्षणं करणं दृष्टमेव तत् अस्य दृष्टस्वलक्षणसामान्येन अतिरिक्त: कथं भवितुमर्हति। अस्य समाधानं करोति टीकाकार: यत् साधारणतया दृष्टत्वेऽपि विशेषरूपेण दृष्टं न पूर्ववत् भवितुमर्हति।

---

[1] सा. बो. टी.-पृ. 148

'तथापि' इत्यनेन शास्त्रेण स्पष्टं भवति यत् **"रूपादिज्ञाने यज्जातीयस्य=यादृग्जातिमतः करणत्वमनुमेयं तादृग् जातिमतः करणस्य स्वरूपं प्रत्यक्षेण न दृष्टमित्यर्थः।"**[1] टीकाकारः अस्मिन् विषये वाचस्पतिमिश्रस्य मतमेव स्वीकृत्य स्वाशयं उपस्थापितवान्। सारबोधिनीकारः एतस्मिन् विषये न्यायवार्त्तिककारस्य न्यायभाष्यकारस्य मतमपि प्रमाणरूपेण उल्लेखितम्। वृत्तिकाराणां श्रीविश्वनाथन्यायपञ्चाननानां मतमपि प्रदर्शितम्-**"पूर्ववदिति अन्वय्यनुमानम्, शेषवदिति व्यतिरेक्यनुमानम्, सामान्यतो दृष्टमिति अन्वयव्यतिरेक्यनुमानम्।"** [2] एतद् विषयस्य विशदवर्णनं वाचस्पतिमिश्रः न्यायवार्त्तिकतात्पर्यटीकायां प्रस्तुता। इत्यनेन वचनेनस्वमतस्य उपसंहारः प्रदर्शितः आचार्यैः।

**शब्दप्रमाणम्**

प्रत्यक्षनिरूपणान्तरम् अनुमानं निरूपितम्, अनुमानानन्तरं शब्दः निरूप्यते। शब्दनिरूपणप्रसंगे अत्र जिज्ञासा जायते प्रत्यक्षशब्दयोः सारूप्यात् अनुमानस्य च वैरूप्यात् किमर्थं प्रत्यक्षानन्तरं अनुमानं निरूपितमिति वाचस्पतिमिश्र-तात्पर्यटीकोक्ताक्षेपमुपस्थाप्य समादधति टीकाकारः- शब्दस्य अनुमानपूर्वकत्वात्

---

[1] सा. बो. टी.-पृ. 148

[2] सा. बो. टी.-पृ. 149

अनुमानानन्तरं शब्दं निरूपितम्। कथमनुमानपूर्वकः शब्दः इत्यत्रोक्तं कौमुदीकारः **"स्वार्थसंबन्धज्ञानसहकारिणश्च"** [१] अतः टीकाकारः वदति वाच्यवाचकभावज्ञानसहकृतनैव शब्दाद् अर्थज्ञानं जायते। पुनश्च अनुमानशब्दयोः उपजीव्योपजीवकभावसंगति यथा प्रयोजकवृद्धवचनानुसारेणैव प्रयोज्यस्य प्रवृत्तिं दृष्ट्वा पार्श्वस्था शिशुः अनुमिनोति अस्य शब्दस्य अयमर्थः इति ततश्च शब्दज्ञानं जायते। अत एव उक्तं टीकाकारेण **"यदनुमानं तत्पूर्वकत्वाच्छब्दार्थसंबन्धज्ञानस्येत्यर्थः।"**[२] अस्य सम्बन्धस्य तात्पर्यार्थः टीकाकारैः 'गामानय' इति दृष्टान्तेन निर्दिष्टः। अतः अनुमानानन्तरं शब्दस्य निरूपणम्। शब्दस्य लक्षणं कृतं श्रीमदीश्वरकृष्णेन "आप्तश्रुतिराप्तवचनं तु" इति अस्य व्याख्याने टीकाकारैः जिज्ञासा उपस्थापिता यत् कस्य लक्ष्यत्वं कस्य वा लक्षणत्वम्। समाधानं च प्रस्तूयते लक्ष्यलक्षणयोः विभागः विद्यते। इदं च मूलवाक्ये आप्तवचनं' तु शब्दप्रमाणस्य लक्षणम् शब्दप्रमाणं तु लक्ष्यमिति। निर्देशः। अवशिष्टं 'आप्तश्रुतिः' इयं असाधारणधर्मलक्षणमस्ति। आप्तश्रुतिपदस्य विग्रहेण व्याख्यायते। आप्ता प्राप्तेति। 'प्राप्ता' युक्तेति। सत्यार्थबोधनसामर्थ्येन समीचीना, दोषविहीनेति वार्थः। टीकाकारः जिज्ञासितवान् यत्- सांख्यसिद्धान्ते चित्तवृत्तेरेव प्रमाणत्वेन स्वीक्रियते तर्हि श्रुतिः आगमप्रमाणता कथं भवितुमर्हति। तस्य समाधानावसरे श्रुतीतिपदस्य

---

[1] सां. त. कौ.-पृ. 35

[2] सा. बो. टी.-पृ. 152

व्याख्यानं करोति, अस्याशयं वर्तते यत् 'वाक्यजनितं वाक्यार्थज्ञानमिति श्रुतिपदं कोशे "श्रुतिः स्त्री-वेद-आम्नायः' इति श्रुतेः विभिन्ननामानि सञ्जितानि विद्यन्ते **"वेदवाक्य एव शक्तत्वात्कथमस्यार्थस्योपलब्धिरिति चेत्"।**[१] टीकाकारः वदति **"श्रुतिपदमत्र जहदजहल्लक्षणया सा- मान्यवाक्यपरमाश्रित्य पुनरुपचारात् वाक्यजन्यज्ञानपरं तदाश्रीयत इत्येवमुक्तार्थलब्धेरिति गृहाण"।**[२]सारबोधिनीकारः नैयायिकानां मतोपस्थापनेन श्रुतिपदस्य तात्पर्यं स्फोरयति यथा "द्विरेफः शब्दायते" यस्मै रेफद्वयघटितं यथा 'भ्रमरपदं ' लक्ष्यते पुनश्च भ्रमरपदेन जन्तुविशेषरूपोऽर्थो लक्ष्यते तद्वत् **"श्रुति पदेन वाक्यं लक्ष्यते' पुनश्च वाक्येनजन्यं ज्ञानं लक्ष्यत इत्येवं लक्षितलक्षणा समाश्रयणेन पूर्वोक्तार्थलाभ इति बोध्यम्।"**[३] श्रुतिः श्रोतुं योग्यं श्रुतिः, श्रुतिपदज्ञानार्थकमिति, टीकाकारैः अग्रे उदाहरणं प्रस्तूयते **"ऋजुमार्गेण कार्यसिद्धौ को वा कुटिलं पन्थानमाश्रयेत्"**[४] इति। **"तस्मादत्र सर्वथा श्रुतिपदं वाक्यजन्यज्ञानपरमिति ग्राह्यमिति तत्त्वम्।"**[५] टीकाकारः पूर्वपक्षरूपेण वदति श्रुतिशब्दस्य **"शाब्दबोधपरत्वे कथम् 'आप्तवचनम्' इत्यनेन सामानाधिकरण्यं, न हि**

---

[1] सा. बो. टी.-पृ. 153

[2] सा. बो. टी.-पृ. 154

[3] सा. बो. टी.-पृ. 154

[4] सा. बो. टी.-पृ. 154

[5] सा. बो. टी.-पृ. 154

**वचनमेव ज्ञानं भवितुमर्हतीति चेत्।"**[१] तस्य समाधानं प्रस्तौति- "वाक्येन अर्थ्यते=स्वकीयतात्पर्यविषयतया प्रार्थ्यते योऽभिधेयस्तज्ज्ञानस्यैव वाक्यजन्यस्याऽऽगमप्रमाणत्वं न तु यथा- श्रुतवाक्यजन्यज्ञानस्येत्यर्थबोधनार्थं तत्सार्थक्यात्। अर्थात् अत्र कारिकाकारेण यतवाक्यजनितं इतिपदं प्रयुक्तं तस्य तात्पर्यं श्रुतिप्रमाणं एव वर्तते न तु सामान्यश्रुतिवाक्यम्। अतः यजमानः प्रस्तरः इत्यत्रापि नाव्याप्तिः। वेदस्य स्वतः प्रामाण्यात् वेदवचनमेव वाक्यजनितं सिद्ध्यति इति नाऽत्र संशयः। पुनश्च आचार्यशिवनारायणशास्त्रिणा वाक्यजनितस्य ज्ञानस्य स्वरूपप्रकाशने किंञ्चित् विशिष्टं व्याख्यानं प्रस्तौति। तथाहि आदौ वाक्यजनितं ज्ञानं द्विविधं स्वतः प्रामाण्यं परतः प्रामाण्यञ्च। अन्यप्रमाणनिरपेक्षस्वार्थबोधनसामर्थ्यं स्वतः प्रामाण्यम्। अत्र अस्य ग्रन्थस्य इदं वैशिष्ट्यं यत् आचार्यैः नैकेषां मतानाम् उपस्थापनं विहितं तेन च ग्रन्थस्य रहस्यं प्रकाशितं भवति। तदर्थं टीकाकारः अत्र कपिलजैमिनीयमतं उपस्थापितवान्। यथा सांख्ये च मीमांसायां ईश्वरः वेदकर्त्ता न मन्यते। वेदस्य रचना, पुरुषविशेषरूपेण ईश्वरेणापि न कृता इति स्वीकरोति, अतः वेदः अपौरुषेयः अस्ति। सूत्रम्- **"न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् इति"**[२] इत्यनेन चोदनासूत्रेण कुमारिलस्वामिभिः उक्तं "यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः" वेदस्य स्वतः प्रमाणत्वं अपौरुषेयत्वं च, तद्विषये सम्बन्धे चोक्तं-

---

[1] सा. बो. टी.-पृ. 154

[2] सांख्यसूत्रम्- 5/46

**"यदा स्वतः प्रमाणत्वं तदाऽन्यन्नैव गृह्यते।**

**निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः"।**

टीकाकारैः सांख्यप्रवचनभाष्यकाराणां मतम् उल्लिखितं। अन्ते निष्कर्षरूपेण टीकाकारः वदति "न पुरुषोच्चरितितामात्रेण पौरुषेयत्वं, श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयव्यवहाराभावात्, किन्तु बुद्धिपूर्वकत्वेन। वेदान्तिनः जैमिनीयश्च वेदस्य अपौरुषेयत्वं मन्यते। टीकाकारैः अग्रे भामत्यां पंक्तिः उल्लिखिता "यथाऽत्र सर्गे------फलितम्।" सांख्यतत्वकौमुदीकारेण यदुक्तं वेदमूलेतिहासः पुराणवाक्यजनितमपि ज्ञानं युक्तं भवति। तस्य व्याख्यानं टीकाकारेण अतीव सविस्तरेण कृतं वर्तते। तत्र आचार्यैः न्यायमीमांसावेदान्तादिदर्शनानां टीकाकाराणां च मतं उपस्थापितमेवं श्रुतीनां, श्रुत्यभिमतस्मृतिनां तन्त्राणामपि वाक्यं प्रमाणरूपेण उपस्थापितमेव दृश्यते। स्मृत्यादिनां तन्त्राणां आगमानां च कथं वेदमूलकत्वं उपवेदानां अथ च तेषां प्रस्थानानामपि स्वरूपं तेषां भेदः आगन्तुकानां जिज्ञासुनां हिताय आचार्यैः प्रतिपादितः। तत्रैव संहिताब्राह्मणारण्यकानां विधिमन्त्रनामधेयनिषेधवाक्यानां कथं विधित्वम् एतत् सर्वं यादृशं शिवनारायणशास्त्रिणा प्रतिपादितं वर्तते तादृशं अन्यत्र कुत्रचिदपि टीकाग्रन्थेषु नोपलभ्यते। तत्रैव वेदांगानां प्रयोजनं प्रतिपादने आचार्यैः उक्तं **"वैदिकपदसाधुत्वज्ञानेन ऊहादिकं व्याकरणस्य प्रयोजनम्। तच्च "वृद्धिरादैच्" इत्याद्याध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव**

**प्रकाशितम्। तत्र कात्यायनेन मुनिना पाणिनीयसूत्रेण वार्त्तिकं विरचितम्।"**[1]

अर्थात् यानि अपि स्मृतिपुराणव्याकरणादीनि शास्त्राणि प्रथितानि तानि अपि वेदमूलकत्वात् आप्तप्रमाणानि एव। अस्मिन् व्याख्याने आचार्यः यथा न्यायमीमांसाशारीरकमीमांसाधर्मशास्त्रयोगशास्त्रशैवमन्त्रशास्त्राणां वाक्यं सप्रमाणं निर्दिष्टवान् तथा अन्यत्र नोपलभ्यते। विस्तरभयात् मया नोलिखितम्। अत्र शिवनारायणशास्त्रिणा चर्तुणां उपांगानां यद् विवेचनं कृतं तस्मिन् विषये स्वयं श्रीशंकराचार्यैः सर्वसिद्धान्तसंग्रहे यदुक्तं, तेषां उल्लेखं अत्र टीकाकारः करोति।

**"वेदांगानि षडेतानि शिक्षा व्याकरणं तथा।**

**निरुक्तं ज्योतिषं कल्पश्छन्दोविचितिरित्यपि॥**

**मीमांसान्यायशास्त्रं च पुराणं स्मृतिरित्यपि।**

**चत्वार्येतान्युपांगानि बहिरंगानि तानि वै॥**

**आयुर्वेदोऽर्थवेदश्च धनुर्वेदस्तथैव च।**

**गान्धर्ववेदश्चेत्येवमुपवेदाश्चतुर्विधाः॥**

**शिक्षा शिक्षयति व्यक्तं वेदोच्चारणलक्षणम्।**

**वक्तिव्याकरणं तस्य संहितापादलक्षणम्"॥**[2]

---

[1] सा. बो. टी.-पृ. 164

[2] सा. बो. टी.-पृ. 174

आचार्यमिश्रेण प्रतिपादितं यत् भगवान् कपिलः यो हि वेदः अधीतवान् तमेव अस्मिन् कल्पे स्मृत्वा उपदिष्टवान्, अस्मिन् व्याख्याने टीकाकारः स्पष्टयति जिज्ञासामुखेन महाप्रलयान्तरे आदिविद्वान् कपिलः अनुष्ठितप्रकृष्टधर्मबलेन सृष्टेः आदौ एव स्वयंभुव अतीतकल्पातीतवेदं अस्मिन् कल्पे उपदिष्टवान्। अत्र इदं तात्पर्य यत् योगधर्मानुष्ठानेन पूर्वकल्पीयमपि वृत्तान्तं अस्मिन् कल्पे अभिव्यक्तं भवति। तथाहि टीकाकारेण **"कल्पान्तरानुभूतस्यापि भवति प्रकृष्टयोगजधर्मबलेन स्मरणमित्यत्र कैमुतिकन्यायसिद्धं प्रसिद्धं संवादमुपन्यस्यति।"**[1] आचार्यः तेषां दृष्टान्तं अत्र उपस्थापितं यो हि गतकल्पीयं वृतान्तमपि स्मृतम्। तेषु भगवान्जैगीषव्यः प्रमुखः वर्त्तते तथाहि अत्र 'अथ भगवान आवह्यः तनुधरस्तम् उवाच- **"दशसु महासर्गेषु भव्यत्वाद्।"**[2] भगवान् आवह्यः जैगीषव्यं प्रति अतीतकल्पीयं वृत्तान्तं ज्ञातुं जिज्ञासति। जैगीषव्यः तं दशकल्पीयं वृत्तान्तं श्रावयति। एतद् सविस्तरेण टीकाकारेणात्र उपस्थापितम्। तथाहि "यदि योगीन्द्रस्य जैगीषव्यस्य बहुकल्पानुभूतविषयस्य स्मरणं सम्भवति तदा किमु वक्तव्यं सर्वज्ञस्येश्वरस्य तथा स्मरणं भवतीति। तत्र मानुषाणां वर्षं देवानां रात्रिदिने भवतः तयोरव्ययं विभागः- नराणामुदगयनं देवानामहः, दक्षिणायनं तु रात्रिः। त्रिंशता रात्रिदिनैरेको दिव्यो मासो भवति, स च मानुषाणां त्रिंशद् वर्षात्मकः।

[1] सा. बो. टी.-पृ. 176

[2] सा. बो. टी.-पृ. 177

द्वादशभिर्मासैरेको दिव्यो वर्षो भवति, स च मानुषाणां 360 वर्षात्मको भवति। 12000 दिव्यवर्षाणाम् एकं दिव्यं युगं भवति। सहस्रदिव्ययुगानाम् एकं ब्राह्मं दिनं भवति तावता एव ब्राह्मी रात्री। किमुक्तम्? देवयुगानां सहस्रं ब्राह्मदिनं ज्ञातव्यम्, सहस्रमेव रात्रिः। तथा च मनुः- "दैविकानां युगानां तु सहस्रं परिसंख्यया। ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च।" तत्रायं विवेकः- मानुषाणां 4,32,000 वर्षैरेकं कलियुगं भवति, ततो द्विगुणम् अर्थात् 8,64,000 वर्षैः द्वापरम्, कलियुगात् त्रिगुणम् अर्थात् 12,96,000 वर्षैस्त्रेतायुगं भवति, कलियुगात् चतुर्गुणं च अर्थात् 17,28,000 वर्षाणां सत्ययुगं भवति। चतुर्णामेषां संकलनया अर्थात् 43,20,000 वर्षाणाम् एका चतुर्युगी भवति। दिव्यमानेन गणनया तु चत्वारि वर्षसहस्राणि कृतयुगम्, त्रीणि वर्षसहस्राणि त्रेतायुगम्, द्वे वर्षसहस्रे कलिः, 2400 दिव्यवर्षाणां द्वापरः, 3600 दिव्यवर्षाणां त्रेता, 4800 दिव्यवर्षाणां च सत्ययुगं भवति। तथोक्तं विष्णुपुराणे- "दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्। चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे।" संकलनया 12000 वर्षैकं दिव्यं युगं भवति। यदाह भगवान् मनुः- "यदेतत्परिसंख्यातमादावेव चतुर्युगम्। एतद्द्वादशसाहस्रं देवानां युगमुच्यते।" सहस्रचतुर्युगानाम् एकं ब्रह्मणो दिनं भवति, सहस्रचतुर्युगैरेव तस्यैका रात्रिर्भवति। एतदुक्तं भवति- 43,20,000X1000=4,32,0000000 वर्षैर्ब्राह्मं दिनं भवति, तावद्भिरेव वर्षैर्ब्राह्मरात्रिः। तदित्थं मानुषाणां 8,64,0000000 वर्षैर्ब्रह्मणो रात्रिदिने भवतः। तत्र ब्रह्मणो दिनं कल्प इत्युच्यते, ब्राह्मी रात्रिस्तु प्रलय इति भाष्यते।

ईदृशैस्त्रिंशता अहोरात्रैरेको ब्रह्मो मासो भवति, स च मानुषाणां 25,92,000,000,00 वर्षात्मकः सम्पन्नो भवति। द्वादशभिर्मासैरेको ब्राह्मो भवति, स च मानुषाणां 31,40,000000000 वर्षात्मकः फलितो भवति। शतवर्षेषु पूर्णेषु सत्सु ब्रह्मा प्रमाणं करोति, यतः शतायु स भवति। तस्य शतवर्षाश्च मानुषाणां 31,10,40,000000000 वर्षैः सम्पद्यन्ते। ब्रह्मणः प्रयाणसमये च सर्वे लोकाः सावयवा विनश्यन्ति, अयमेव च महाप्रलय इत्युच्यते।" **तदिदं शान्तिपर्वणि महाभारते (२३१,३१) प्रथमाध्याये मानवधर्मशास्त्रे च (१,७३) सुस्पष्टम्।"**[१] एवमेव मन्वादिनामपि श्रुतिमूलकत्वम् अधीतवेदत्वं च प्रदर्शितम्। सांख्यकारिकाकारः यत् "आप्तश्रुतिराप्तवचनं तु इत्यत्र वाक्ये "आप्त" इति पदं प्रयुक्तवान् तस्य प्रयोजनं प्रदर्शितं वाचस्पतिमिश्रेण शाक्यभिक्षुनिग्रन्थकसंसामोचकादीनामागमाभासाः परिहृता भवन्ति। अस्य व्याख्याने टीकाकारः ग्रन्थस्य किञ्चित् विशिष्टं रहस्यं प्रकाशयति तत्र मिश्रोक्त-शाक्यपदस्य व्याख्यानं इत्थं भवति **"तत्र पञ्चविंशतिबौद्धभेदानां मध्येऽन्यतमस्य शुद्धोदननृपतिसूनोः शाक्यसिंहस्य मतानुयायिनः सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः बौद्धसन्यासिनः शाक्यभिक्षव इत्युच्यन्ते।"**[२] अनेन प्रतीयते यद् बौद्धपरम्परायाः पंचविंशतिसम्प्रदायाः आसन् तेषु

---

[1] सा. बो. टी.-पृ. 178

[2] सा. बो. टी.-पृ. 180

गौतमबुद्धप्रवर्तितसौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः शाक्यपदवाच्याः एताषामेव भिक्षुसंज्ञा आसीत् इति। यतोहि तेषां -

**"कृत्तिः कमण्डलुर्मोण्डयं चीरं पूर्वाह्णभोजनम्।**

**सद्यो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः।"[1]**

टीकाकारैः अत्र जैनबौद्धानां मतं उपस्थापितम्। ते आगमाः वेदविरुद्धार्थानां प्रतिपादयन्ति। जैनबौद्धमतयोः उल्लेखं स्वग्रन्थेकृतवान्, तस्योल्लेखेनैव अनयोमतयोः निराकरणं सूचयति तथाहि- **"कैश्चिदेव परिग्रहणं, विप्रलिप्सुना बुद्धेनागमः प्रणीत इति विरूद्धस्मरणं च विगानम्।"[2]** वाचस्पतिमिश्रेणोक्तं विच्छिन्नमूलत्वात् बौद्धानां आगमे प्रतिपादितशब्दः आगमाभासः इति। टीकाकारः जिज्ञासति यत् विगानमात्रेणायुक्ता अस्ति तर्हि षड्दर्शनानामपि अयुक्तत्वं स्यात् यथा- "ईश्वरासिद्धेः" एतेन योगः प्रत्युक्तः' इत्यादिना उभयोः दोषत्वात् कथं शब्दप्रमाणं मन्यते। टीकाकारैः अत्र धर्मलक्षणाधिकरणे भट्टपादस्य मतं प्रस्तूयते यथा-

**"सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः।**

**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम्"।।[3]**

क्रमप्राप्तपार्थसारथिमिश्रोऽपि बुद्धोपदिष्टागमानां अनाप्तत्वं साधितवान् अनेनैव जैनानां अंगादि आगमानां पक्षोपि निराकृतो भवति। तथाहि उक्तं टीकाकारेण

---

[1] सा. बो. टी.-पृ. 180

[2] सा. बो. टी.-पृ. 180

[3] सा. बो. टी.-1/134

**"तस्मादन्येन केनचित्प्रणीतो देशनाधर्मोपदेश इत्यप्रामाण्यमिति।"** [1] आचार्यवाचस्पतिमिश्रः यदुक्तं कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः इत्यस्य व्याख्यानावसरे टीकाकारैः म्लेच्छाः के इत्यस्य व्याख्यानं इत्थं कृतं **"गोमांसखादको यस्तु विरुद्धं बहुभाषते। सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते इति बौधायननिरुक्तम्लेच्छसमानैः, पुरुषेषु अपसदैः=नीचैः, अत एव पशुकल्पैरिति, एवंविधैः कैश्चिदेव परिग्रहात् अयुक्तत्वं बोद्धव्यमित्यर्थः।"** [2] आप्तश्रुतिराप्तवचनं तु इत्यत्र यत् तु पदं प्रयुक्तं तस्य व्याख्यानं कृतं मिश्रपादैः तु शब्देन तु-शब्देनानुमानाद् व्यवच्छिनत्ति। अस्य तात्पर्य स्फोरितं शिवनारायणशास्त्रिणा **"आप्तवचनं तु" इति तु शब्देनेत्यर्थः। व्यवच्छिनत्ति=पृथक् करोति, "आगमप्रमाणम्" इति शेषः।** [3] अत्र वाक्यार्थानां यत् प्रमेयत्वं प्रदर्शितं तस्य तात्पर्य स्फोरितं "यथा प्रमेयस्य वह्निर्धर्मो धूमोऽस्ति न प्रमा तद्धर्मः=प्रमेयवाक्यार्थस्य धर्मो वाक्यं येन तस्य वाक्यार्थस्य लिंगं स्यादित्यर्थः। एतञ्च पदानामेव पदार्थस्मरणावान्तरव्यापाराणां वाक्यार्थप्रमां प्रति कारणतया प्रमाणत्वात् तेषां चा पक्षधर्मतया लिंगत्वानुपपत्तेः" इत्यादिना तात्पर्यटीकायां, **"कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते।"** [4] तात्पर्यं इदमेव यत् यथा लोके देवदतः

---

[1] सा. बो. टी.-पृ. 181
[2] सा. बो. टी.-पृ. 182
[3] सा. बो. टी.-पृ. 182
[4] सा. बो. टी.-पृ. 182

गच्छति इत्यनेन वाक्येन सम्भवात्। एवमेव धूमदर्शनेन वह्निः ज्ञानं इत्यत्र धूमदर्शनं लिंगं न तु वाक्यम्। अत एव आचार्यः वाचस्पतिमिश्रः वाक्यार्थं प्रमेयमुक्तवान् न तु प्रमेयस्य धर्मः वाक्यम् इति। टीकाकारेण शिवनारायणशास्त्रिणा तथाहि इत्यनेन शास्त्रेण वाक्यवाक्यार्थयोः सम्बन्धः स्पष्टीकृतः "तथाहि प्रयोजक वृद्धप्रयुक्तं "गामानय" इति वाक्यं श्रुत्वैव प्रयोज्यवृद्धेन गवानयने कृते अव्युत्पन्नस्तदालोक्य "तद् वाक्यं गवानय न संबन्धवत्" इत्यवधारयति। अनन्तरं च कदाचिदन्येन तथा प्रयुक्ते **"इदं गामानयेति वाक्यं गवानयनार्थकम्, तद्वाक्यस्य गवानयनसंबन्धत्त्वात्, प्रयोजकवृद्धप्रयोग इव" इत्यनुमानप्रक्रियया वाक्यार्थावगमः स्यादेव। तस्माद् वाक्यं न स्वतः स्वार्थं बोधयेत्, किन्तु संबन्धग्रहसापेक्षमेवेति वैशेषिकाशंकां परिहरति न चेति। तथा च वाक्यस्य स्वार्थबोधकत्वं न संबन्धग्रहणाधीनं व्यभिचारादिति भावः।"** [१]

शब्दनिरूपणानन्तरं उपमानादिनां निराकर्तुं प्रमाणान्तराणां शास्त्रान्तरे यद्स्वरूपं विहितं तेषां स्वरूपं उपस्थाप्य तन्निराकरणं क्रियते। कारिकाकारः श्रीमदीश्वरकृष्णः कारिकायां सर्वप्रमाणसिद्धत्वात् इत्यत्र प्रयुक्तसर्वपदस्य व्याख्यानं कृतं, मिश्रपादैः 'प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति, अस्य व्याख्याने टीकाकारः प्रवदति- ये किल नैयायिकाः इत्यनेन शास्त्रेण उपमानस्य स्वरूपं प्रादर्शि ये किल नैयायिकाः

---

[1] सा. बो. टी.-पृ. १८५

**"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्"**[१] इति सूत्रमनुसरन्तिः 'कीदृशो गवय इति नागरिकेण पृष्टो वनेचरः बोधयति 'यथा गौस्तथा गवय' इति, तद् वाक्यम् उपमानम्" इत्येवमुपमानं वर्णयन्ति, तान् प्रति तावदाह उपमानं तावदिति। **'यथा गौस्तथा गवय' इति यद् वाक्यं तज्जन्यं यद् वाक्यार्थज्ञानं तदागमप्रमाणमेवेत्यर्थः।"**[२] अर्थात् पिण्डदर्शनेन आरण्यकपुरुषवचनस्मरणेन च यत् संज्ञासंज्ञिसम्बन्धप्रतीतिः जायते तत् उपमानम्। सांख्यशास्त्रे वाक्यजन्यं वाक्यार्थज्ञानं आगमप्रमाणं तथाहि उक्तं टीकाकारेण "सांख्यसिद्धान्ते वाक्यजन्यं ज्ञानमेवागमप्रमाणं न तु वाक्यमात्रम्, चित्तवृत्तेरेव तत्र प्रमाणत्वादिति ध्येयम्। एवं चागमान्तर्भावान्नोपमानं प्रमाणान्तरमिति भावः। तथा चाहुः प्रशस्तपादाचार्यः– "आप्तेनाप्रसिद्धगवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेवं इति। ये च तार्किकयुक्त्या तेषां मते प्रतिपादयन्ति– **"समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः।"**[३] अत्र टीकाकारैः वाचस्पतिमिश्रोक्तन्यायवार्तिकस्य उपमानस्वरूपमपि प्रदर्शितं अत्र तस्य निराकरणं इत्थं प्रकाशितं विद्यते– **"तथा च संज्ञासंज्ञिसंबन्धज्ञानरूपोपमानफलस्यानुमानेनैव सिद्धत्वान्न तदर्थं पृथगुपमानं मानान्तरमुपेयमिति भावः।"**[४] अर्थात् योहि शब्दः वृद्धैः प्रयोज्यमानत्वात् अथवा

---

[1] न्या.1/1/6

[2] सा. बो. टी.–पृ. 185

[3] सा. बो. टी.–पृ. 185

[4] सा. बो. टी.–पृ. 185

गवयः शब्दः गोसदृशस्य पशुवाचकः वनचरादिभिः प्रयुक्तत्वात् अर्थात् योहि शब्दः यस्मिन् अर्थे प्रयुज्यते स तस्य वाचकः। गोशब्दस्य गोर्वाचकत्वात् अतः गवयशब्दोपि गोसदृशवाचको भवतीति। तच्च- पञ्चावयवन्यायेन संज्ञासंज्ञिसम्बन्धप्रतीतिः अनुमानेनैव सिद्ध्यति। टीकाकारः अत्र क्रमप्राप्त उदयनाचार्यमतं निराकृत्य मीमांसकानां मतं निराकरोति। तत्र मीमांसकाः वदन्ति "उपमानमपि सादृश्यमसन्निकृष्टार्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" इति। **"यत् सादृश्यं-दृश्यमानम् असन्निकृष्टार्थे बुद्धिम् उत्पादयति तत् उपमानम्= प्रमेयबुद्धिजनकमेव सादृश्यम् इन्द्रियप्रत्यक्षमुपमानम्"** [१] अर्थात् पूर्वदृष्टार्थः सादृश्यज्ञानं उत्पादयति। टीकाकारः अत्र प्रतिपादयति- **"गवयनिष्ठं गोसादृश्यज्ञानमुपमानम्, गोनिष्ठं च गवयसादृश्यज्ञानमुपमानफलमिति हि मीमांसकाभिमतम्"** [२]। मीमांसकैः अथ च **"द्वितीयसादृश्यज्ञानस्यापि प्रत्यक्षप्रमात्वमेव न प्रमान्तरत्वमिति यावत्।"** [३] गवय अत्रापि सादृश्यमेव सामान्यवद् भवतीति। स्पष्टयति च आचार्यः **"यथा गवयगतं सादृश्यमध्यक्षं तथा स्मृत्यारूढायां गवि मतं सादृश्यमपि प्रत्यक्षमेवेत्यर्थः"** [४] द्वयोः सादृश्ययोः एकत्वमपि नैव वक्तुं शक्यते। उभयनिष्ठसादृश्यस्य भिद्यमानत्वात्। अत्र टीकाकारेण

---

[1] सा. बो. टी.-पृ. 186

[2] सा. बो. टी.-पृ. 187

[3] सा. बो. टी.-पृ. 187

[4] सा. बो. टी.-पृ. 187

इयं जिज्ञासा उपस्थापिता यत् गोसादृश्यगवय: इत्यत्र अवयवगत: सादृश्यम्। तत् च गौ अवयवसजातीयावयवसम्बन्धित्वरूपं गवये वक्तव्यं गवि एतत् अवयवसजातीया- वयवसम्बन्धित्वं तत् च गोसादृश्यात् अभिन्नम्। एवञ्च एतस्य प्रत्यक्षत्वेऽपि गोसादृश्यस्य प्रत्यक्षत्वं न सम्भवतीति। समाधानं उच्यते यतोहि **"एकस्मिन् जातिविशेषे य एकावयवसंबन्ध:, अन्यस्मिन् जातिविशेषेऽपि स एव एकावयवसंबन्ध इत्यर्थ:।"** [१] अत्र इदानीं एकस्मिन् जातिविशेषे य: एकावयवसम्बन्ध:, अन्यस्मिन् जातिविशेषे सा एव एकावयवसम्बन्ध: एतादृश: गवि गवये सामान्ययोग: अस्ति। एकस्य: प्रत्यक्षीकृते अन्यस्यापि प्रत्यक्षं भवति। अत: उपमानप्रमाणस्य अवकाश: एव न सिद्ध्यति। अत एव **"गोपदार्थे वर्तमानो भूयोऽवयवसामान्ययोगो गवये सादृश्यमुच्यते स च भूयोऽवयवसामान्ययोगो गोत्वादिवदेक: स चेत् गवये साक्षात्कृत: तर्हि गव्यपि साक्षात्कृत एवेति।"**[२] अत्र भट्टपादानां पक्षमपि उपस्थापितं **"सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम्। भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्।"** [३] भट्टमते सादृश्यं अतिरिक्तपदार्थो नास्ति सामान्यनेनैव तस्य ग्रहणसम्भवात्। अत: अत्र उपमानस्य प्रमाणाऽनन्तरत्वं निराकृतं भवति।

**अर्थापत्ते: प्रमाणान्तरत्वनिरास:**

---

[1] सा. बो. टी.-पृ. १८८

[2] स. बो. टी.-पृ.१८९

[3] सा. बो. टी.-पृ.१८९

अर्थापत्तिरपि पृथक्प्रमाणं प्रत्यक्षादिषु अन्तर्भावात् अर्थापत्तेः इदानीं स्वरूपं विचार्यते- मीमांसकाः अर्थापत्तिं स्वतन्त्रप्रमाणं स्वीकुर्वन्ति। सांख्यमते तु अर्थापत्तिप्रमाणस्य अन्तर्भावः अनुमाने एव भवतीति। अर्थापत्तेः यत् स्वरूपं आचार्यवाचस्पतिमिश्रः प्रतिपादितवान् तस्य तात्पर्यं इत्थं प्रकाशितं आचार्यैः- अर्थापत्तिं स्वतन्त्रं प्रमाणं स्वीकुर्वन्ति। तत्र टीकाकारः वदति **"शतवर्षजीवी चैत्रः' इति दैवावाक्यात् संप्रतिपन्नजीवनस्य चैत्रस्य गृहासत्त्वदर्शनेनादृष्टस्य बहिर्भावस्य कल्पनारूपा योऽर्थापत्तिर्मीमांसाभाष्यकाराणामभिमता साप्यनुमानमेव न प्रमाणान्तरमिति।"**[१] अत्र मीमांसका तेषां मतम् उपस्थापितं "अयं आशयः" इत्यनेन शास्त्रेण- **"उपपाद्यज्ञानप्रभवम् उपपादकज्ञानम् अर्थापत्तिः। तत्र योऽर्थोऽन्येन केनचित् कल्पनीयेन विना नोपपद्यते सोऽर्थ उपपाद्यः, यस्य च कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते स कल्पनीयोऽर्थ उपपादक इत्युच्यते। यथा गृहासत्त्वरूपोऽर्थो बहिः सत्त्वरूपेण कल्पनीयार्थेन विना नोपपद्यत इति गृहासत्त्वरूपोऽर्थ उपपाद्य इत्युच्यते।, एवं बहिसत्त्वरूपस्य कल्पनीयार्थस्याभावे सति गृहासत्त्वरूपम् उपपाद्यं नोपपद्यते इति बहिस्सत्त्वरूपोऽर्थ उपपादक इत्युच्यते। तत्र उपपाद्यज्ञानं करणतया अर्थापत्तिप्रमाणम्।"**[२] सा चार्थापत्तिर्द्विविधा- दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तद्

---

[1] सा. बो. टी.-पृ. 190

[2] सा. बो. टी.-पृ. 190

यथाहुः शाबरभाष्यकारः- "अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा उपपद्यते इत्यर्थकल्पना" इति। तत्र दृष्टार्थापत्तेर्लक्षणं यथा श्लोकवार्तिके इत्थं कृतम्-

**"प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत्।**

**अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता॥"** इति।

श्रुतार्थापत्तिरपि तत्रैव लक्षिता वर्तते। यथा-

**"पीनो दिवा न भुंक्ते चेत्येवमादिवचः श्रुतौ।**

**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते॥"**[1]

यद्यपि शिवनारायणशास्त्रिणा (अयमत्र यजुर्पन्था) इत्यनेन अस्य मीमांसकानां पक्षः उपस्थापितः। तथापि अयमत्र निष्कर्षः इत्यनेन तस्य स्वरूपं प्रदर्शितं "उपपाद्यज्ञानेन उपपादककल्पनम् इति। तत्रोपपाद्यज्ञानं करणम्। उपपादकज्ञानं फलम्। येन विना यत् अनुपपन्नं तत् तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्। "पीनो देवदत्तः दिवा न भुङ्क्ते" इत्यत्र पीनत्वमुपपाद्यम्, रात्रिभोजनमुपपादकम्। इत्थं च रात्रि भोजनादिविषयकप्रमितिरूपकल्पनात्मके फले, तत्करणे च पीनत्वाद्यनुपपत्तिज्ञानरूपे अर्थापत्तिशब्दो वर्त्तते।" तथापि **"शतवर्षजीवि चैत्रः"** इत्यत्र **"जीवश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" इत्येवं रूपा या दृष्टार्थापत्तिः** शबरस्वामिनोदाहृता साऽनुमानमेवेति

---

[1] सा. वो. टी.-पृ. 190

यथाहुः शाबरभाष्यकारः– "अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा उपपद्यते इत्यर्थकल्पना" इति। तत्र दृष्टार्थापत्तेर्लक्षणं यथा श्लोकवार्तिके इत्थं कृतम्–

**"प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत्।**

**अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता।।"** इति।

श्रुतार्थापत्तिरपि तत्रैव लक्षिता वर्तते। यथा–

**"पीनो दिवा न भुंक्ते चेत्येवमादिवचः श्रुतौ।**

**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते।।"**[1]

यद्यपि शिवनारायणशास्त्रिणा (अयमत्र यजुर्पन्था) इत्यनेन अस्य मीमांसकानां पक्षः उपस्थापितः। तथापि अयमत्र निष्कर्षः इत्यनेन तस्य स्वरूपं प्रदर्शितं "उपपाद्यज्ञानेन उपपादककल्पनम् इति। तत्रोपपाद्यज्ञानं करणम्। उपपादकज्ञानं फलम्। येन विना यत् अनुपपन्नं तत् तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्। "पीनो देवदत्तः दिवा न भुङ्क्ते" इत्यत्र पीनत्वमुपपाद्यम्, रात्रिभोजनमुपपादकम्। इत्थं च रात्रि भोजनादिविषयकप्रमितिरूपकल्पनात्मके फले, तत्करणे च पीनत्वाद्यनुपपत्तिज्ञानरूपे अर्थापत्तिशब्दो वर्त्तते।" तथापि **"शतवर्षजीवि चैत्रः"** इत्यत्र **"जीवश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याद्दृष्टस्य कल्पना" इत्येवं रूपा या दृष्टार्थापत्तिः शबरस्वामिनोदाहृता साऽनुमानमेवेति**

---

[1] सा. बो. टी.–पृ. 190

**मूलाशयः।"**[1] अतः सांख्यशास्त्रे अर्थापत्तिः अनुमाने एव अन्तर्भावः इति साधितः। **"चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहासत्त्वात्, अहमिव" इत्याकारोऽवसेयः।"**[2] व्याप्तिस्वरूपं च प्रदर्शितम् **"जीविगृहासत्त्वं व्याप्यं बहिस्सत्त्वं च व्यापकम्" व्यतिरेके तु बहिरसत्त्वं व्याप्यं गृहसत्त्वं च व्यापकम्"**[3] अर्थात् अन्वयव्यतिरेकव्याप्त्या चैत्रस्य गृहेः अवर्तमानेपि बहिः वर्तमानतः सिद्धयति तर्हि चैत्रस्य बहिर्ज्ञानाय अर्थापत्तेः ग्रहणं अयुक्तं अत एव उक्तं **"गृहासत्त्वज्ञानस्यैव बहिस्सत्त्वज्ञानरूपानुमितिकरणत्वेनानुमान पदाभिधेयत्वाद् बहिर्भावदर्शनरूपाया अनुमितेरनुमानत्वासंभवात्। सांख्यमतानुसारं लिंगसमुत्था बौद्धप्रमैव वात्रानुमानम्।"**[4] अत्र जीवच्चैः बहि अस्तितावान् गृहेऽवर्तमानत्वात् अत्र गृहेऽवर्तमानत्वहेतुः चैत्रस्य पक्षस्य क्वचिद् सत्त्वेन बाधितुं न शक्यते। अत्र वस्तुतः प्रत्यक्षप्रमाणेन सिद्धस्य गृहासत्त्वस्य गृहे सत्त्वेन बाधः नैव कर्तुं शक्यते। अत एव वदति टीकाकारः **"यथान्यत्र सत्त्वेन गृहासत्त्वं न विरूध्यते तथा गृहसत्त्वेनापि अन्यत्र सत्त्वं न विरूद्धमिति।"**[5] **"क्वचिद् सत्त्वेन गृहासत्त्वमपनेतुमशक्यं, गृहासत्त्वेन च**

---

[1] सा. बो. टी.-पृ. 192
[2] सा. बो. टी.-पृ. 193
[3] सा. बो. टी.-पृ. 194
[4] सा. बो. टी.-पृ. 194
[5] सा. बो. टी.-पृ. 195

**क्वचित्सत्त्वमपनेतुमशक्यं, विरोधाभावादिति सरलार्थः।"** [१] अत्र शिवनारायणशास्त्रिणा कौमुदीकाराणां अस्याः जिज्ञासायाः 'चैत्रस्य गृहे रुसत्वेन सत्त्वमात्रं विरुध्यते गृहेसत्त्वं वा इत्थं विवेचनं कृतं यत् गृहासत्त्वेन **"गृहासत्त्वेन=गृहवृत्तिसत्त्वाभावेन सह यत्र क्वचन सत्त्वस्य=यत् कुत्रापि सत्त्वस्य, गृहेतरवृत्तिसत्त्वस्यापीति यावत् विरोधो नास्तीत्यर्थः।"** [२] यतोहि सत्त्वस्य विषयः भिन्नः असत्त्वस्य भिन्नः। **'सत्त्वासत्त्वयोर्विभिन्नपदार्थसंबन्धित्वादित्यर्थः।"** [३] अतः वक्तुं शक्यते चैत्रस्य बहिः वृत्तित्वस्य गृहे असत्त्वस्य विरोधः नास्ति। तथाहि उक्तं **"एकस्यापि सत्त्वस्य गृहगृहेतरावृत्तित्वभेदेनान्योऽन्यभेदावगमात्तस्या प्रतियोगित्वात्।"** [४] देशसामान्येनापि विरोधः नैव वक्तुं शक्यते। अत एव वदति कौमुदीकारः **"प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात्।"** अस्य व्याख्यानावसरे टीकाकारः वदति चैत्रस्य अव्यापकत्वनिश्चये सति तस्य सर्वदेशे वर्तमानता असम्भवात् इति। तथाहि स्पष्टयति टीकाकारः गृहसत्त्वमात्रेण विरोधः न तु सत्त्वमात्रेण तत्र प्रमाणमपि दर्शयति **"प्रत्यक्षप्रमाणेनावधारितस्य गृहेऽसत्त्वस्य गृहसत्त्वेन**

---

[1] सा. बो. टी.-पृ. 195

[2] सा. बो. टी.-पृ. 195

[3] सा. बो. टी.-पृ. 195

[4] सा. बो. टी.-पृ. 195

**प्रतिक्षेपायोगात्=प्रतिरोधस्यायुक्तत्वादिति संबन्धः।"**[१] अतः गृहासत्त्वस्य निश्चये जाते गृहसत्त्वस्य पाक्षिकसंशये सत्त्वेपि अत्र विरोधः नास्ति। टीकाकारः विद्वतोषिणीकाराणां मतमपि उपस्थापितं **"किं च गृहासत्त्वस्य सन्धिग्धत्वे "स्थाणुर्वा पुरुषो वा" इति। 'चैत्रस्य गृहस्य वा गृहासत्त्वं वा' इति** संशयशरीरो वाच्यः, तथा च गृहसत्त्वमिव गृहासत्त्वमपि संशयविषयीभूतमापद्येत, तच्चासाम्प्रतम्। न हि यद् विशेषतः प्रमितं तस्य तत्रैव विपरीतप्रमाणविषयत्वरूपः संशयः समुदेतुं प्रभवति, न खलु स्थाणुत्वनिर्णये सति **"स्थाणुर्वा पुरुषो वा" इत्येवं संशयानां जनाः समुपलभ्यन्त इति चेत्। न, गृहासत्त्वस्य सांशयिकत्वास्वीकारेण त्वदुक्तशंका या एवानुत्थानात्।"**[२] कौमुदीकारेण यदुक्तं **"सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति"**[३] तस्य रहस्यं टीकाकारेण इत्थं स्फोरितं **"प्रमाणविनिश्चतो गृहाभावश्चैत्रस्य पक्षिकं गृहसत्त्वं निराकुर्वन् सत्त्वमात्रमपि निराकर्तुमर्हतीति न युक्तम्, किन्तु गृहसत्त्वस्य सांशयिकत्वमेव व्यपनेतुं सोऽर्हतीति संबन्धः कार्यः।"**[४] अर्थात् यदि गृहाभावः **सत्त्वमात्रं प्रतिक्षेप्तुं नार्हति तदा सत्त्वमात्रस्याबाध्यतया बलवत्त्वं बोधयन्**

---

[1] सा. बो. टी.-पृ. 196

[2] सा. बो. टी.-पृ. 197

[3] सा. बो. टी.-पृ. 197

[4] सा. बो. टी.-पृ. 198

**दौर्बल्यबीजं सांशयिकत्वमप्यपनयत्वित्याहसांशयिकत्वं वा अपनेतुमिति।"** [१] अतः विरोधे सति दुर्बलस्य बाधः भवति। अत एव उक्तं शास्त्रिणा **"दौर्बल्यं बाध्यताप्रयोजकम्" इति न सामान्यतो नियमः, किन्तु विरोधे सत्येव दौर्बल्यं बाध्यताप्रयोजकम्, इत्येवास्ति सार्वत्रिको नियमः।"** [२] अतः चैत्रस्य गृहासत्त्वं अनुमानेनैव सिद्धं भवति। अर्थापत्तेः बाधः पूर्वमपि उक्तः। अनुमानस्वरूपं वर्तते चैत्रो बहिरस्ति जीवत्वे सति गृहासत्त्वात्, अहमिव" इत्याकारोऽवसेयः।" अत्र बृहतदीपिकायाः सन्दर्भेण मीमांसकानां यत् अर्थापत्तिप्रमाणस्वरूपप्रदर्शनं **"दिवाऽभुञ्जानस्य चैत्रस्य पीनत्वेनरात्रिभोजनकल्पनम्।"** [३] तस्य पञ्चावयवेन युक्तेन परार्थानुमानेन प्रदर्शनं विहितम्। पीनो देवदतः दिवा न भुङ्क्ते तस्य उपनयः वर्तते। **"तदपि देवदत्तो नक्तंभोजी दिवाऽभुञ्जानः सन् पीनोऽपि न भवति, यथा नवरात्रोपवासी" इत्यनुमानसाध्यत्वान्नार्थापत्तेः फलमिति। एवमन्यान्यपि स्वयमन्तर्भावनीयानीति। अर्थापत्तेः प्रमाणान्तरत्वनिराकरणम् उपसंहरति तस्मादिति।"** [४]

**अभावप्रमाणम्**

---

[1] सा. बो. टी.-पृ. १९८

[2] सा. बो. टी.-पृ. १९८

[3] सा. बो. टी.-पृ. १९९

[4] सा. बो. टी.-पृ. १९९

अर्थापत्तेरनुमाने अन्तर्भावं प्रदर्श्य टीकाकारः अभावस्य प्रत्यक्षेऽन्तर्भावत्वं प्रदर्शितवान्। मीमांसाभट्टपादाः वेदान्तिनश्च अभावप्रमाणवादिनः, ते वदन्ति यद् "अत्र घटः स्यात् तर्हि उपलभ्येत, यतो नोपलभ्यते अतः नास्ति। इत्यत्ययं विज्ञानम् अनुपलब्धिप्रमाणफलम् इत्येवं मन्यते। मिश्रमहाभागेन तेषां मतं खण्डनं कर्तुं एवमभावोऽपि प्रत्यक्षमेव इति उक्तम्। यथा अर्थापत्तेरनुमाने अन्तर्भावः तथैव अभावज्ञानस्य उत्पादकः अनुपलब्धिप्रमाणमपि प्रत्यक्षे समाहितं भवति। टीकाकारः अत्र आक्षिपति यत् प्रत्यक्षप्रमाणस्य लक्षणानुसारेण अर्थसन्निकृष्टेन्द्रियं आवश्यकम्। अतः 'अभावेन' सहेन्द्रियसन्निकर्षं न भवति तर्हि प्रत्यक्षप्रमाणेन किमर्थ अभावस्य ग्रहणं इति कथ्यते। अर्थात् अभावस्य प्रत्यक्षं भवति इति कथं उच्यते। टीकाकारः अत्र 'भूतले घटाभावः इति दृष्टान्तेः समाधानं करोति। भूतलस्य परिणामविशेषाद् भिन्नः घटाभावः कोऽपि पदार्थः नास्ति। अतः तस्य प्रत्यक्षं भवति इति उच्यते। भूतलस्य ज्ञानेनैव अभावस्य ज्ञानं सिद्ध्यति। यतोहि परिणामीभूतलेन सह इन्द्रियसन्निकर्षे सति भूतलस्य परिणामविशेषरूपेण अभावेनापि इन्द्रियसन्निकर्षो विद्यते। भूतले यो हि घटाभावः स भूतलस्यैव परिणामविशेषः इति स्वीक्रियते चेदपि अभावस्य अकार्यत्वात् कथं भूतलस्य परिणामः अभावः। अतएव टीकाकारः वदति- **"अन्यपरिणामपेक्षया विलक्षणोऽयं परिणामः।"** अस्मिन् प्रसंगे पातञ्जलयोगदर्शने त्रिविधः परिणामः प्रकीर्तितः ते च धर्मपरिणामः लक्षणपरिणामः अवस्था परिणामश्चेति। अतः टीकाकारेणात्र योगसूत्रकाराणां मतं उपस्थापितम्।

तथाहि- "धर्मलक्षणावस्थाभेदेन त्रिविधो हि धर्मिमात्रस्य परिणाम:। **"सर्वे भावा: क्षणपरिणामिन ऋते चिच्छक्ते:"** इत्यभ्युपगमात्। यस्तावदवस्थितस्य धर्मिण: पूर्वधर्माभिभवे धर्मान्तरप्रादुर्भाव: स धर्मपरिणाम:। प्रादुर्भूतस्य च धर्मस्यानागतादिलक्षणपरित्यागे वर्तमानादिलक्षणलाभो लक्षणपरिणाम:। वर्तमानलक्षणानां च धर्माणां प्रतिक्षणमवस्थातारतम्यमवस्थापरिणाम:। तत्र पृथिव्यादिभूतानां धर्मिणामवस्थितानामेव पूर्वपिण्डादिधर्माभिभवे घटादिगवादिरूपधर्मान्तराऽऽविर्भाव:= धर्मपरिणाम:। धर्माणां चातीतानागतवर्तमानलक्षणलाभ:= लक्षणपरिणाम:। वर्तमानलक्षणानां च घटादिधर्माणां नवत्वपुराणत्वे, गवादीनां च बाल्यकौमारयौवनवार्धक्यम्=अवस्थापरिणाम:। एवं चक्षुरादीन्द्रियाणां तत्तदर्थानालोचनादिरूपपूर्वधर्माभिभवे तत्तदर्थालोचनादिरूपधर्मान्तरप्रादुर्भाव:= धर्मपरिणाम:। धर्माणां चातीतानागतवर्तमानलक्षणलाभ:= लक्षणपरिणाम:। वर्तमानलक्षणानां चालोचनादीनां स्फुटत्वास्फुटत्वादि:= अवस्थापरिणाम इति विवेक:।"[1] पुनरपिघटाभावस्य पदार्थान्तरत्वमपि नैव वक्तुं शक्यते यतोहि- पदार्थान्तरत्वे स्वीकारे सति तेन पदार्थान्तरेण सह (घटाभावरूपेण) इन्द्रियाणां सन्निकर्ष अथवा अन्त:करणस्य पदार्थान्तरत्वाकाराकारितवृत्ति: अपि स्यात् तेन च तस्य घटाभावरूपपदार्थान्तरस्य प्रत्यक्षत्वापत्ति: आपतति तथाहि- **"केवलात्मकस्य**

---

[1] सा. बो. टी.-पृ. 201

**भूतलस्येन्द्रियसन्निकर्षावश्यम्भावात् बुद्धिवृत्तेरपि केवलभूतलाकारात्वाच्च तद्गतकैवल्यस्य प्रत्यक्षप्रमाणगम्यत्वमेवेत्यत्र फलितम्।"**[१] टीकाकारेण पुनः जिज्ञासा उपस्थाप्यते, सद्वितीयत्वधर्मयोः भूतलस्य कथं तद्विरुद्धकैवल्यरूपधर्मवत्त्वं वक्तुं शक्यते। टीकाकारैः अत्र समाधत्ते तथाहि सांख्यसिद्धान्तानुसारेण सर्वस्य भावस्य प्रतिक्षणे परिणामो भवति पदार्थानां त्रिगुणात्मकत्वात्। तथाहि- **"चलं च गुणवृत्तम्" इति स्वीकारात् प्रतिक्षणम् अन्यथाऽन्यथाप्रथाशीलाः सर्वे पदार्था इत्यर्थः। कस्मिंश्चित् समये सद्वितीयत्वरूपावस्थया भूतलमवतिष्ठते, कदाचिद् च कैवल्यरूपधर्मान्तरेण परिणमत इति समयभेदेन अवस्थाद्वयवत्त्वं भूतलस्य न विरुद्धमिति भावः"**[२] अत्र सांख्यसिद्धान्तानुसारेण परिणमशीलाः सर्वे पदार्थाः क्षणिकाः भवन्ति। सर्वेषु पदार्थेषु पुरुषोऽपि सम्मिलिता अस्ति। तद् तस्योऽपि क्षणिकं उच्यते। अनेन कथनेन बौद्धसिद्धान्तस्य सांख्यसिद्धान्तेन सह कोऽपि भेदः नास्ति ऋते चितिशक्तेः इति। पुरुषस्य अतिरिक्ताः प्रकृत्यादिस्थूलभूतपर्यन्ताः सर्वे पदार्थाः प्रतिक्षणं परिणमन्ते, पुनः पुनः भवति। पुरुषस्तु परिणतिरहित एव सर्वदा तिष्ठन्ति। बौद्धस्तु धर्मस्य स्वरूपमेव विनाशः मन्यते। सांख्यनये परिणामवादी सति तथा न मन्यते यथावस्थितधर्मस्य धर्मलक्षणपरिणामे सत्यपि तस्य विनाशः कदापि न भवति। यथा- कुण्डलेन परिणामे सति तस्मिन् परिणामे धर्मीरूपकनकस्य

---

[1] सा. बो. टी.-पृ. 201

[2] सा. बो. टी.-पृ. 202

अन्वयस्य प्रतीतिः सर्वत्रैव भवति। अतः बौद्धसिद्धान्तेन सह सांख्यसिद्धान्तस्य किंचिन्मात्रमपि साम्यं नास्ति। एवमेव अभाव प्रकरणेऽपि अभावः भूतलस्यैव परिणामविशेषः अन्योपि अनुपलब्धिप्रमाणं अन्यप्रमाणेन पृथक् नास्ति इति कथं सिद्धयति। सारबोधिनीकारेणात्र समासादितम् यतोहि कैवल्यरूपधर्मपरिणामविशेषः इन्द्रियजन्यप्रत्यक्षस्यैव विषयोऽस्ति। अतएव प्रत्यक्षेण ग्राह्यं न कर्तुं योग्यं इत्थं अभावनामकः कोऽपि पदार्थः नास्ति, यस्य ज्ञानाय अनुपलब्धिप्रमाणम् आवश्यकं स्यात्। **संभवस्य प्रमाणान्तरत्वनिरासः** एवमेव संभवप्रमाणस्यापि एषु त्रिषु प्रमाणेष्वेव अन्तर्भावं स्वीकुर्वन्ति सांख्याः तत्र वदति मिश्रपादः सम्भवस्तु यथा खार्यां द्रोणाढ़कमप्रस्थाद्यवगमः इति अस्य व्याख्याने टीकाकारेण उक्तं सम्भवस्याप्यानुमाने एव अन्तर्भावः, पौराणिकाः खलु संभवं स्वतन्त्रंप्रमाणं मन्यन्ते। तेषां मतनिराकरणाय टीकाकारः न्यायभाष्यकारस्य मतम् उपस्थापितम्। न्यायभाष्ये संभवलक्षणं इति "अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणं संभवः" अस्यार्थः- "**अविनाभाविनः**= व्यापकस्य पदार्थस्य सत्ताज्ञानात् अन्यस्य = **व्याप्यस्य सत्ताज्ञानं सत्ताग्राहकं वा यत् तत् संभवाख्यं प्रमाणमिति**"[1] यथा- खार्यां उच्यते द्रोणः, तत्रैव आढकः प्रस्थमादिपरिमाणस्य अन्तर्भावेव भवति। संभवप्रमाणादेव यत्र शतं भवति तत्र पंचाशतं भवत्येव, अधिकपरिमाणे अल्पपरिमाणस्य संभवस्य विद्यमानता तु स्पष्टं एवेति। अतः संभवोऽपि

[1] सा. बो. टी.-पृ. 203

पृथक्प्रमाणमस्ति। खार्याः ज्ञानेन द्रोणादिज्ञानं तत् संभवप्रमाणफलमस्ति। टीकाकारः वदति अस्माकं मते तस्य व्याप्यस्य ज्ञानं अनुमानेन एव संभवात् न संभवः पृथक् प्रमाणमिति, अतः तन्निराकरणं करोति यथा-. **"तत्र द्रोणचतुष्टयं खारी, चतुराढकश्च द्रोणः, चतुःप्रस्थं चाढकः, चत्वारः, कुडवाश्च प्रस्थं, मुष्टिचतुष्टयं च कुडव इति ज्ञेयम्।"**[१] उदाहरणरूपेण स्पष्टयति-

**"पलं प्रकुञ्चकं मुष्टिः कुडवस्ततुष्टयम्।**

**चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाढकम्।।"**[२]

**चतुराढको भवेद् द्रोणः खारी द्रोणचतुष्टयम्।**

**द्विद्रोणश्च भवेच्छूर्पः कुम्भोऽपि द्रोणविंशतिः।।"**[३]

टीकाकारः स्पष्टयति- सोऽयं सम्भवो नानुमानादतिरिच्यते, अविनाभावबलेनार्थावबोधकत्वाद् न यदेवं विधं न तदेतादृग् यथा - **प्रत्यक्ष"** इति न्यायमाश्रित्य तमनुमानेऽन्तर्भावयति स चेति। सः संभवश्चानुमानमेव न **प्रमाणान्तरमित्यर्थः।"**[4] संभवस्य प्रमाणान्तरत्वनिराकरणं प्रशस्तपादैः अपि कृतम्। अतः तेनैव निराकृतं भवति संभवस्यप्रमाणान्तरत्वम्। अतः प्रशस्तपादभाष्यकारस्य मतमपि प्रस्तूयते- "संभवोऽप्यविनाभावित्वात् (व्याप्तिमूलकत्वात्) अनुमानमेव"

---

[1] सा. बो. टी.-पृ. 204

[2] सा. बो. टी.-पृ. 204

[3] सा. बो. टी.-पृ. 204

[4] स. बो. टी.-पृ. 204

इति। न्यायभाष्यकारोपि उदाहरणरूपेण स्पष्टयति। 'संभवति ब्राह्मणे विद्या, **'संभवति क्षत्रिये शौर्यम्'** इत्यादि, तत्प्रमाणमेव न भवति, अनिश्चायकत्वात्। ततश्च व्याप्तिसापेक्षः संभवोऽनुमान एवान्तर्भवति, तन्निरपेक्षस्तु प्रमाणमेव नेत्यत्र विभावनीयम्।"[1] अतः अस्ति सम्भवस्यानुमानेऽन्तर्भावः।

ऐतिह्य प्रमाणान्तरत्वनिरासः ऐतिह्यमपि न पृथक् प्रमाणम्। तस्य शब्दे एव अन्तर्भावात् तत्र ऐतिह्यस्य वर्णनं वर्तते। ऐतिहासिकैः ऐतिह्यस्य प्रमाणान्तरत्वमंगीक्रियते, तस्य निराकरणाय सांख्यतत्वकौमुदीकारेण न्यायभाष्योक्तं ऐतिह्यस्य स्वरूपं विवेचितम्। यथा- 'इह वटे यक्षः' अस्य वटवृक्षे यक्षः वसति, इत्यस्य प्रथमः वक्ता येन तत्र यक्षो दृष्टः स्यात् सा न निर्देष्टुं शक्यते इत्यर्थः 'एवंभूतं प्रवादपारम्पर्यामात्रम्=प्रचुरजनरवस्य पौर्वापर्यैणानुक्रममात्रं यद् "वृद्धा इति कथ्यन्ति" इत्येवंविधं वचनं तदैतिह्यमित्यर्थः"।[2] सारबोधिनीकारैः उपस्कारभाष्यकारस्यमतमपि उल्लिखितम्

**चेष्टायाः प्रमाणान्तरत्व निरासः-**

एवं चेष्टापि अस्ति स्वतन्त्रमेकं प्रमाणमिति तान्त्रिकानां पक्षः। यथा- वदन्ति तान्त्रिकाः- यं किल पुरुषाः परस्परं सम्भूय **"अनया हस्तादि चेष्टया त्वयाऽयमर्थो बोद्धव्यः"** इत्यनेन प्रकारेण चेष्टासंङ्केतं कुर्वन्ति। अनेन तत्तदर्थो

---

[1] स. बां. टी.-पृ. 205
[2] स. बां. टी.-पृ. 205

बोध्यते। एवंविध विजातीयज्ञानं चेष्टया एव संभवमतः विजातीयज्ञानस्य कारणत्वेन चेष्टापि अस्ति एकं स्वतन्त्रं प्रमाणं इति। अस्य पक्षस्य निराकरणं टीकाकारेण इत्थं कृतं- **चेष्टा न पृथक् प्रमाणं। तत्र चेष्टानाम कायिक व्यापारः।** सा च चेष्टा द्विविधा भवति- कृतसमया अकृतसमया च। चेष्टायाः निराकरणं वैशेषिक सूत्रकारेण कृतम्। अतः तेषामेव मतमुपस्थाप्य चेष्टायाः निराकरणं साधितं शिवनारायणशास्त्रिणा। तत्र स्वरूपं प्रतिपादयति प्रशस्तपादाचार्यः- **"प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव"** इति। कृतसमया- लिप्यादिवदभिप्रेतं शब्दमेव स्मारयति न किञ्चित् प्रमापयतीति इति लिपिरिव सापि न प्रमाणमिति। अनया चेष्टया केवलं पदार्थाः स्मार्यन्ते, न तु तेषां संसर्गोऽपि बोध्यते। अतः प्रमितिविरहात् अस्याः चेष्टायाः न स्वतन्त्रप्रमाणत्वम्। तथा हि उक्तं आचार्यैः- **"कृत समया अभिप्रायस्थं शब्दं स्मारयति न तु संसर्गप्रमामपि जनयति लिपिवत्"**[1] अकृतसमया- अकृतसमयापि प्रयोजकस्य अभिप्रायमेव स्मारयति। प्रयोज्यं प्रवर्तयति न तु किञ्चित् प्रमापयति शंखध्वनिवत्। यथा शंखध्वनिः प्रयोज्यं प्रवर्तयति इति तथा च वदति आचार्यः- **"यथा शंखध्वनौ त्वया गन्तव्यमिति वाक्येन श्रुतशंखध्वनिः प्रतिष्ठते। तथा यदा मया तर्जन्यूर्ध्वीक्रियते तदा त्वयाऽसौ ताडनीय इति तदा ताडयति। न तु किञ्चित् प्रमिणोति"**[2]। एवं क्रमेण कृतसमया

---

[1] सा. बो. टी.-पृ. 206

[2] सा. बो. टी.-पृ. 207

अकृतसमया इति अनयोः चेष्टयोः प्रमाजनकत्वाभावात् तयोः प्रमाणत्वं न संभवति। अतः उपसंहारं करोति आचार्यः- तस्मान्न चेष्टापि प्रमाणमिति। अपि च- यतोऽन्यैः पृथकप्रमाणत्वेनाभिमतानुपमानादीनां प्रमाणत्रय एवान्तर्भाव संभवः इति।

अन्ते वक्तुं शक्यते यत् अस्माकं मते प्रकृतिपुरुषादिप्रमेयपदार्थानां सिद्धिः प्रत्यक्षादिभिः त्रिभिः प्रमाणैः एव संभवति। अतः अन्येषां प्रमाणानां एषु त्रिषु एव अन्तर्भावसंभवात् त्रिविधं प्रमाणमिष्टम् इति युक्तम्।

**इति प्रथमोऽध्यायः**

# द्वितीयोऽध्यायः

प्रमेयप्रकरणम्

व्यक्ताव्यक्तज्ञतत्त्वविचारः

तत्त्वानां साधर्म्यवैधर्म्यप्रदर्शनम्

पुरुषस्यास्तित्वे प्रमाणप्रदर्शनम्

पुरुषबहुत्वसिद्धिप्रदर्शनम्

तत्त्वप्रतिपादने मिश्रमतम्

टीकाकर्तुः मतसमीक्षणम्



# द्वितीयोऽध्यायः

साङ्ख्यशास्त्राभिमततत्त्वानां विवेचनम्

साङ्ख्यदर्शने पञ्चविंशतितत्त्वानि स्वीक्रियन्ते। एतेषां तत्त्वानां सम्यगवबोधेनेन मोक्षोऽवाप्यत इति साङ्ख्याः मन्यन्ते। यथोक्तमाचार्यगौड़पादेन स्वटीकायाम्-

पञ्चविंशतत्त्वज्ञो·यत्र तत्राश्रमे वसन्।

जटी मुण्डी शिखी वापि मुच्यते नाऽत्र संशयः।।[1]

तानि पञ्चविंशतितत्त्वानि कानि? इति जिज्ञासायां समुदितायां समादधति कारिकाकारः-

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।

षोडषकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः[2]।।

श्लोकेऽस्मिन् साङ्ख्यानां पञ्चविंशतितत्त्वानि वर्णितानि। तद्यथा- प्रक्रियते उत्पाद्यते इति प्रकृतिः प्रधानम्। मूलं च तत्प्रकृतिश्चेति मूलप्रकृतिः। सप्तानां मूलमाद्यकारणमित्यर्थः। न विक्रियत इत्यविकृतिः। न कुतश्चिद् उत्पद्यत इत्यर्थः।

---

[1] यो.सा. पृ.-7

[2] सां.का.का- ३

एतत् प्रथमं तत्त्वम्। महदाद्याः प्रकृतिविकृतयः सप्त। महान् बुद्धिः स आद्यो यासां प्रकृतानां ताः महदाद्याः, प्रकृतयश्च विकृतयश्चेति प्रकृतिविकृतयः, महदहङ्कारपञ्चतन्मात्राणीति सप्तसङ्ख्याकाः सन्ति। षोडशसङ्ख्यापरिमितः षोडशकः पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चमहाभूतानि मनश्चेत्ययं गणः, विकारश्च विकृतिरेव। नैतेभ्यः किञ्चिदुत्पद्यत इत्यर्थः। शरीरमेव पुरं तस्मिन् वसतीति पुरुषः। निष्क्रियत्वात् तस्मात् किञ्चिन्नोत्पद्यत अतो न प्रकृतिः। अनादित्वान्नायं कुतश्चिदुत्पन्नोऽतो नायं विकृतिरपीत्यर्थः।

**मूलप्रकृतिः**

साङ्ख्यदर्शनानुसारं जगतः मूलकारणं प्रकृतिः अस्ति। प्रकृति इति अस्याः अन्वर्थसंज्ञा अस्ति। यतोहि इयम् इन्द्रियगोचरतां न याति केवलम् अस्याः सत्तायाः अनुमानम् एव भवति। अतः अव्यक्तम् इत्यपि कथ्यते। अस्याः अपरं नाम प्रधानम् इत्यपि अस्ति। प्रकर्षेण धीयते अखिलं जगद् यत्र तत् प्रधानम् इति। प्रकृतिः इयं त्रिगुणात्मिका अस्ति। सत्वरजस्तमांसि एते गुणाः एव अस्याः स्वरूपाधायकाः सन्ति। अत एव "सत्त्वरजस्तमसां साम्यावस्थाया प्रकृतिः"[1] इत्युक्तम्। वैषम्यावस्थायाम् एते एव त्रयो गुणाः परस्परविभिन्नानुपाते सङ्घीयभूय सृष्टिरूपे परिणताः भवन्ति। एवम्प्रकारेण निखिलं ब्रह्माण्डं सूक्ष्मरूपेण यस्मिन् निहितम् अस्ति तत् प्रधानम् एव जगतः उपादनकारणम् अस्ति। नहि मूलप्रकृतिः कस्माच्चिदपि उत्पद्यतेः यो हि

[1] सां.सू-1/1/61

पदार्थः कुतश्चिद् उत्पद्यते सः विकृतिरूपः भवति इयं च न तथा। तस्मात् मूलप्रकृतिः अविकृतिः इत्युक्तम्।ट

**प्रकृतेः स्वरूपम् –**

सत्त्वरजस्तमसां साम्यावस्थैव साङ्ख्यदर्शने प्रकृतिरुच्यते। यद्यपि प्रकृतेः साक्षादवबोधो न जायते तथापि कारणगुणाः कार्यगुणानारभन्त इति नियमात् कार्यस्य कारणगुणात्मकत्वादपि प्रकृतिरियमव्यक्तापरनाम्नी सिद्ध्यति। साङ्ख्यकारिकायां प्रकृतिसिध्यर्थमेते पञ्चहेतवः समुपन्यस्ताः–

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य।।
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्।।[1]

एतेन प्रधाननामकं तत्त्वमस्तीति सिद्धम्। तच्च कीदृशमिति जिज्ञासायां समुदितायां समादधति कारिकाकारः –

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्[2]।।

[1] सां.का-15,16का.
[2] सां.का-10का.

प्रकृतेः समुत्पन्नानि त्रयोविंशतितत्त्वानि लिङ्गानि लययुक्तानि सन्ति। तेषां सर्वेषां स्वस्वकारणेषु लयो जायते। अन्ते चैका प्रकृतिरवशिष्यते। तस्याः स्वरूपमस्ति–अहेतुमद्, नित्यं, व्यापि, निष्क्रियमेकमनाश्रितमलिङ्गमनवयवं स्वतन्त्रं च यद् भवति तदेवाव्यक्तं प्रधानं प्रकृतिर्वा कथ्यते। इतश्च प्रकृतेर्विशेषणान्यन्यान्यपि शास्त्रकारैर्निर्दिष्टानि सन्ति। तत्स्वरूपाधिगतये तदुल्लेखोऽप्यावश्यकः प्रतीयते। तद्यथा व्यक्तं महदादिस्थूलभूतपर्यन्तं तथा प्रधानं मूलप्रकृतिः, त्रिगुणं–त्रयो गुणा अस्येति सुखद:खमोहात्मकम्, अविवेकि परस्परसम्मिश्रणपुरःसरं कार्यकारणशीलमविवेचनशीलं वा, विषयः उपभोगसाधनं सामान्यमनेकपुरुषभोग्यम् अचेतनं जडं सुखदुःखमोहज्ञानासमर्थम्, प्रसवधर्मि प्रसवरूपो धर्मो यः सः अस्यास्तीति, सरूपविरूपान्यतरपरिणामशीलम्, व्यक्तं भवति। एतान्येव विशेषणान्यव्यक्तेऽपि सङ्गच्छन्ते। प्रकृतिरियं त्रिगुणात्मिका सुखदुःखमोहात्मिका तद्धर्मद्वारा जगदिदं सञ्चालयति च इयं पुरुषात् स्वात्मानं गोपयति स्वकार्याणि चालयति। पुरुषेण दृष्टा सती तत्कालं लुप्यते। यथोक्तं कारिकायाम्।

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य[1]।।

---

[1] सां.का-61का.

**प्रकृतिविकृतिः**

महत्तत्त्वम्, अहंकारतत्त्वम्, तथा पञ्चतन्मात्ररूपतत्त्वम्, एते पदार्थाः प्रकृतयः अपि विकृतयः अपि। पूर्वोक्तपदार्थेभ्यः अन्यान्यपदार्थाः आविर्भूताः भवन्ति। अतः एते प्रकृतयः। तथा स्वयम् अपि अन्यान्यपदार्थेभ्यः जायन्ते अतः विकृतयः अपि। ननु कः कस्माद् जायते? कश्च किम् उत्पादयति इति चेत्? उच्चते- मूलप्रकृतितः महतत्त्वम् आविर्भवति, ततः अहंतत्त्वम्, अतः महतत्त्वम् अहंतत्त्वस्य प्रकृतिः, मूलप्रकृतेश्च विकृतिः तथा च अहंतत्त्वतः पञ्चतन्मात्राणम् उत्पत्तिः, पञ्चतन्मात्राणि शब्दस्पर्श–रूप–रस–गन्धभेदेन अवगन्तव्यानि। तथा च मनसः दशेन्द्रियाणां च उत्पत्तिः अहंतत्त्वाद् जायते। तदेव अहंतत्त्वस्य महतत्त्वं प्रकृतिः पञ्चतन्मात्राणि एकादश इन्द्रियाणि च विकृतयः। तथा च पञ्चतन्मात्रेभ्यः अपि पञ्चमहाभूतानि जायन्ते, अतः पञ्चतन्मात्राणाम् अहंतत्त्वं प्रकृतिः पञ्च महाभूतानि विकृतयः। पञ्चमहाभूतेभ्यः न किमपि जायन्ते, अतः एतानि विकृतयः एव, न तु प्रकृतयः अपि। अतः महतत्त्वम् अहंतत्त्वं पञ्चतन्मात्राणि एते त्रयः पदार्थाः सम्मिलिताः सप्तसाङ्ख्याकाः पदार्था प्रकृतयः अपि विकृतयः अपि। किन्तु पञ्च महाभूनि न प्रकृतयः अपितु विकृतयः, एतेभ्यः कस्य अपि पदार्थस्य उत्पत्तेः अभावात्।

## महत्तत्त्वम्

इत्थं सृष्टेः प्रथमं तत्त्वमस्ति "महत्तत्त्वम्" "महदाख्यमाद्यं कार्यं तन्मनः"[1], "सविकारात् प्रधानात्तु महत्तत्त्वमजायत। महानिति यतः ख्यातिर्लोकानां जायते सदा"[2] यज्जगदुत्पत्तौ बीजरूपेण तिष्ठति।

यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकम्।

महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते।।

इत्यादिवाक्येभ्यो बुद्धेरेवाद्यकार्यत्त्वावगमात्।[3] तद्विश्वविकासे विशिष्टमहत्त्वयुक्ते कारणम्भूते सति "मद्ध" विशेषेण युक्तं भवति। आभ्यन्तरिकदृष्ट्या एतदेव बुद्धिरुच्यते। या प्रत्येकस्मिन् जीवे भवति। बुद्धेर्विशिष्टङ्कार्यन्निश्चयमध्यवसायञ्च अध्यवसायो बुद्धिधर्मः।[4] बुद्धिः स्वां विषयांश्चापि प्रकाशयति। सत्त्वगुणाधिक्येन बुद्धौ धर्मज्ञानवैराग्येश्वर्याणामेतच्चतुर्गुणानामुदयो भवति। "तत्कार्यं धर्मादि"[5]। परन्तमोगुणाधिक्येन तस्यामेतद्विपरीतगुणा अधर्माज्ञानावैराग्यानैश्वर्याणि उत्पन्नानि भवन्ति "महदुपरागाद्विपरीतम्"[6]। बुद्धिः प्रकृतेः कार्यत्वात् स्वयञ्जड़ात्मिका, परं सा पुरुषस्यातिसमीपवर्ती अतः पुरुषचैतन्यस्य प्रतिबिम्बस्तामुपरि पतति, येन सा

---

1 सा.सू. 1/71
2 म.पु. 3/17
3 सां.प्र.भा. 1/71
4 सां.त.कौ. 2/13
5 सां.सू. 2/14
6 सा.सू. 2/15

चेतनवत्प्रतीयते। तत्र टीकाकारः स्पष्टयति- **"कथं जड़ाया बुद्धेः निश्चय"** [1] इत्यत्राह- चितिसन्निधानात्।

जगतस्सिद्धान्तो यत्प्रत्येकः जनो निजाधिकारं विचार्य "कार्यमिदम्मे कर्त्तव्यमिदम्मया करणीयम्" इति निश्चयति। इदन्निश्चयम्बुद्ध्यैव भवति। इन्द्रियाणाम्मनसश्च व्यापारो बुद्धये, बुद्धेश्च व्यापारो पुरुषाय भवति। सुखदुःखयोरनुभवः प्रथमतः बुद्धावेव पश्चाच्च सा बुद्धिस्तस्मै पुरुषायार्पयति। तदैव भोक्तारंभूत्वा भोगान् भुङ्क्ते। एतदतिरिक्तं बुद्धिः प्रकृतिपुरुषयोः भेदं दर्शयति। बुद्धेः सहयोगेन पुरुष आत्मानम्प्रकृतिभिन्नस्स्वतन्त्रश्च मन्यते, अनेन प्रकारेण बुद्धेः सहायतया स्वयथार्थरूपं विवेचयति।

आचार्यमिश्रः अग्रे महत्तत्त्वलक्षणं निरूपणं करोति। अध्यवसायो "बुद्धिः" अध्यवसायो बुद्धिः" 'अध्यवसानम् अध्यवसायः अर्थात् निश्चयः एवं 'अध्यवस्यति' निश्चिनोति या सा बुद्धिः। ?

टीकाकारः अत्र जिज्ञासाम् उपस्थापयति। इयं लक्षणं न उचितं यतोहि अध्यवसायः तु क्रियारूपः अतः बुद्ध्या सह सामानाधिकरण्येन तस्य अभेदान्वयः न सम्भवति। टीकाकारः अत्र समाधानं प्रस्तूयते बुद्धेः व्याप्यस्य क्रमः उल्लिखितः यतः कौमुदीकारः आलोच्येन इन्द्रियव्यापारमत्त्वेन मनसः व्यापारः, 'अहम्' पदेन अहंकारस्य व्यापारः एवं 'अध्यवस्यति' पदेन बुद्धेः व्यापारः किं इति जिज्ञासा सति

[1] सा.यो.टी.

तस्य व्यापारः वर्तते आलोचनम्, मननम्, अभिमानम्, अवधारणादि इदमेव असाधारणव्यापारः अस्ति। बुद्धेः व्यापारं स्पष्टयति- आलोचनमनाभिमानावधारणेषु इत्यर्थः। योऽयं "कर्तव्यम्" इति बुद्धेर्विनिश्चयः सोऽध्यवसायो बद्धेरसाधारणो व्यापारः" इति योजना। अचेतनत्वात् बुद्धिः कथं अर्थ निश्चीयते तर्हि उच्यते चैतन्यसन्निधानाद् इति यद्यपि बुद्धिः अचेतनः तथापि चैतन्यस्य पुरुषस्य सन्निधानात् अर्थनिश्चये सामर्थ्यं धारयति। अत एव उक्तं यथा- एकात्रोपस्थितयोः स्फटिकजपाकुसुमयोः स्फटिकं जपाकुसुमलौहित्यम् आपद्यते, तथा चित्सन्निधानाद् बुद्धिरपि चैतन्यम् आप्नोतीति भावः। अत्र वाचस्पतिमिश्रः जिज्ञासां जनयति यत् अध्यवसायात्मिकायाः बुद्धेः धर्मः इति चेत् कथं अध्यवसायो बुद्धिः इति सामानाधिकरण्यप्रयोगः अत्र क्रियाक्रियावतोरभेदविवक्षाद् अत्रापि बुद्धिः अध्यवसाययोः सामानाधिकरण्येन अन्वयः अतः अध्यवसायः बुद्धेः धर्मः न तु बुद्धिः अभेदान्वयाद्। धर्मः बुद्धेः धर्मः- बुद्धौ अष्टौ भावाः रमन्ति इति सांख्यानां सिद्धान्तः। बुद्धेः सात्त्विकधर्मः- धर्मज्ञानवैराग्यमैश्वर्यम् तद्विपरीतम् अर्थात् अधर्मम्, अज्ञानम्, अवैराग्यम्, अनैश्वर्यम्। इमानि बुद्धेः तामसधर्माणि सन्ति। टीकाकारैः अत्र जिज्ञासां उपस्थापितं यत् बुद्धेः सात्त्विकतामसिकधर्मवत् राजसधर्मस्यापि औचित्यं स्यात्। सारबोधिनीकारः समाधानं प्रस्तूयते स्वतन्त्ररूपेण कोऽपि न राजसधर्मः। उभयविधाऽपि धर्माः राजसाः इति वक्तुं शक्यते। बुद्धेः सात्त्विकधर्मेषु आदौ धर्मस्य व्याख्याः क्रियते टीकाकारैः वैशेषिकाचार्यस्य कणभक्षस्य मतमपि

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"[1]। एकस्य तदुभयहेतुत्वासंभवात् व्यवस्थामाह- तत्रेति। "यागदानादि" इत्यादिपदेन कर्मकाण्डवेदविहितकर्ममात्रलाभः। धर्मस्य टीकाकारैः विशद्वर्णनं कृतम्। यथा- "स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनं च दानम्"[2]। कर्म तावच्च त्रिविधम्- कृष्णः-शुक्लकृष्णऽशुक्लाकृष्णेतिभेदात्। तत्र हिंसामिथ्याभाषणादि कृष्णकर्म, बाह्यसाधनसाध्यं यागादि शुक्लकृष्णकर्म, सकामजनैः फलकामनया क्रियमाणं तपोजपध्यानादिकं शुक्लकर्म, यमनियमाद्यनुष्ठानम् अशुक्लाकृष्णकर्म, तच्च योगिनां भवति। मेघसमाधिरूपं योगानुष्ठानं निष्कामत्वात् शुक्लकर्मरूपं नास्ति, तच्च योगानुष्ठानं चित्तमात्रसाध्यत्वेन बाह्यसाधनसाध्यत्वाभावात् कृष्णकर्मरूपमपि नास्तीति योगानुष्ठानम् अशुक्लकृष्णकर्म, तज्जनितो धर्मोऽपि अशुक्लकृष्ण इति। ज्ञानम्- धर्मस्य अनन्तरं टीकाकारैः ज्ञानस्य विवेचनं कृत्तम्। गुणेति अत्र गुणार्थः बुद्धितत्त्वम्। अन्यतार्थः तत्प्रतियोगिकभेदः। पुरुषः बुद्धेः भिन्नः अस्ति। इत्थं निश्चयात्मके सति ज्ञानमस्ति। बुद्धिपुरुषयोर्विभिन्नतया निश्चय इत्यर्थः। वैराग्यम् ज्ञानस्य विवेचनानन्तरं टीकाकारः वैराग्यस्य लक्षणं करोति। वैराग्यस्य व्याख्याने टीकाकारैः विभिन्नमतानि प्रस्तूयन्ते। यथा- "आसक्तिलक्षणो रागः"[3] पुनः पुनर्विषयानुरञ्जनेच्छारागः ततश्च "दोषदर्शनाद् विषयत्यागेच्छा वैराग्यम्"[4]

---

[1] वैशेपिक सूत्र- 1/1/2

[2] सा.वां.टी.- पृ. 336

[3] व्याख्या. भा. 4/1/3

[4] प्रशस्तभा.

"भोगानभिषंगे वैराग्यम्"[1] ऐहिक-पारत्रिक-विषयादौ दोषदर्शनान्निरभिलाषस्य "ममैते विषया वश्या:, नाहमेतेषां वश्य:" इति विमर्शो वैराग्यम् इति योगशास्त्रज्ञा:। चतस्त्र: संज्ञा इति। एता: संज्ञा प्राचीनसांख्याचार्यसम्मता:[2]। अत्र कौमुदीकारेण चतुर्विधं वैराग्यं निर्दिष्टं तेषां विवरणं टीकाकार: इत्थं करोति। राग:, द्वेष:, ईर्ष्या, परापकारचिकीर्षा, असूया, अमर्षश्चेति राजसतामसरूपा: षड्धर्मा: चितं विक्षिप्य कलुषयन्ति, अत इमे षट् चित्तमला इत्यभिभाष्यन्ते। एषां षण्णां चित्तमलानां स ावे, चित्ते षटप्रकारकं कालुष्यमुत्पद्यते। यथा- रागकालुष्यम्, द्वेषकालुष्यम्, ईर्ष्याकालुष्यम्, परापकारचिकीर्षाकालुष्यम्, असूयाकालुष्यम्, अमर्षकालुष्यं चेति। तत्र "स्नेहपूर्वकम् अनुभूतात् सुखादनन्तरं य: "इदं सुखं मां सर्वदैव प्राप्नुयात्" इत्याकारको राजसवृत्तिविशेष: तद् रागकालुष्यम्। दु:खभोगानन्तरं दु:खप्रदविषयेषु अनिष्टचिन्तनपूर्वकं य: "इमे दु:खप्रदा नश्येयुर्मा च दुखं नाधिगच्छेत्" इत्याकारक: तामसवृत्तिविशेष:, तद् द्वेषकालुष्यम्। अन्यपुरुषस्य गुणाधिक्यं सम्पदाधिक्यं वा विलोक्य यश्चेतसि क्षोभ: (एकविधोज्वलनप्रादुर्भाव:) तद् ईर्ष्याकालुष्यम्। अन्यस्य कस्यचित् अपकरणेच्छा परापकारचिकीर्षाकालुष्यम्। कस्यचित् श्लाघनीयगुणेषु दोषारोपणम् असूयाकालुष्यम्। कुत्सितवचनश्रवणपूर्वकं स्वापमानादनन्तरं तदसोढ़ा सेयं प्रतीकारचेष्टा तद् अमर्षकालुष्यम्।[3] रागद्वेषादि एतेषां चित्तविकाराणां निवृत्ति:

---

[1] न्या. वा.

[2] सा.वां.टी.पृ-338

[3] सा.वां.टी.- पृ. 340

अवश्यमिति धिया सुखिषु मैत्रीभावमासाद्यादि क्रमेण सर्वेषां चित्तविकाराणां निवृत्तये यो यत्नः विधीयते तदैव वैराग्यमिति टीकाकर्तुः अभिप्रायः। निष्कर्षरूपेण आचार्यशिवानन्दः वैराग्यस्यलक्षणे यत् यतमानसंज्ञाख्यं वैराग्यं भवति तस्य लक्षणं इत्थं करोति- "चित्तवर्तिनो रागद्वेषादिमला एव इन्द्रियाणि विषयेषु प्रवर्तयन्ति, सोऽयं रागादिमलः इन्द्रियाणि विषयेषु मा प्रवर्तयेत्" इति विचारेण यद् रागादिमलनिवृत्त्यर्थं मैत्र्यादिभावनानुष्ठानं तद् वैराग्यं यतमानसंज्ञया व्यवह्रियत इति सिध्यतीति"[1]। द्वितीय व्यतिरेकसंज्ञाख्यस्य वैराग्यस्वरूपनिरूपणावसरे आचार्यः स्वारस्यं इत्थं प्रकाशयति- "इयन्तश्चित्तमलाः निवृत्ताः इयन्तो निवृत्ता भविष्यन्ति, इयन्तश्च निवर्तमानाः सन्ति, इत्थं निवृत्तविद्यमानमलानां यत् पृथक् रूपेण ज्ञानम्, ज्ञानोत्तरं च अवशिष्टानां निवृत्तये यत्नानुष्ठानं तद् व्यतिरेकसंज्ञकं वैराग्यमिति सरलार्थः। पक्वानां भेदावधारणमिति परः सारः"[2]। ऐकेन्द्रियसंज्ञकं वैराग्यम् तृतीयस्य ऐकेन्द्रियसंज्ञकस्य वैराग्यस्य स्वरूपं इत्थं वर्णयति- "ब्राह्यविषयेषु इन्द्रियाणां प्रवर्तने असमर्थतया यद् उत्कण्ठामात्रेण तृष्णारूपेण, मनसि अवस्थानं तद् एकेन्द्रियवैराग्यमित्यर्थः। यदा निवृत्ता मला इन्द्रियाणां विषयेषु प्रवर्तनेऽसमर्थाः सन्तः केवलं चित्तमात्रे एवावस्थिताः किंचित् किंचिद् विषयेषु उत्कण्ठिताः तिष्ठन्ति, तदा सा वैराग्यस्य तृतीयावस्था एकेन्द्रियसंज्ञापदवाच्येति यावत्"[3]। वंशीकारसंज्ञावैराग्यं- तल्लक्षणं कृतं

---

[1] सा.वां.टी.- पृ. 342

[2] सा.वां.टी.- पृ. 342

[3] सा.वां.टी.- पृ. 342

दृष्टानुश्रविक विषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं इति। अत टीकाकर्तुः आशयः वर्तते यत्- "यदा विवेकबलेन निखिलदिव्यादिव्यविषयेष्वपेक्षाबुद्ध्या सा उत्कण्ठापि निवर्तते तदा सा वैराग्यस्यावस्था वशीकारसंज्ञापदवाच्येति फलितम्"[1]। अर्थात् यदा विवेकज्ञानं उदेति तदा रागादिदोषाणां निवृत्तौ सत्यां उत्कण्ठां विनश्यन्ति इदमेव वशीकारसंज्ञा वैराग्यम्। योगसूत्रकारेण वैराग्यस्य स्वरूपं इत्थं निरूपितं- "यद्यपि योगदर्शने वशीकारसंज्ञानामकमेकमेव वैराग्यमुपदिष्टम्, यतमानादयः तिस्रः संज्ञाश्च नोपदिष्टाः, तथापि तिस्रः संज्ञाः विना वशीकारसंज्ञाया एव अनुपपत्तिः, तिसृणामुत्पत्त्यनन्तरमेव वशीकारसंज्ञावैराग्यस्योदयात्, ततश्च वशीकारसंज्ञकवैराग्यस्य कथनेनैव पूर्वभाविनां त्रयाणां वैराग्याणां सत्ता सूच्यत इति यत मानादिसंज्ञात्रयवर्णनं युक्तियुक्तमेवेति ध्वनयता मिश्रेण "पराचीना" इति विशेषणमुपन्यस्तमिति"[2]।

ऐश्वर्यम्- ऐश्वर्य बुद्धेः धर्मः। तच्च ऐश्वर्यम् अष्टविधं अणिमा महिमा इत्यादि तत्र- अणिमा "सकलवस्तूनां सूक्ष्मसूक्ष्मांशैर्विभागः क्रियते, तत्र यस्य सूक्ष्मस्य भूयो न कथंचिद् विभागः सः अणुः। तस्य फलमाह- यतः अणुभावात्, अणिमसिद्धिप्राप्त्या इत्यर्थः। लघोर्भावो लघिमा, इमनिच्, तद् व्याचष्टे- लघुभाव इति। मुञ्जेषीकातूलवदित्यर्थः। सूर्यमरीचीन्=सूर्यरश्मीन्, आलम्ब्य=आश्रित्य। महान्=तनुपरिमाणोऽपि नगनागनगरादिप्रमाणो भवतीत्यर्थः। प्राप्तिरिति। सर्वेषां भावानां सन्निधानं प्राप्तिः, सर्वदूरस्थपदार्थानां समीपकरणशक्तिरिति यावत्, अत एव भूम्यां

[1] सा.वा.टी.- पृ. 343

[2] सा.वा.टी.- पृ. 343

स्थितोऽपि द्विलक्षयोजनान्तरितं चन्द्रमसं स्पृशति। प्रकामस्य– यथेप्सितस्य भावः प्राकाम्यम्, ष्यञ्, इति व्याचष्टे– इच्छानभिघात् इति। नास्य योगिनः स्वरूपं काठिन्यादिभिर्भूम्यादिधर्मैरभिहन्यत इत्यर्थः। अतएव जलमिव भूमिम् उद्भिद्य उतिष्ठति, ईशिनः=प्रभोर्भाव ईशित्वमिति व्याचष्टे–भूतेति। भूतभौतिकपदार्थानामुत्पादनेऽवस्थापने विनाशे च सामर्थ्यम् ईशित्वमिति सरलार्थः"[1]। अनेनैव क्रमेण अष्टविधैश्वर्य विवेचितं आचार्यैः। एतद्विपरीतं बुद्धेः तामसधर्माः अधर्मादयः अपि सन्ति तथाहि उक्तं– "धर्मज्ञानवैराग्यैश्वर्येति चत्वारः सात्त्विकाः धर्मा बुद्धेरुक्ताः, सम्प्रति तामसान् बुद्धिधर्मानाह– तामसास्तित्वमिति। तद्विपरीताः= धर्मादिविपरीताः। तानेवाह–अधर्मेत्यादिना। एतेन सात्त्विकतामसेतरबुद्धिधर्मा इच्छाद्वेषप्रयत्नादयो राजसा इति दर्शितम्। सात्त्विकानाम् उपादेयतया, तामसानां च परिहेयतया विवेकज्ञानोपयोगित्वेन उभयविधानामेव उपादानं कृतम्। तत्र अधर्मो ब्रह्मबधादिजन्यो नरकादिदुःखहेतुः, अज्ञानं च अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मत्वरूपं विपर्ययज्ञानम्, अवैराग्यं च विषयभोगतृष्णा, अनैश्वर्यं च प्रतिहतेच्छात्वम् इत्यर्थः।"[2]।

अहंकारः

[1] सा.वो.टी.– पृ. 344

[2] सा.वो.टी.– पृ. 345

'महत्तत्त्वादनन्तरमपरः परिणामो अहंकारः'। **"अहङ्करोतीत्यहङ्कारः"** [1], **"चरमोऽहङ्कारः"** [2], **"तत्कार्यत्वमुत्तरेषाम्"** [3], **"अहं" "मम"** चेत्यभिमानकरणमेवाहङ्काररूपः। अहमिति प्रत्ययः क्रियतेऽनेनेत्यहङ्कारः "अहङ्करोतीत्यहङ्कारः कुंभकारवद् इति। विज्ञानभिक्षुः, स्पष्टार्थमन्यद्" [4] एतदेवाहङ्काराभिमुखे पुरुषो विविधभ्रमेषु पतति स्वविषये च भ्रान्तधारणां रचयति यदहमेव भोक्ता, कर्त्ता स्वामी च। इन्द्रियाणाम्मनसश्चैतत् कार्यमस्ति यत्तानि स्वानुभूतचिन्तितान् विषयान् **"अहङ्कारस्य"** अभिमुखे प्रस्तुवन्ति। तदाहङ्कारः प्रस्तुतविषयाणां विषये चिन्तयति। एतेषां कारणे मेऽधिकारः। ते सर्वे विषयाः मदर्थे। एतेषामधिकारे मां विना जगति कश्चिदपि नास्ति। **"एतानि कार्याणि सम्पादयितुमहमेव क्षमः" "अत एवाहमस्मि"** योऽयं विविधाभिमानोऽस्ति अयमेव खल्वहङ्कारः। यावदियम्भावना न जागर्ति तावत्कार्ये प्रवृत्तिः कथमुत्पन्ना भवितुमर्हति? कस्यचिदपि कार्यकारणात्पूर्वं तु मनसि संकल्पोऽयञ्जागर्ति यदहमेतत्कार्यं करोमि, तर्हि स तस्मिन् कार्ये प्रवर्तते। इयम् **"अहं"** भावना जगतः समग्रव्यवहाराणां मूले वसति **"अभिमानोऽहङ्कारः"**[5]। अहङ्कारस्य गुणानां वैषम्यात् त्रीणि रूपाणि भवन्ति।

(क) सात्त्विकं, यत्र सत्त्वगुणप्राधान्यं तिष्ठति।

---

[1] सा.प्र.भा.सू. - 2/16

[2] सां.सू. 1/72

[3] सा.सू. 1/73

[4] वि.तां.टी. - पृ.- 176

[5] सा.सू. 2/16

(ख) तैजसं, यत्र रजोगुणप्राबल्यं भवति।

(ग) तामसं च यत्र तमोगुणस्य प्राधान्यं भवति।

तैजसोऽहङ्कारोऽन्याहङ्काराणां प्रवर्तको भवति, तस्यैव सहायतयाऽपरौ द्वौ परिणामावाऽग्रसरौ भवतः। सात्त्विकाहङ्कारेणैकम्मनः, पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि च जायन्ते, अपि च तामसाहाङ्कारेण पञ्चतन्मात्राणि शब्द-स्पर्श-रूप-रस-गन्धादीनि जायन्ते। पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि आकाशः-वायुः-तेजः-जलं-पृथिवीति उत्पद्यन्ते। कौमुदीकारवाचस्पतिमिश्रानुसारेणायमेवोत्पत्तिक्रमः। अत्र विज्ञानभिक्षोः मतं किञ्चिद् भिन्नं वर्तते। सर्वेन्द्रियश्रेष्ठत्वाद् मनसस्सत्त्वाधिक्य निर्धारयति ''सात्त्विकमेकादशकं प्रवर्त वैकृतादहङ्कारात्''[1] एकादशानां पूरणमेकादशकं मनः षोडशात्मगणमध्ये सात्त्विकम्। अतस्तद्वैकृतात् सात्त्विकाहङ्काराज्जायत इत्यर्थः। अतः च राजसाहङ्काराद् दशेन्द्रियाणि, तामसाहङ्काराच्च तन्मात्राणीत्यधिगन्तव्यम्। अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति [2]। अतएव विज्ञानभिक्षोर्विचारे सात्त्विकाहङ्कारेण मनो जायते राजसाद् दशेन्द्रियाणि तथा च तामसात् पञ्चतन्मात्राणि। अत्र टीकाकारस्य अहंकारविषये आशयः इत्थं वर्तते - "अहमस्मि" इति ज्ञानम्, अहंकार इत्युच्यते। यथा- यत् वस्तु कार्यस्य वा अहमेव अधिकारीति न तु अपरः। अहमेव

---

[1] सां.सू. 2/18

[2] सां.प्र.भा. 2/17-18

अधिकारीति अभिमानयुक्तः ज्ञानविशेषः बुद्ध्याः असाधारणवृत्तिसत्त्वे अहंकारस्य लक्षणमिति। अर्थात् अहम् इत्याकारकं ज्ञानं येन ज्ञायते स एव अहंकारः। अहंकारस्य लक्षणानन्तरं कौमुदीकारः अहंकारस्य कार्यभेदान् वर्णयन्ति। तत्र टीकाकारेण अहंकारविषये स्वाशयं स्पष्टयति तथाहि क्रियाक्रियावतोरभेदविवक्षा द्रष्टव्या, अन्यथा अभिमानस्य अहंकारव्यापारतया सामानाधिकरण्यानुपपत्तेः इति। तत्र द्विविधा प्रवर्तते सर्गः इति कौमुदीकाराणां मतं स्पष्टयति- अत्रापि सामग्रीभेदोऽस्तीत्याह- सात्त्विक इति। अर्थात् वैकृताहंकारात् सत्त्वगुणविशिष्टः एकादशन्द्रियाणां उत्पत्तिः भवति। तामसाहंकारात् तन्मात्रः प्रवर्तते। अत एव रजस्तमोऽभिभवेन सत्त्वसमुदैकविशिष्टादित्यर्थः। तथा च प्रकृते तत्रपरिभाषया "वैकृत" इति सात्त्विकाहंकारस्य संज्ञेति ज्ञेयम्[1] " तथा च "तदवस्थायां सत्त्वरजसी अभिभूय तमः समुद्भवतीति प्राचीनैः तदवस्थस्य अहंकारस्य भूतादिसंज्ञा कृता"[2]। अत्र यद्यपि रजोगुणस्य स्वतन्त्रं कार्यं नास्ति तथापि सत्त्वतमो गुणौ न स्वकार्य सम्पादने समर्थाः अतः रजोगुणद्वारैव वैकृततामसाहंकारः स्वऽस्मिन् कार्ये प्रवर्तते। तथाहि उक्तं "परिचालकरजोरूपसहकारिसमवधाने तु स्वस्वकार्यं कुरुत"[3]। अत्र दृष्टान्तमुखेन स्पष्टयति "यथा दण्डादिकं घटजननशक्तमपि स्वयमक्रियत्वान्न कार्यं जनयति, परिचालककुलालरूपसहकारिसमवधाने तु कार्यं जनयतीति

[1] सा.वा.टी.- पृ. 348
[2] सा.वा.टी.- पृ. 348
[3] सा.वा.टी.- पृ. 348

दण्डादेर्व्यापारोत्पादनद्वारेण कार्यं प्रतिकुलालस्य सहकारिकारणत्वं तद्वदिति भावः"[1]

**अहङ्कारस्य कार्यम्** – क्रमागतमहङ्कारस्य कार्यं निरूप्यते ज्ञानसाधकानि पञ्चेन्द्रियाणि–नेत्रेन्द्रियं, श्रवणेन्द्रियं, घ्राणेन्द्रियं, रसनेन्द्रियं त्वगिन्द्रियञ्च। एतानि इन्द्रियाणि पञ्चैतान् विषयान् गृह्णन्ति। कर्मेन्द्रियाणि एतेषु अङ्गेषु तिष्ठन्ति वाक्पाणिपादपायूपस्थानि पञ्चानि क्रमशः एतानि पञ्चकार्याणि कुर्वन्ति। इन्द्रियाणि आभ्यन्तरिकशक्त्या एतेषां कदापि प्रत्यक्षीकरणन्न भवति। केवलमनुमानेनैवेतेषां ज्ञानं भवति। येष्वङ्गेषु एतेषान्निवासस्तैरेतेषाङ्केवलमभिव्यक्तिः। अङ्गान्येवैन्द्रियाणि इति न वक्तुं शक्यते, प्रत्युत्तेष्वङ्गेषु स्थितानि भूत्वा इन्द्रियाणि कथ्यन्ते। सर्वाणि मिलित्वा त्रयोदशकरणानि भवति। इन्द्रियाणि विषयान् गृह्णन्ति। मनस्तज्ज्ञानं संकल्पात्मकमहङ्करोति। मनो वदति यत् किमपि सामान्यवस्तुसामान्यं न भूत्वा, विशिष्टम् भवति। अतः वक्तुं शक्यते। बुद्धेः कार्यन्निश्चयकरणमित्थन्निश्चितं वस्तु पुरुषाभिमुखम्प्रस्तूयते। तदा तद्वस्तु तेन ज्ञायते। एतेषु कारणेषु बाह्यकरणस्य सम्बन्धो वर्तमानकालेन परमन्तःकरणस्य सम्बन्धः कालत्रयं सम्भवति।

**तन्मात्राणि** – तमः प्रधानाहंकारात् ज्ञानेन्द्रियाणां विषयभूतानि पञ्चतन्मात्राणि उत्पद्यन्ते इति यद् उक्तं तत्र अस्ति सांख्याचार्येषु विप्रतिपत्तिः। यथा–विन्ध्यवासी तन्मात्रोत्पत्तिः महत्तत्त्वाद् एव स्वीक्रियते, सांख्यकारिकाकारः अत्र सत्त्वाहंकाराद् एव तन्मात्राणामुत्पत्तिः प्रतिपाद्यते –

---

[1] सा.वां.टी.- पृ. ३४८

"अभिमानोऽहङ्कारः, तस्माद् द्विविधः प्रवर्तते सर्गः।

एकादशकश्च गणः, तन्मात्रपञ्चकश्चैव।।" पुनश्च अग्रे –

"सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्काराद्।

भूतादेस्तन्मात्रः, स तामसस्तैजसादुभयम्"[1]।।

तत्र वाचस्पतिमिश्रः इत्थं प्रतिपादयति "अहङ्कारादेकरूपात्कारणात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवतः'। तस्य समाधानं स्पष्टयति साारबोधिनीकारः 'जडो गणः पञ्चतन्मात्रकः, प्रकाशकश्च गणः–एकादशक इन्द्रियाख्यः"। 'अहङ्कारात्तामसात्तु तन्मात्रो गणः प्रवर्तते"। अहंकारे त्रयोगुणाः तिष्ठन्ति। इत्यनेन शास्त्रेण अहंकारस्य कार्यं विवेचयति। "यदा सत्त्वगुणेन रजस्तमसोरभिभवो जायते तदा अहंकारस्य वैकृतसंज्ञा भवति, ततः (वैकृताहंकारात्) सत्त्वगुणसाहाय्येन एकादशेन्द्रियाणि उत्पद्यन्ते। (तत्रापि उत्कृष्टसत्त्वप्रधानादहंकारान्मनो जायते, मध्यमसत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि, निकृष्ट्सत्त्वयुक्ताच्चाहंकारात् कर्मेन्द्रियाणि जायन्ते इति बोध्यम्) अत एव इन्द्रियाणि सात्त्विकानि कथ्यन्ते। यदा च तमोगुणेन सत्त्वरजसोः तिरस्कारो भवति, तदा अहंकारस्य भूतादिसंज्ञा भवति, तमोगुणाधिक्याच्च तामस इत्यपि संज्ञा भवति, ततः (भूतादेः तामसात्) तत्समानस्वभाववन्ति शब्दादिपञ्चतन्मात्राणि उत्पद्यन्ते। एवं यदा रजोगुणेन सत्त्वतमासोरभिभवो जायते तदा अहंकारस्य तैजससंज्ञा भवति, ततः (तैजसाहंकारात्)

---

[1] सां.का. – 24.25

एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति उभयमुत्पद्यन्ते। यतो यदा वैकृतोऽहंकारो विकृतो भूत्वा एकादशेन्द्रियाणि उत्पादयितुं वाञ्छति, तदा स निष्क्रियत्वात् स्वकार्यं कर्तुं न प्रभवति, अतः सः क्रियास्वभावस्य तैजसाहंकारस्य साहाय्यं गृह्णाति। तथा तामसाहङ्कारोऽपि निष्क्रियत्वात् तन्मात्ररूपं स्वकार्यं नोत्पादयितुं प्रभवतीति सोऽपि तैजसाहङ्कारस्य साहाय्यम गृह्णाति। इत्थं **वैकृतभूतादीत्यहंकारद्वयेन सह तयोः कार्ये सहायकत्वात् तैजसोऽहंकारो द्विविधकार्यस्य कारणं भवतीति सरलो निखिलार्थः"[1]।**

**षोडशकस्तु विकारः**

षोडशतत्त्वानि विकृतानि एव। तानि च पञ्चमहाभूतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि श्रोत्रत्वग्घ्राणचक्षुरसनानि ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थसंज्ञकानि पञ्चकर्मेन्द्रियाणि उभयात्मकंमनश्च इति षोडश तत्त्वानि विकृतानि एव। एतेभ्यः अन्यपदार्थाः न जायन्ते, अतः एते न प्रकृतयः।

**इन्द्रियाणि** – बुद्धीन्द्रियाणि लोके इति यद् रूपादीनां ज्ञानं जायते तेषां साधनानि अपि बुद्धीन्द्रियाणि तत् च पञ्चविधं तथाहि- **"चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि पञ्च बुद्धीन्द्रियाणि"[2]**। एवं कर्मेन्द्रियाणि अपि पञ्च तथाहि- **"वाक्पाणिपादपायूपस्थाः पञ्च कर्मेन्द्रियाणि=कर्मसाधनानि इन्द्रियाणि"[3]**। अत्र इन्द्रियस्य सामान्यलक्षणं

---

[1] सा.वां.टी.- पृ. 349

[2] सा.वां.टी.- पृ. 349

[3] सा.वां.टी.- पृ. 349

किमिति जिज्ञासायां किञ्चिद् विशिष्टं प्रतिपादयति टीकाकारः **"सात्त्विकोऽहंकार उपादानं यस्य तथा तस्य भावस्तत्त्वम्। सात्त्विकाहंकारादेव तदुत्पत्तेर्लक्षणसमन्वयः"**[1]। ज्ञानेन्द्रियस्य लक्षणं कृतं पुनः **"सात्त्विकाहंकारकार्यत्वे सति रूपादिविषयालोचनकरणत्वं ज्ञानेन्द्रियत्वम्"**[2]। कर्मेन्द्रियस्य लक्षणं इत्थं करोति टीकाकारः **"सात्त्विकाहंकारकार्यत्वे सति वदनादिव्यापारकरणत्वं कर्मेन्द्रियत्वम्"**[3]। इन्द्रियाणां करणत्वात् करणव्यापारः तु कर्तृपरतन्त्रः व्यापारत्वात् कुठारव्यापारवत् इत्येवं करणेन कर्तुः अनुमानात् इन्द्रियाणां आत्मलिंगत्वं **"इन्द्रो मायाभिः पुरूरूप ईयते"**[4]। अत्रः इन्द्रियाणां करणत्वं अनेन साधितं टीकाकारेण, **"करणानां च कर्तारमन्तरेण असंभवात् आत्मविषयकानितिसाधनत्वेन लिंगत्वमिति भावः"**[5]। इन्द्रियाणां इन्द्रियत्वसंज्ञा कथमिति जिज्ञासां उपस्थाप्य सांख्यचन्द्रिकाकर्तुः मतं प्रमाणरूपेण उपस्थापयति टीकाकारः तथाहि- **"इपदेनविषयाः, तान् प्रति द्रवन्तीति व्युत्पत्त्या" इन्द्रियत्वम्" इति सांख्यचन्द्रिकाकारः"**[6] तन्मात्राणि सन्ति अस्मिन् गण इति तन्मात्रागणे एतेषां संख्या सन्ति पञ्च, कारिकाकारः एतानि अविशेष इत्युक्तं, अविशेषः किमर्थम् इत्यत्र कौमुदीकारः वदति न च एषां सत्त्वादि अस्ति, उपभोगयोग्यो विशेष इति मात्रशब्दार्थः। अत्र "तन्मात्राणि' तान्येवेति

[1] सा.वा.टी.- पृ. 350
[2] सा.वा.टी.- पृ. 350
[3] सा.वा.टी.- पृ. 350
[4] सा.वा.टी.- पृ. 350
[5] सा.वा.टी.- पृ. 350
[6] सा.वा.टी.- पृ. 350

मयूरव्यंसकादित्वान्नित्यसमासः, एवशब्दो विग्रहवाक्ये उपभोगयोग्यसकलविशेषयोगव्यवच्छेदार्थः'। तेभ्यः तन्मात्रेभ्यः पृथिव्यादयः भूतानामुत्पत्तिः जायते। अत्र तत्त्वकौमुदीकारः वदति **'तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यो 'भूतानि' – आकाशानिलानलसलिलावनिरूपाणि पञ्च"**[1]। अध्ययेन इदं प्रतीयते यदत्र अयमाचार्यः तन्मात्रेभ्यः भूतसर्गः विषये भिक्षुमतमनुसरति, भिक्षुनां मते शब्दतन्मात्रात् आकाशस्योत्पत्तिः, शब्दस्पर्शतन्मात्रात् वायोः, शब्दस्पर्शरूपतन्मात्रात् अग्नेः, शब्दस्पर्शरूपरसतन्मात्रात् जलस्य, शब्दस्पर्शरूपरसगन्धतन्मात्रात् पृथिव्याः उत्पत्तिः जायते। यथा च – "आकाशतन्मात्रात्केवलादाकाशमुत्पद्यते, तस्मादेव वायुतन्मात्रसहिताद्वायुः, आकाशवायुतन्मात्राभ्यां तेजस्तन्मात्रसहिताभ्यां वह्निः, आकाशवायुतेजस्तन्मात्रेभ्योऽप्तन्मात्रसहितेभ्यो जलम्, आकाशवायुतेजोऽप्तन्मात्रेभ्यः क्षितितन्मात्रसहितेभ्योऽवनिरुत्पद्यते इति फलितोऽर्थः"। अयं पक्षस्तु नैयायिकानाम् अपि अभिमतमेव वेदान्तिसु अपि अविरुद्धः एव। एतानि तन्मात्राणि त्रिगुणात्मकहङ्कारापरिणामत्वात् 'शान्ता घोराश्च मूढाश्च' भवन्ति। तन्मात्रोत्पन्नानां पञ्चभूतानां सति विशेषसंज्ञा इति। यथा च तेऽमी परस्परव्यावृत्ता अनुभूयमाना 'विशेषा' इति, 'स्थूला' इति चोच्यन्ते, अयं विशेषाः त्रिधा इति प्रतिपादयति ग्रन्थकारः यथा च कौमुदीकारः वदति सूक्ष्मशरीरमेको विशेषः, मातृपितृजो द्वितीयः,

---

[1] सां.त.कौ.।९८-।९९

महाभूतानि तृतीयाः इति। अत एव वदति आचार्यः "तथा च यत एते शान्ता-घोरा-मूढाश्च तत् एषां विशेषत्वमित्यर्थः। शान्तघोरमूढ़शब्दैश्चात्र गुणत्रयधर्मा उपलक्षिताः। पुनश्चाग्रे- इन्द्रियैः शान्तघोरमूढ़ैरन्वितत्वात् सूक्ष्मदेहानां विशेषत्वमित्यनुपदं स्फुटीभविष्यति।

मनोनिरूपणम्-

ज्ञानेन्द्रियाणां स्वरूपं निरूप्य मनसः स्वरूपं निरूप्यते, तत्र आदिसूत्रकारेण "उभ्यात्मकमत्रमनः" इत्युक्तम् अस्य व्याख्याने कौमुदीकारः वदति- **"एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः"**[1]।

अस्य व्याख्याने वदति टीकाकारः- **"तन्मनः संकल्पकम् ज्ञानकर्मेतिद्विविधेन्द्रियप्रवृत्तिकल्पकम्"**[2]। अर्थात् मनसः लक्षणं वर्तते संकल्पकं स च मनः ज्ञानकर्मेन्द्रिययोः प्रवर्तते। अत्र यद्यपि अहंकारस्य सत्त्वांशस्य कार्यत्वात् मनसः इन्द्रियाणामपि उत्पत्तिः तेनैव अत्र मनसः इन्द्रियत्वसंज्ञा। तथाहि- **"अन्येन्द्रियवत् मनोऽपि सात्त्विकादहंकारादुत्पद्यते इति समानधर्मत्वात्, इन्द्रियं चास्तीति"**[3]। मनसः उभयेन्द्रियत्वं कथमिति जिज्ञासायां उच्यते- मनः उभयविधं इन्द्रियाणां प्रवृत्ति सम्पादकं भवति अतः एषः मनः उभयेन्द्रियम्। अहंकारात्

---

[1] सा.वां.टी.- पृ. 352
[2] सा.वां.टी.- पृ. 351
[3] सा.वां.टी.- पृ. 351

अनेकेषां इन्द्रियाणामुत्पत्तिः कथमिति चेत् उच्यते- "धर्माधर्मरूपो यो गुणपरिणामः, तस्य विशेषात्= वैचित्र्यात्, अहंकारस्य तत्कार्याणामिन्द्रियाणां च नानात्वम्= अनेकत्वम्, इत्यर्थः। धर्माधर्मसहकृतगुणविमर्दवैचित्र्याद् अहंकारवैचित्र्यात् परिणामवैचित्र्यमिति तत्त्वम्" [1] । अतएव मनसः लक्षणं करोति टीकाकारः -"सात्त्विकाहंकारकार्यत्वे सति ज्ञानकर्मोभयकरणत्वेन मनस उभयेन्द्रियत्वम् इत्यर्थस्यात्र विवक्षितत्वेन आलोकस्य तथात्वाभावात्"[2]। टीकाकारः संकल्पशब्दस्य यो हि अर्थः तद् इत्थं स्पष्टयति- "संकल्पोऽस्ति मनसोऽसाधारणो धर्मः। समीचीना विशेषा वा कल्पना च संकल्प इत्युच्यते। अर्थात् प्रथमम् अन्येन्द्रियैः सामान्यरूपेण "इदं किंचिद् वस्तु विद्यते" इति ज्ञानं जायते, पुनश्च तस्मिन् "इयमत्र जातिः, अयं गुणः, इयं क्रिया" इत्यादिरूपेण विशेषेण कल्पना भवति, इयमेव विशेषकल्पना संकल्प इति भाष्यते। तादृशी कल्पना चास्ति मनस आयत्तेति भवति मनः संकल्पकमिति"[3]। अत्र आचार्यैः शिवनारायणशास्त्रिभिः आचार्यकुमारिलमतमुपस्थाप्य निर्विकल्पके ज्ञाने मनसः हेतुत्वं प्रदर्शितं, ततश्च न्यायरत्नाकरस्य योगभाष्यकारस्य मनसं प्रदर्श्य बाह्येन्द्रियाणां विषयैः सह मनसः अनुव्यवसायः कथं भवतीति साधितं वर्तते, अतिविस्तरभयात् अत्र संक्षेपैणैव उच्यते। अत्र सविकल्पक-निर्विकल्पक-ज्ञानस्य स्वरूपं ग्रन्थेषु यथा प्रदर्शितं वर्तते तेषामपि

---

[1] सा.वां.टी.- पृ. 351

[2] सा.वां.टी.- पृ. 352

[3] सा.वां.टी.- पृ. 353

उल्लेखं करोति टीकाकारः। अत्र कश्चित् नूतनः पक्षः उपस्थापयति- असाधारण व्यापारयोगात् यथा बुद्धिः अहंकारश्च न इन्द्रियं तथैव मनोऽपि न इन्द्रियं इति जिज्ञासामुपस्थाय समादधति- **"प्रतिनियतविषयाणामेव चक्षुरादीनामिन्द्रियत्वं, न सर्वविषयत्वेन अनियतविषयोर्महदहंकारयोरिन्द्रियत्वम्, तथा मनसोऽपि सर्वविषयत्वेनेन्द्रियत्वं भवितुमर्हति[1]"**

पुनश्च लक्षणं परिष्कृतं - **"सात्त्विकाहंकारोपादानत्वे सति इन्द्रियत्वम्" इत्यत्र फलितमिति ध्येयम्"**[2]। अत्र सारबोधिनीकारः दर्पणकाराणां मतमुपस्थापयति- "अन्यद्धि शब्दानां व्युत्पत्ति निमित्तम्" अर्थात् व्युत्पत्तिलभ्यार्थे प्रकारतयाभासमानं व्युत्पत्तिनिमित्तम्। यथा कुशलशब्दे कुशलग्राहित्वम्। शक्तिज्ञाने प्रकारतया समानं प्रवृत्तिनिमित्तम्। यथा गो शब्दे गोत्वम्। तथा भाट्टपादैः उक्तम्- याचकादौ तु योगिकार्य एव मुख्यार्थः इति। एवञ्च कारणगुणपूर्वकं कार्यं भवतीति कारणवैलक्षण्यं बिना कार्यवैलक्षण्यं न भवतीति तर्हि कथं इन्द्रियाणां नानात्वमुपदिश्यते अहंकारस्य एकत्वात् तत्कार्याणामपि एकत्वं स्युरिति अतः मनसः स्वरूपं विचार्य इन्द्रियाणां स्वरूपं विचारयितुं उपक्रमते- बुद्धीन्द्रियाणामिति। कृतिमादाय जनकत्वसामान्येन व्यवस्थापनमात्रम्।

यद्यपि पृथिवीतः घट-पट-मठ-मानव-पशु-वृक्षादयः जायन्ते, तथा ततः अपि दुग्धबीजदध्यङ्कुरादयः अपि जायन्ते। तथापि नैते पृथिवीतः भिद्यन्ते। अतः यथा

---

[1] सा.बो.टी.- पृ. 357

[2] सा.बो.टी.- पृ. 358

पञ्चतन्मात्रेभ्यः पृथिव्यादिपृथग्विकाराः जायन्ते न तथा घट-पट-मठादयः, विजातीयरूपाऽभावात्। घटपटमठस्तु सजातीयाः एव। प्रकृष्टा विजातीया एव कृतिः प्रकृतिः।

**प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।**

**सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिताः।**

घटपटमठादिवस्तूनां स्थूलता इन्द्रियग्राह्यता समाना एव। अतः एतानि तत्त्वान्तराणि सन्ति इति वक्तुं न शक्यम्। योगभाष्येऽपि एवम् उक्तम् अस्ति यत् पञ्चमहाभूतोत्पत्यनन्तरं एकादशेन्द्रियोत्पत्यनन्तरं यानि अपि वस्तूनि नवीनरूपेण जातानि सन्ति तेषां विजातीयरूपाऽभावाद् नैतानि पदार्थान्तराणि। अपितु धर्मतत्त्वपरिणामाकारादीनि एव। **न विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः तेषां तु धर्मलक्षणावस्थाः परिणामाः व्याख्यायिष्यन्ते। इति** [1] ननु तर्हि उपनिषत्सु **अष्टौ प्रकृतयः** इति गीतायाम् **भिन्ना प्रकृतिरष्टधा** इति च अष्टविधकृतेः वर्णनमसङ्गतं स्याद् इति चेत्? न, तत्तु सप्तप्रकृतिविकृतिभिः सह मूलप्रकृतिः एवं यदा रजोगुणेन सत्त्वतमासोरभिभवो जायते तदा अहंकारस्य तैजससंज्ञा भवति, ततः (तैजसाहंकारात्) एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति उभयमुत्पद्यन्ते। यतो यदा वैकृतोऽहंकारो विकृतो भूत्वा एकादशेन्द्रियाणि उत्पादयितुं वाञ्छति, तदा स निष्क्रियत्वात् स्वकार्यं कर्तुं न प्रभवति, अतः सः क्रियास्वभावस्य

[1] यो.भा. (2-19)

तैजसाहंकारस्य सहाय्यं गृह्णाति। इत्थं **वैकृतभूतादीत्यहंकारद्वयेन सह तयोः कार्ये सहायकत्वात् तैजसोऽहंकारो द्विविधकार्यस्य कारणं भवतीति सरलो निखिलार्थः"[१]।**

**4. प्रकृतिविकृतिभ्यां भिन्नः पुरुषः**

जीवेष्वनुभूयमानं चैतन्यमेव साङ्ख्यैः पुरुषसंज्ञयाऽभिधीयते। एवञ्च चैतन्यं प्रतिशरीरं पृथक-पृथक् स्वीक्रियते साङ्ख्यैः। पुरुषोऽयं प्रकृतिविकृतिविलक्षणः सन्नपि प्रकृतिसंयोगात् कर्ता एव भवति। वस्तुतस्तु येऽपि सुखदुःखमोहादयाः विषया आध्यात्मिकाधिभौतिकाधिदैविकदुःखानि च सन्ति ते प्रकृतिमण्डल एव राजन्ते। एतेषां पुरुषेण सह मात्रेणापि सम्पर्को न भवति, तदप्यनादिसंस्कारवशात् प्रकृतौ जायमानानां सुखदुःखादीनामनुभूतिः क्रियते पुरुषेण। साङ्ख्यदर्शनस्य प्रमुखमुद्देश्यमस्ति प्रकृतिपुरुषयोरैक्याध्यासं निरस्य तद्वास्तविकस्थितेः बोधजागरणम्।

**तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।**

**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च[2]॥**

एतद्विवेचनेनेदमायातं यत् प्रकृतिपुरुषौ सुतरां भिन्नौ। सुतरां भिन्नयोरप्येतयोः कथं योगः? कथञ्च तत्कृतदुःखादीनां समुदयः? अत्रैव साङ्ख्यदर्शनस्य रहस्यं तिष्ठति। इदानीं प्रकृतिपुरुषयोः संयोगहेतुर्निरूप्यते। वस्तुतोऽचेतनमपि लिङ्गं,

---

[1] सा.वा.टी.- पृ. 349

[2] सां.का-19का.

प्रकृतिश्च पुरुषसंसर्गात् चेतन इव प्रतीयते। एवमेव निर्गुणः अकर्ता अभोक्ता उदासीनोऽपि पुरुषः कर्ता एव भवति। कथमेतदुपपद्यते? इत्यत्राह-

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**

**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः[1]।।**

अत्रैकाख्यायिका परम्परया स्मर्यते-कस्मिन् नगरे अग्निदाहेन त्रस्ताः सर्वेऽपि पुरुषाः इतस्ततः पलायितुमारभन्ते। तस्मिन्नेव नगरे एकः खञ्जोऽपरश्चान्ध इति द्वौ जनाववर्तेताम्। अन्धः खञ्जश्च पृथक्-पृथक् पलायितुमसमर्थावास्ताम्। परन्तु ताभ्यां तस्मात्सङ्कटात् स्वात्मानौ त्रातुं कश्चन पन्था आविष्कृतः। खञ्जेनोक्तं भो प्रज्ञाचक्षो! भवान् मां स्वस्कन्धे स्थापयतु आहञ्च केन पथा पलायनं कर्तव्यमिति त्वां निर्देक्ष्यामि। इत्थमावां सङ्कटात् स्वात्मानौ त्रातुं प्रभवावः। ततश्च तेनान्धेनापि तथैवाचरितम्। उभावेव ततः पलायनं कृत्वा सुरक्षितस्थलं प्राप्तवन्तौ। आख्यायिकेयं प्रकृतिपुरुषयोः सम्बन्धद्योतनायातीव सहायिका। अत्र प्रकृतिरन्धस्थाने वर्तते। सा चलितुं शक्नोति परं द्रष्टुं न शक्नोति। पुरुषः खञ्जस्थाने वर्त्तते। सः द्रष्टुं शक्नोति परं चलितुं न प्रभवति। अनयोः साहचर्यात् सम्यक्तया सृष्टेः कार्याणि सञ्चालितानि जायन्ते। साङ्ख्यशास्त्रस्वीकृतपुरुषपदार्थः न प्रकृतिः नापि विकृतिः। यतोहि सः न कस्मादपि जायते नापि स किञ्चिद् उत्पादयति। स तु अनादिः अपरिणामी च विद्यते। सः सर्वभोक्ता। पुरुषः नित्यः अस्ति। दुखःरूपबन्धनं तु वस्तुतः चित्तस्य

---

[1] सां.का-2। का.

भवति न तु पुरुषस्य अपि। उदासीन एव पुरुषः। तस्य इयमेव उदासीनता तस्य अकर्तृत्वाभावः अस्ति। पुरुषः बुद्धेः प्रतिसम्वेदी न तु बुद्धिरूपः। बुद्धिस्थितविषयाणाम् उपभोगं तु करोति पुरुषः परन्तु स्वयम् अपरिणामी एव विद्यते। अत एव अस्य स्वरूपम् एतादृशम् एव निरूपितम्।[1] एतेषां पञ्चविंशतितत्त्वानां बोधेन मोक्षोऽधिगम्यत इति साङ्ख्या मन्यन्ते। तत्त्वानामेतेषां बोधः प्रमाणादेव जायते। अत एव प्रमेयसिद्धिः प्रमाणाद्धि कथनमिदं सुख्यातिमपि साङ्ख्यपरम्परायाम्।

**पुरुषस्य अस्तित्वे प्रमाणप्रदर्शनम्**

ये खलु तौष्टिकाः प्रकृतिं, अहङ्कारं, महान्तं, इन्द्रियाणि, सूक्ष्माणि, स्थूलानि, भूतानि वा आत्मतत्त्वेन अभिमन्यमानाः तानि एव उपासते, तान् प्रति अव्यक्तादिभ्यः व्यतिरिक्तं आत्मतत्त्वं अस्ति इति प्रतिपादयितुं ईश्वरकृष्णेन साङ्ख्यकारिकायाम् उक्तम्–

"सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च[2]।।"

अस्यां कारिकायाम् अनुमानप्रमाणेन प्रकृत्यादिभ्यः आत्मनो व्यतिरिक्तत्त्वं साधयितुं पञ्चहेतवः उक्ताः। तेषु प्रथमः हेतुः अस्ति "सङ्घात् परार्थत्वात्" इति। एवञ्च पुरुषः अव्यक्तादिव्यतिरिक्तः, सङ्घातपरार्थत्वात् इत्यनुमानं फलति। अत्र अनुमाने यो हेतु सङ्घातपरार्थत्वात् इति विद्यते तस्मिन् सङ्घतेति हेतुः विशेषणम्

---

[1] 'न प्रकृतिर्न विकृतिः पुरुषः इति

[2] सां.का-17का.

अस्ति। तेन सङ्घातत्वात् इति हेतुना अव्यक्तादीनां परार्थत्वं सिद्ध्यति। एवञ्च "अव्यक्तमहदहङ्कारादयः पदार्थाः सङ्घातत्वात्, शयनासनादिवत् इत्यनुमानं निष्पद्यते एवञ्च यत्र-यत्र सङ्घातत्वं तत्र-तत्र परार्थत्वम्, यथा पर्यङ्कादयः सङ्घताः परार्थाः दृश्यन्ते एवं लोके तथैव अव्यक्तादयः अपि संहत्य कार्यकारीत्वात् संहतत्वात् पदार्थाः इति सिद्ध्यति। परत्वेन च अव्यक्तादतिरिक्तः पुरुषः सिद्ध्यति। यद्यप्यत्र कश्चिद् एवं वक्तुं प्रभवति यत् पर्यङ्कादयः संहताः पेरषां शरीरादि संहतानां कृते एव दृश्यन्ते लोके एवं संघातत्वादिति हेतुना संहतानां संघातान्तरार्थिकत्वमेव सिद्ध्यति, न तु संहत व्यतिरिक्तः पुरुषः इति अत्रेदं बोध्यं सङ्घातत्वात् इति हेतोः सामर्थ्यं परार्थ्यसाधनम् एव उपक्षीणं सङ्घातान्तरार्थकत्वं साधयितुं न प्रभवति। एकः संहतः यदि अन्यस्मै स्यात् संहतायेति अनवस्था आपद्येत। यदि प्रामाणिकं कल्पनागौरवमपि मृष्यते। तदा द्वितीयो हेतु प्रदर्शयते "त्रिगुणादिविपर्ययादिति" अत्र अयं भावः त्रिगुणात्वादयो धर्माः संहतत्वेन व्याप्ताः अर्थात् यत्र-यत्र त्रिगुणत्वादि तत्र-तत्र संहतत्वम् एवञ्च पुरुषः अव्यक्तादिव्यतिरिक्तः त्रिगुणादिविपर्ययात् इति हेतुना परार्थत्वादि इत्यत्र परत्वेन असंहतः एव विवक्षितः इति सूच्यते असंहतश्च परः पुरुष एव न तु अव्यक्तादिः एवञ्च पुरुषः अव्यक्तादिव्यतिरिक्तः अधिष्ठानात् इत्युनमानेनापि पुरुषस्य अव्यक्तादिव्यतिरिक्तत्त्वं सिद्ध्यति। यतः यद् यत् सुखदुःखमोहात्मकं भवति। तत् तत् परेण अधिष्ठीयमानं दृश्यते यथा रथादिर्यन्त्रादिभिः अव्यक्तादिकमपि सुखदुःखमोहात्मकं भवति। अत सद्पि केनचिद्

परेण सुखदुःखमोहात्मकः परः पुरुष एवेति सिद्ध्यति। पुरुषस्य प्रकृत्यादिभिन्नत्वं। एवञ्च भोक्तृभावात् इति हेतुनापि पुरुषस्य अव्यक्तादिभिन्नत्वं सिद्ध्यति। भोक्तृभावादि अत्र भोक्तृभावपदं भोग्ययोः सुखदुःखयोः उपलक्षणम्। अनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयं च दुःखं प्रत्यात्मम् अनुभूयते। न हि कश्चित् एव प्राणि यस्य अहं सुखी, अहं दुःखी, इत्यनुभवः न स्यात्। आभ्यां सुखदुःखाभ्याम् अनुकूलनीयः प्रतिकूलनीय वा नूनं स्यात् ताभ्यां सुखदुःखाभ्याम् अनुकूलनीयाः प्रतिकूलनीया वा न अव्यक्तादयो भवितुमर्हति कर्मकर्तृविरोधात् अव्यक्तादयः स्वयमेव सुखदुःखस्वरूपाः कथम् अनुकूलनीयत्वं प्रतिकूलनीयत्वं वा धर्तुं शक्यन्ते। तस्मात् यः सुखदुःखाद्यानात्मकः स एव अनुकूलनीयः प्रतिकूलनीयो वा। स च पुरुष एव "कैवल्यार्थं प्रवृत्तेश्च" इति हेतुनापि अव्यक्तादिव्यतिरिक्तः पुरुषः सिद्ध्यति। अत्र अयं भावः कैवल्यं नाम दुःखत्रयानामात्यन्तिकी निवृत्तिः। त्रिविधदुःखात्यन्तनिवृत्तिरूपं कैवल्यं प्रति शास्त्राणां दिव्यलोचनानां महर्षिणाञ्च प्रवृत्तिर्दरीदृश्यते। दुःखरूपाणां बुद्ध्यादीनां च त्रिविधदुःखात्यन्तनिवृत्तिरूपं कैवल्यं भवितुमर्हति न हि स्वभावात् किमपि वियोजयितुं शक्यते। तस्मात् शास्त्राणां महर्षिणाञ्च कैवल्यार्थं प्रवृत्तेः प्रकृत्यादिव्यतिरिक्तः पुरुषः अस्ति इति सिद्ध्यति। चेतनाशक्तिरूपत्वाच्चित्रं गुणवृत्तं जानातीति ज्ञः।[1] ज्ञः पुरुषः।[2] चेतनः पुरुषो ज्ञ इत्युच्यते। पुरि लिङ्गे शेते इति

---

[1] यु.दी.-2

[2] गौ.भा.-2

पुरुषः।[1] पुरुषस्तु सुखाद्यननुसङ्गी चेतनः।[2] चेतनो हि द्रष्टा भवति नाचेतनः, साक्षी च दर्शितविषयो भवति। यस्मै प्रदर्श्यते विषयः स साक्षी[3], यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयत एव प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी।[4]

**पुरुषबहुत्वसिद्धिप्रदर्शनम्**

आत्मन एकत्वे 'कश्चित्पुरुषो बद्धः मुक्तः वा' इति बन्धमोक्षव्यवस्था न संभवतीति प्रतिशरीरमात्मा भिन्नभिन्न एवास्ति। तथा च सूत्रम्-"व्यवस्थातो नाना" इति। साङ्ख्यसूत्रमपि-"जन्मादिव्यवस्थातः पुरुषबहुत्वम्" [5] इति। अद्वैतवादिनो वेदान्तिनः सर्वशरीरेषु एक एव आत्मा सन्तिष्ठते इति स्वीकुर्वन्ति तेषां मतं निराकर्तुं प्रतिशरीरं भिन्नं आत्मा इति साधयितुं च उक्तमीश्वरकृष्णेन-

"जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।।"[6]

अत्र अयं भावः पुरुषबहुत्वं सिद्धं "जननमरणकरणानां प्रतिनियमात्"। अर्थात् जनन प्रतिनियमात्, मरणप्रतिनियमात्, करणप्रतिनियमात् च पुरुषस्य बहुत्वं सिद्धम्। यद्यपि सर्वेष्वपि आस्तिकदर्शनेषु आत्मनः जन्म न स्वीकर्तुं शक्यते, पुनः

---

[1] सां.त.कौ.-55
[2] सां.त.कौ.-5
[3] सां.त.कौ.-19
[4] सां.त.कौ.-19
[5] सां.सू. - 1/149
[6] सां.का. -18

ईश्वरकृष्णस्य जननप्रतिनियमात्, मरणप्रतिनियमात् इति कथनं असंगतं इव प्रतिभाति। तथापि जन्मशब्दस्य अत्र "आत्मनः अपूर्वाभिः निकायविशिष्टाभिः देहेन्द्रियमनोऽहंकारबुद्धिवेदनाभिः सह संबंध एव अर्थः न तु पुरुषस्य परिणामः। एवमेव गृहीतानां देहादीनां परित्याग एव मरणं न तु नाशः पुरुषस्य कूटस्थनित्यत्वात्। एवं च मरणं च प्रतिनियमो व्यवस्था तथा च जन्म व्यवस्थातः, मरणव्यवस्थातः, करणव्यवस्थातश्च प्रतिशरीरं भिन्नः पुरुषः इति सिद्ध्यति। दृश्यते हि लोके यदा एकत्र आत्मा अपूर्वैः देहादिभिः सम्बध्यते तदैव अपरत्र गृहे गृहीतदेहादेहपरित्यागरूपं मरणं तस्य दृश्यते। अत व ग्रामे यदि देवदत्तस्य गृहे पुत्रोत्सवः भवति। प्रति शरीरं एक एव आत्मा स्यात् तर्हि इयं व्यवस्था नोपपद्यते न हि एकस्यैव आत्मनः एकस्मिन् एव क्षणे परस्परं विरुद्धे द्वे अवस्थे जननमरणरूपं भवितुं शक्येत। एवमेव करणव्यवस्थातोऽपि प्रति शरीरं भिन्नः आत्मा इति सिद्ध्यति। यथा दृश्यते लोके कश्चिदन्धः कश्चित्काणः, कश्चिद्बधिरः कश्चित्पङ्गु इत्यादिः। यदि सर्वशरीरेषु एक एव आत्मा स्यात् तर्हि एकस्मिन् जायमाने सर्वे जायेरन, एकस्मिन् म्रियमाणे सर्वे म्रियेरन्, एकस्मिन् अंधे सर्वे अंधाः स्युः एकस्मिन् बधिरे सर्वे बधिराः स्युः। नैवं अनुभूयते लोके। अतः जननमरणादिव्यवस्था न कल्पयितुं शक्यते। अर्थात् यद्यपि सर्वशरीरेषु एक एव आत्मा सन्तिष्ठते तस्य सजातीयविजातीयस्वगतभेदशून्यत्वात्। तथापि देहेन्द्रियानाम् उपाधिना भिन्नतया यस्मात् देहात् उपाधेः उपहितः आत्मनः संबंधः विनश्यति तत्र "अयं मृतः" इति व्यवहारे

भवति यत्र तु अपूर्वैः शरीरेन्द्रियादिरूपैः उपाधिभिः तस्य आत्मनः संबंधो जायते तत्र अस्य जन्मजातमिति व्यवहारो जायते। तथा च निष्कर्षः-एकस्मिन् जायमाने म्रियमाणे वा, सुखिनि दुःखिनि वा, बद्धे मुक्ते वा नेतरे जन्मादिभाजो भवन्तीति वा व्यवस्था सा नोपपद्येत, यदि सर्वशरीरेष्वेक एव पुरुषोऽभ्युपेयते, तस्मात् पुरुषनानात्वमेवाङ्गीकियत इति। तथा पुरुषोऽयं चेतन उत्पत्तिविनाशरहितश्च वर्तते। एवं न कस्यापि कारणं सोऽस्ति। किं तु पुरुषः सर्वथा पद्मपत्रवन्निर्लेप एव वर्त्तते। किमुक्तम्? पद्मपत्रं यथा जलेन लिप्तं न भवति तथा पुरुषोऽपि कर्तृत्वभौक्तृत्वादिधर्माणामाश्रयो न भवति। चेदमनुमानं-"पुरुषः कर्तृत्वाभाववान्, कारणत्वाभाववत्त्वात्, यन्नैव तन्नैवं यथा बुद्धिः।" अर्थात् तेन पुरुषेण कर्तृत्वधर्मत्वाभाववत्वं भवितव्यम् कारणत्वधर्मत्वभाववत्त्वात्, यो यः पदार्थः कर्तृत्वधर्मत्वाभाववान् न भवति, स कारणत्वधर्मत्वभाववानपि न भवति, यथा बुद्धिः (महत्तत्त्वम्) कर्तृत्वधर्मत्वभाववती नास्ति, किं तु कर्तृत्वधर्मवत्त्वेवास्तीति सा कारणत्वधर्मत्वाभाववत्यपि नास्ति, कि तु कारणत्वधर्मवत्येव सा वर्तत इति।

अनेन चानुमानेन पुरुषः कर्तृत्वाभाववान् सिद्ध्यति। यश्च कर्ता भवति स एव भोक्ता भवतीति नियमात्। भोक्तृत्वमपि न पुरुषधर्म इत्यायाति। ततश्च 'न पुरुषः कर्ता नापि भोक्ता इति संसिद्धम्। यत्तु केचित् साङ्ख्यपुरुषस्य भोक्तृत्वमुक्तम्, तदपि पुरुषे (आत्मनि) बुद्धिनिष्ठभोक्तृत्वमारोप्यैव, साङ्ख्यनयं तस्या एव भोक्तृत्वात् पुरुषस्य चं परमार्थतोऽभोक्तृत्वात्। ननु बुद्धेरिव पुरुषस्यापि

कारणत्वाङ्गीकारे का क्षतिरिति चेत्। अत्राहुः-यदि पुरुषस्य घटादिकार्याणाम् उपादानकारणत्वभ्युपगम्येत, तदा उपादानकारणेन सह कार्यस्याभेदात् घटादिकार्याणां नाशे चेतनपुरुषस्यापि नाशापत्तिः। तच्चानिष्टम्, "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इति श्रुत्या तस्या स्वरूपविनाशतः कार्यादिरूपधर्मनाशप्रयुक्तनाशतश्च रहितत्वाभिधानात्। "अत आत्मा" न जायते म्रियते वा कदाचित् "इत्यादिश्रुतिस्मृतिभिरात्मनो जन्ममरणादिसर्वविकार-रहितत्वाभिधानाच्च। आत्मनो नाशत्वाभ्युपगमे कर्तुरात्मनः उत्तरजन्मनि असत्वेन अकर्तुश्च सत्वेन कृतनाशाकृताभ्यागमदोषयोरनुद्धाराच्च। तस्मात् तस्याऽकारणत्वमेवा-भ्युपेयम्।

### तत्त्वानां साधर्म्यवैधर्म्यप्रदर्शनम्

साङ्ख्यशास्त्रम् इदं जगत्कार्यकारणमात्रस्य प्रवाहः। अत एव अस्य जगतः यदपि कारणं तत् कारणं आत्मा नैव भवति, आत्मनः भिन्नस्वभावात्। अत एव यदपि कारणं अस्य जगतः तत् त्रिगुणात्मकमेव स्यात्। अतः साङ्ख्याचार्यैः जगतकर्तृत्वेन प्रकृतेः सिद्धिः प्रत्यपादि। तथा च-भेदानां परिमाणात् इत्यनया कारिकया कारणभूतायाः प्रकृतेः सिद्धिं प्रदर्श्य तत् कार्याणामपि विवेचनमावश्यकं अतः कारणगुणैः कार्यगुणानारभन्ते। अतः त्रिगुणात्मिकायाः प्रकृतेः कार्याणां महदादीनां महाभूतं यावत् तत्त्वानां उत्पत्तिः भवति। सांख्यशास्त्रे त्रिगुणात्मिकायाः प्रकृतेः महदादि कार्यैः सह कार्यकारणभावात् साधर्म्यं वर्त्तते। अत एव आदौ

कारिकाकारेण व्यक्ताव्यक्तयोः स्वरूपप्रतिपादनेन अनयोः वैधर्म्यं प्रदर्श्य ततश्च व्यक्ताऽव्यक्तयोः साधर्म्यं व्यवस्थाप्य उभयोः पुरुषेण सह वैधर्म्यं प्रतिपादितम्। सांख्यशास्त्रे व्यक्ताऽव्यक्तज्ञतत्त्वानां साधर्म्यं वैधर्म्यं यथा उपस्थापितं तत् प्रस्तूयते -

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।

सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्।।

यानि अपि तत्वानि सकारणानि, अनित्यानि, क्रियाशीलानि, अनेकानि स्वकारणाश्रितानि मूलप्रकृतेः अनुमापकानि सावयवानि तानि व्यक्तानि भवन्ति। तथा एतेभ्यः विपरीतानि अर्थात् कारणरहितानि स्वतन्त्राणि भवन्ति। तानि अव्यक्तानि भवन्ति। महत्तत्त्वतः स्थूलभूतपर्यन्तं यानि अपि तत्त्वानि सन्ति, तेषां संज्ञा व्यक्तम् अस्ति। एतानि सर्वणि तत्त्वानि प्रत्यक्षप्रमाणविषयभूतानि सन्ति। एतेषाम् इयं विशेषता अस्ति यद् एतानि कारणात् समुद्भूतानि सन्ति। अतः एतेषां समुत्पत्तिः जायते। दृष्टान्ततः पञ्चमहाभूतानां कारणरूपाणि पञ्च तन्मात्राणि सन्ति, तेषामपि कारणम् अहंकारतत्त्वम् अस्ति। अहंकारतत्त्वस्य कारणं महत्तत्त्वम् अस्ति। तस्य च कारणभूता मूलप्रकृतिः। माठरवृत्त्यनुसारं हेतुभेदः ज्ञापककारकभेदाभ्यां द्विधा भवति। प्रधानं बुद्धि, अहंकारतत्त्वं तथा पञ्चतन्मात्रगणः कारकहेतुकोटौ आयाति। तथा एतेषु अपि बुद्धितत्त्वम् अहंकारतत्त्वं तथा पञ्चतन्मात्रगणः साधनं साध्यञ्च उभयथा भवति। किन्तु प्रधानम् अव्यक्तं केवलं हेतुः भवति न तु कार्यम्। व्यक्ततत्त्वस्य लक्षणनिरूपणप्रसङ्गे आचार्यः इत्थं प्रतिपादयति- अत्र "व्यक्तम्" इति लक्ष्यपदं

विशेष्यम्, “हेतुमत्”इत्यादीनि च सप्तपदानि लक्षणपरत्वेन विशेषणानि।[1] अस्मिन् लक्षणे सप्तविशेषणपदानिप्रयुक्तानि सन्ति तेषु अपि यत् प्रधानं तत्त्वं महतत्त्वं तत् प्रधानभूतमत एव स्पष्टयति टीकाकारः- “व्यक्तस्य प्रधानं हेतुरस्ति, अतो हेतुमद् व्यक्तं भूतपर्यन्तम्, हेतुमद् बुद्धितत्त्वं प्रधानेन, हेतुमान् अहङ्कारो बुद्ध्या, पञ्चतन्मात्राणि एकादशेन्द्रियाणि च हेतुमन्ति[2]। अर्थात् महदादारभ्य भूतपर्यन्तानां तत्त्वानां कारणभूतं यत् प्रधानतत्त्वं महतत्त्वं तत् अव्यक्तस्य प्रधानस्य प्रमितौ हेतुरिति। द्वितीयं पदं व्याख्यायते- अनित्यम् इत्यनेन अत्र इदमेव तात्पर्य्यं यद् आविर्भावतिरोभावाभ्यां पदार्थस्य प्रतीतिः विनाशश्च जायते। वस्तुतस्तु सांख्यशास्त्रानुसारं कश्चिदपि पदार्थः परमार्थतः अनित्यतां न जायते। कार्यरूपे, कारणरूपे वा, व्यक्ततत्त्वानि यद्यपि कार्य्याणि, तथापि तानि स्वोत्पत्तेः प्राग् अपि स्वस्वकारणेषु सूक्ष्मरूपेण अवस्थितानि भवन्ति। तदेवम् एतेषाम् अनित्यतायाः इदमेव तात्पर्यं यद् यस्यामवस्थायामेतानि व्यक्तानि भवन्ति सा अवस्था अनित्या विनाशशीला च भवति। कारणव्यापारानन्तरं तदभिव्यक्तिमात्रं जायते। वेदान्तादिदर्शनेषु अनित्यस्य अर्थः विनाशशीलता कृतः अस्ति। साङ्ख्यसिद्धान्तानुसारं सूक्ष्मरूपे स्वकारणे अवस्थानमेव तत्त्वस्य विनाशः। साङ्ख्यसूत्रम् अपि एवमेव

[1] सा.वा.टी. पृ.257

[2] सा.वा.टी. पृ.257

निरूपयति। **नाशः कारणे लयः**[1] गीतायाम् अपि संसाररूपिणमश्वत्थवृक्षमव्ययमित्युक्तं भगवता श्रीकृष्णेन "ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्।[2] किन्तु एतद् विपरीतं प्रधानं नित्यम् अस्ति। यतोहि तस्य किमपि कारणं नास्ति यस्मिन् तस्य लयः भवेत्। अत एव वदति शिवनारायणशास्त्रिपादः-स्वकारणे सूक्ष्मतयाऽवस्थानं विनाशः। एतेन सत्कार्यवादे विनाशः कुतः इति शङ्का निरस्ता। अर्थात् यत् अविकृतितत्त्वं तत् अकारणं अकारणत्वाच्च नित्यम् इति सांख्यानां मतं प्रकृतेः नित्यत्वस्वीकारे तत्रैव प्रकृतौ व्यक्तानि नामसंभवात् तेषामपि नित्यत्वं नाशादर्शनात्। कारणे लयत्वात् तेषां व्याप्यत्वम् अपि सिद्धयति। अतः व्यक्तः व्याप्या न तु प्रकृतिवत् व्यापका। यत् तत्त्वं सर्वगतं भवति तद् व्यापकं भवति। तथा तस्य सम्बन्धः व्याप्येन सह भवति। व्यापकं च यद् भवति तद् अधिकस्थाने वर्तते। तद् विपरीतं च अव्याप्यं भवतिः न्यूनस्थानव्यापतत्वात्। अधिकदेशवृत्तित्वं व्यापकत्वं न्यूनदेशवृत्तित्वं व्याप्यत्वम्। एतत् सर्वं दृष्टान्ततः अवगन्तव्यः यथा अग्निधूमयोः मध्ये धूमः अग्न्यपेक्षया व्याप्यः अग्निश्च व्यापकः। यतोहि यत्र यत्र धूमः भवति अग्निः अपि तत्र तत्र दृश्यते। तथा यत्र धूमः नास्ति तत्राऽपि अग्निः भवति एव, यथा 'अयोगोलकम्'। अत्र अग्निः अस्ति धूमः नास्ति। अतः धूमः अग्न्यपेक्षया व्याप्यः, अर्थाद् अल्पदेशवर्ती अस्ति। यतोहि यत्र यत्र अग्निः अस्ति

---

[1] सा सू इति (1-121)।

[2] गीता (15-1)

तत्र सर्वत्र धूमः अपि भवेद् इति कश्चिद् नियमः नास्ति अयोगोलके व्यभिचारदर्शनात्। यत्र कुत्र एव स्थलेषु अग्नेः आर्द्रेन्धनसंयोगः भवति, तत्र एव धूमसम्भावना अस्ति, अतः अग्निः व्यापकः धूमः व्याप्यंः। कार्यकारणभावेन अपि व्याप्यव्यापकभावसम्बन्धः भवति। कारणं हि अधिकदेशवृत्तिः भवति अतः तद् व्यापकं, कार्यं च तदपेक्षया न्यूनदेशवृत्तिः अतः तद् व्याप्यम्। मूलप्रकृतेः सर्वतत्त्वगतत्वाद् व्यापकत्वं भवति एवं महत्तत्वमपि एकं व्यापकं तत्त्वमस्ति, यस्मिन् अवशिष्टसर्वतत्त्वानामन्तर्भावः जायते, तथापि मूलप्रकृत्यपेक्षया व्याप्यमेव। एतद्विपरीतमव्यक्तम् अर्थाद् मूलप्रकृतिः एव महत्तत्वापेक्षयाऽधिकव्यापितत्त्वमस्ति। पुरुषः अपि व्यापकः एव, यतोहि 'तद्विपरीतस्तथा च पुमान्' इतिकारिकायां व्यक्ताव्यक्तांशाभ्यां विपरीतं विलक्षणमेव उक्तम्। अतः पुरुषस्य व्यापकता सापेक्षा नास्ति, अपितु सः स्वतन्त्ररूपेण सर्वव्यापी पदार्थः अस्ति। अत एव वदति टीकाकारः ततश्च स्वस्वकार्यव्यापित्वेऽपि कारणस्य स्वस्वकारणाव्यापकत्वाद-व्यापित्वेत्यर्थः। स्वस्वकार्यं व्याप्नुवदपि बुद्ध्यादिकं न प्रधानं व्याप्नोतीत्यव्यापकम् इत्यर्थः[1]। सक्रियमितिविशेषणस्य व्याख्याने आचार्य स्व आशयं इत्थं स्फोरयति-सक्रियमिति-क्रिया च परिस्पन्दरूपा भवति। सांख्यतत्त्वकौमुद्याम् एवमेव निरूप्यते मिश्रमहोदयैः सक्रियं परिस्पन्दवत्। तथाहि बुद्ध्यादयः उपात्तमुपात्तं देहं त्यजन्ति

---

[1] सर्वोधिनींटीका पृ. 258

देहान्तरं चोपादत्ते इति तेषां परिस्पन्दः। इति[1] गृहीतं गृहीतमित्यर्थः। उपाददते- गृह्णन्ति। अत्र विशिष्टं व्याख्यानं उपस्थापयति तथाहि- तत्र क्रिया द्विविधा, गमनादिरूपा स्पन्दात्मिका, आकुञ्चनप्रसारणादि संवरणरूपा परिणामात्मिका च। तत्राद्या कार्यमात्रवर्तिनी द्वितीया मूलकारणवर्तिन्यपीति बोध्यम्[2]। सृष्टिकाले सूक्ष्मतत्त्वम् अपि त्रयोदशप्रकारकैः अन्तः बाह्यकरणैः सह युक्तं सद् इतस्ततः सञ्चरणस्वभावकं भवति। तत् सक्रियम् इत्युच्यते। अर्थात् क्रियया गमनादिरूपपरिस्पन्दात्मिकया आकुञ्चनप्रसारणादिसंवरणरूपया सहितं यद् भवति तत् सक्रियम् इति व्युत्पत्तिः, तया अवगन्तव्यम्। क्रियाशीलता व्यक्तप्रकृतेः गुणः अस्ति। यद्यपि सत्वरजस्तमोगुणाः अपि मूलप्रकृतौ एव विद्यन्ते तथापि अव्यक्तावस्थायां तेषां प्रवाहस्य सजातीयत्वात् तत्र क्रिया भवितुं नार्हति। क्रिया च तत्र एव भवितुमर्हति यत्र विजातीयप्रवाहसम्पर्कः स्यात्। विजातीयत्वं च व्यक्ततत्त्वेषु एव सम्भाव्यते, अतः व्यक्ततत्त्वं स्वयमेव सक्रियं भवति। अतः सक्रियमित्युच्यते। अत्र अनेकपदेन एकस्मादधिकं सजातीयभेदयुक्तमेव विज्ञेयम्। यथा मानवेषु ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-भेदाः भवन्ति। यद्यपि ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः सर्वे अपि मानवाः। मानवत्वं सर्वत्र समानमेवः तथैव बुद्ध्यादावपि सजातीयभिन्नता अस्ति एव। यतः प्रकृतिपुरुषव्यक्तिं प्रति भिन्नता बुद्धिकृता भवति। अनेक इति

---

[1] सांख्यतत्त्वकौमुद्याम्।

[2] सा.वां.टी.पृ. 258

विशेषणपदस्य व्याख्याने आचार्यैः आदौ अनेकेति पदस्य इत्थं लक्षणं कृतं- स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणतत्त्वविभाजकोपाधिमत्त्वम्। याति चेदं महदादिषु, महदादिप्रतियोगिकान्योन्याभावेन सह महदन्तरादौ महत्त्वादेः सामानाधिकरण्यसत्त्वात्। प्रकृतौ तु न याति, प्रकृत्यन्योन्याभावस्य प्रकृतावसत्त्वात्। पुरुषे चानेकत्वमिष्टमेवेति न कोऽपि दोषः[1]। अर्थात् महदादौ वृत्तावपि प्रकृतौ अवृत्तिता दृश्यते। तदेवं प्रकारेण व्यक्ततत्त्वम् अनेकधा अस्ति। किन्तु अव्यक्ततत्त्वस्य सजातीयभेदाऽभावात् तत् केवलमेकमव। मूलप्रकृतिः हि त्रिगुणानां साम्या अवस्था अतः सा एका एव न तु त्रिप्रकारिका। अस्य पदस्य व्याख्यानं इत्थं करोति- महत्तत्वतः स्थूलभूतपर्य्यन्तं सर्वत्र अपि व्यक्ततत्त्वं स्वकारणेषु तथैव आश्रितं भवति यथा वृक्षः वनाश्रितः भवति। यद्यपि कार्यकारणयोः भेदः न भवति, तथापि कार्यभूतं व्यक्तं स्वकारणे कथमाश्रितं भवति? अस्य इदमेवोत्तरं यत् परमार्थतः कार्यकारणयोरभेदेऽपि सन् केवलं व्यवहाराय आश्रयाऽश्रयीभावकल्पना भवितुमेव नार्हति। लोके तथापि तादृशः व्यवहारः भवति स च काल्पनिकः भवति। तथाह- कार्यकारणयोरैक्येऽपि कारकव्यापारात्प्रागेकत्वबुद्धिरासीत्, पश्चाद् भेदबुद्ध्या "इदं कारणं इदं कार्यम्" इति व्यवहारभेदमात्रमादाय आश्रयाश्रयिभाव इति भावः।[2] अव्यक्तमेतस्माद्

[1] सा.वो.टी. पृ. 258

[2] सा.वो.टी.पृ. 259

विपरीतमनाश्रितमस्मादपि अस्ति यतोहि तस्य न किमपि कारणम् अस्ति। येन सह आश्रयाऽश्रयीभावकल्पना सम्भवेत्। नापि तस्मात् सर्वथा भिन्नपुरुषत्वात् तस्य आश्रयाश्रयीभावः भवति। यतोहि आश्रयाऽश्रयीभावे व्यप्यव्यापकभावः अपि अवगन्तुं शक्यते। तिलकनामकतरुसमुदायस्यैव वनत्वेन तिलकवनयोरभेदेऽपि यथाऽऽधाराधेयव्यवहारस्तथा प्रकृतेऽपीत्यर्थः।[1] टीकाकारः लिङ्गपदस्य इत्थं व्याख्यानं करोति– लिङ्गयति ज्ञापयति इति लिङ्गम्। लिङ्गशब्दव्युत्पत्या लिङ्गेति पदम् अनुमापकहेतोः बोधकम् अस्ति। अत्र एव जिज्ञास्यते यत् कस्य लिङ्गम्? अर्थात् महदादिव्यक्ततत्त्वानि कस्य अनुमापकानि हेतुभूतानि? उच्यते– यद् एतैः व्यक्ततत्त्वैः प्रधानं मूलप्रकृतिः अनुमीयते। जयमङ्गलाकारेण तु लिङ्गशब्दस्य व्युत्पत्तिप्रकारः पृथग् एव प्रदर्शितः। व्यक्तप्रकृतिः यस्माद् हेतोः लिङ्गम् इत्युच्यते, यत् सा अन्तकाले लयं गच्छन्ति। प्रलयकाले आकाशादिपञ्चमहाभूतानि स्वस्वतन्त्रमात्रेषु लयं गतानि अहंतत्त्वस्य च महत्तत्वे तस्य च मूलप्रकृतौ लयो भवति। अत्र लयशब्दस्य अर्थः तिरोभावः एव, न तु विनाशः। प्रधानस्य कस्मिन्नपि लयः न भवति। अतः तत् अलिङ्गम् इति उच्यते। "लिङ्गयति लिङ्गयते अनेन वा" इति व्युत्पत्यपेक्षया "लयं गच्छतीति लिङ्गम्" इति व्युत्पत्तिः व्यक्तस्य कृते अत्यधिकरूपेण उपयुक्ता अस्ति। तथा च यद् लयं न गच्छति तद् अव्यक्तम् इत्येवं प्रकारेण सङ्गतिः अपि सङ्गता भवति। एतत्सर्वं गौड़पादाचार्यसम्मतम् अतः गौड़पादभाष्ये द्रष्टव्यम्।

---

[1] सा.वा.टी.पृ. 259

साङ्ख्यसूत्रभाष्यकारेण अपि लिङ्गस्य एषा एव व्युत्पत्तिः प्रदता। पुरुषस्य लिंगं भवदपि प्रधानं न प्रधानस्य लिंगमिति न प्रधानेऽतिप्रसंगः इत्यर्थः।[1] अवयवपदस्य व्याख्याने आचार्यः व्युत्पत्तिमूलकं व्याख्यानं करोति- तदेवम् अवयवेन अर्थाद् अप्राप्तिपूर्विकाप्राप्तिरूपसंयोगेन सह वर्तते इति सावयवम्। तथा च यत् स्वप्रकाराऽन्यभेदैः सह मिश्रितं भवति, यथा-पृथिव्याकाशजलादयः मिश्रिताः सन्ति। बुद्ध्यादिभिः सह तस्या संयोगसम्बन्धाभावात्। तादात्म्यसम्बन्धेन अवस्थानाच्च। तत्र प्रधाने सत्त्वादित्रिगुणानां संयोगः भवति। तस्यामवस्थायां हि गुणेषु सजातीयप्रवाहसत्त्वात् तेषां परस्परसम्बन्धाऽभावः एव भवति। प्रधाने बुद्ध्यादिषु च अवयवाऽवयवीभारूपसम्बन्धः नास्ति, अपि तु समवायसम्बन्धः एव तत्र दृश्यते; न तु संयोगसम्बन्धः। **"तादात्म्यस्थले च नित्यप्राप्तिरेवास्ति न जात्वप्राप्तिपूर्विका प्राप्तिरिति न प्रधानं संयोगस्य प्रतियोगीति भावः"।**[२] व्यक्ततत्त्वानां एकं विशेषणं वर्तते परतन्त्रं अस्य व्याख्याने आचार्य वदति- यत् यद् व्यक्ततत्त्वं यस्माद् उत्पद्यते तत् तस्य साहाय्येन स्वकार्यम् उत्पादयितुं शक्नोति, न तु स्वतन्त्ररूपेण। यदि मूलप्रकृतेः त्रिगुणात्मिकायाः शक्तेः साहाय्यं न स्यात् तर्हि महतः अहंकारतत्त्वस्य, अहंकारतत्त्वतः मनसः पञ्चतन्मात्राणामिन्द्रियाणां च समुत्पत्तिः भवितुं नार्हति। अतः व्यक्तप्रकृतिः एव अत्र परतन्त्ररूपेण उच्यते। तथा हि उक्तं-

[1] सा.वो.टी. पृ.259

[2] सा.वो.टी. पृ.260

**"सर्वं व्यक्तं स्वकार्येषु जनयितव्येषु प्रकृत्यापूरमपेक्षते।**[1] विपरीतम् इत्यनेन व्यक्ताद् विपरीतं अव्यक्तं गृह्यते। तथा च अव्यक्ततत्त्वं कारणरहितम्, नित्यम्, व्यापकम्, निष्क्रियम्, अनाश्रितम्, अलिङ्गम्, निरवयवं (संयोगरहितम्) तथा महदादीनाम् उत्पादने सर्वथा स्वतन्त्रं भवतीति स्वतः सिद्धयति। अत्र इदम् अन्ये सर्वे अव्यक्ततत्त्वस्य विशेषणानि पुरुषे अपि सङ्घटन्ते। परन्तु 'त्रिगुणत्वे सति अहेतुमत्वम्' इत्यनेन रूपेण ग्रहणे सति पुरुषस्य निराकरणं जायते। एकत्वं विहाय अन्येषाम् अहेतुमत्त्वादीनां सर्वेषां धर्माणां पुरुषे वर्तमानत्वेन यद्यपि पुरुषस्यापि अहेतुमत्त्वादयो धर्माः प्राप्नुवन्ति, तथापि **"त्रिगुणत्वे सति" इति विशेषणान्न पुरुषेऽतिप्रसंगः इति।**[2] अतः पुरुषः नास्ति त्रिगुणत्वे सति अहेतुमत्त्वम्। पूर्वकारिकायां प्रकृतेः एव व्यक्ताऽव्यक्तरूपस्य परस्परं वैधर्म्यसाधर्म्ययोः प्रतिपादनम् अभूत्। किन्तु पुरुषेण सह तस्याः मूलप्रकृतेः साधर्म्यवैधर्म्ययोः विवेचनं न जातं अत एव वदति टीकाकारः अत्र व्यक्तमिति प्रधानमिति च लक्ष्यपदे विशेष्ये, "त्रिगुणम्" इत्यादीनि च षट् पदानि लक्षणपरत्वेन विशेषणानि। तथा च व्यक्तं त्रिगुणम्, अविवेकि, विषयः, सामान्यमचेतनं, प्रसवधर्मि चास्ति, अहेतुमत्त्वादिकं व्यक्ताव्यक्ताभ्यां सह पुरुषस्य साधर्म्यं, त्रैगुण्यादिना पुमान्-पुरुषः,

[1] सा.वा.टी. पृ.260

[2] सा.वा.टी. पृ.261।

तद्विपरीतः-ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीत इति। तद् एव अस्यां कारिकायां निरूप्यते-

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं, तद्विपरीतस्तथा च पुमान्।।

व्यक्तऽव्यक्तयोः मध्यं पूर्वोक्तहेतुमत्त्वाहेतुमत्त्वाद्यनेके भेदाः सन्तोऽपि बहुधा समानत्वमपि दृश्यते तद्यथा-त्रिगुणम् अर्थाद् व्यक्ताऽव्यक्तयोः त्रिगुणत्वात् समानत्वम् अस्ति। अर्थात् उभयोः अपि त्रिगुंणविषये समानता विद्यते। सत्त्वरजस्तमसां त्रिगुणरूपत्त्वेन उपस्थितिः जायते। एते त्रयः गुणाः अव्यक्तमूलप्रकृतौ व्यक्तमहदादिप्रकृतावपि समानरूपेण दृश्यन्ते। अतः व्यक्ताव्यक्तयोः परस्परं समानत्वं प्राप्नोति। पुरुषे तु गुणानाम् अभावाद् निर्गुणत्वात् सः एताभ्यां व्यक्ताऽव्यक्ताभ्यां भिन्नः अस्ति। यदि त्रिगुणमित्यस्य त्रयः गुणाः यस्य यस्मिन् वा तत् त्रिगुणम् इत्यर्थः क्रियते तर्हि व्यक्तप्रकृतेषु महदादिषु तु गुणत्रयाणामुपलब्धत्वाद् महदादीनां धर्मरूपेण प्रतीयमानत्वाद् वा तत्र तु त्रिगुणम् इति पदेन व्यक्तप्रकृतिः गृह्यते। किन्तु अव्यक्तप्रकृतेः ग्रहणं कदापि न भविष्यति, यतोहि अव्यक्तायां प्रकृतौ गुणत्रयं न भवतिः अपितु गुणत्रयात्मिका एव सा, अतः अव्यक्ता मूलप्रकृतिः गुणत्रयस्य आधारभूता नास्ति अपितु गुणत्रयस्य साम्यावस्था सा, अतस्तत्र नास्ति आधाराऽधेयभावः सम्बन्धः। अत एव सांख्यसूत्रे अपि एतद् निगद्यते यत्

सत्त्वादिगुणाः मूलप्रकृतेः धर्माः न, अपितु गुणत्रयरूपा एव मूलप्रकृतिः।[1] अत्र कारिकायां त्रिगुणपदेन सुखदुःखमोहानां ग्रहणं कर्त्तव्यम्। सुखादिधर्माणाम् आधाररूपा मूलप्रकृतिः अस्ति इत्यत्र नास्ति काचिद् विप्रतिपत्तिः। यतः सुखदुःखमोहाः क्रमशः सत्त्वरजस्तमोगुणानां धर्माः। धर्माश्च धर्मिषु भवन्ति एव। सांख्यसूत्रे अपि सुखं सत्त्वस्य, दुःखं रजोगुणस्य, मोहश्च तमोगुणस्य धर्मः इति उक्तमस्ति। **सुखधर्मकं सत्त्वम्, दुःखधर्मकं रजः, मोहधर्मकं तमः,**[2] तदेवं सुखादयः वस्तुतः न गुणाः अपितु गुणधर्मा एतेषां कृते गुणशब्दप्रयोगः धर्मधर्मिणोः अभेदसम्बन्धमाश्रित्य दृश्यते इति अवगन्तव्यं सुधीभिः।

यदि अत्र कारिकायां गुणपदेन सुखदुःखमोहरूपाणां ग्रहणं भविष्यति इत्येवं स्वीक्रियते, तर्हि पञ्चतन्मात्रेषु न तल्लक्षणं सङ्गच्छते? यतो हि विष्णुपुराणे एतेषां तन्मात्राणां शान्तघोरमूढस्वभावस्य निषेधः दृश्यते। शान्तघोरमूढाश्च क्रमशः सत्त्वरजस्तमोगुणानां लक्षणभूताः एव।

तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता।
न शान्ता नापि घोरास्ते न मूढाश्च विशेषिणः।।

अतएव वदति आचार्यः- **“गुणशब्देन सुखादीनां ग्रहणे तु न प्रधानेऽव्याप्तिः, तस्यापि सत्त्वादिधर्मभूतसुखाद्याधारत्वसंभवादित्याशयः”।**[3]

---

1 सां.सू. 6-30

2 इति सां.सू.।

3 सा.वां.टी.पृ. 262

सांख्यशास्त्रे **"सुखधर्मकं सत्त्वम्, दुःखधर्मकं रजः, मोहधर्मकं तमः"** इत्येवं सुखादिधर्मकस्य सत्त्वादितत्त्वत्रयस्यैव पुरुषोपकरणत्वात्, पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च, गुणपदवाच्यत्वं न सुखादिधर्मजातस्य, तथापि धर्मधर्मिणोरभेदमादाय सुखादयो धर्मा एवात्र गुणपदेनाभिप्रेता न सत्त्वादयो धर्मिणः, तथा सति प्रधानेऽव्याप्तिप्रसंगादिति निष्कर्षः।[1] अत्रोच्यते यत् पञ्चतन्मात्राणामुत्पत्तिः अहंकारतत्त्वतः भवति, अहंकारतत्त्वं च सुखदुःखमोहात्मकं नास्ति इति कथमपि न निषिद्ध्यति। कार्यं च सर्वदा कारणगुणात्मकमेव भवति। तथा कार्यकारणयोः अभेदसम्बन्धः भवति एव। अतः पञ्चतन्मात्रेषु अपि सुखदुःखमोहानामुपलब्धेः निराकरणं कथमपि कर्त्तुं न शक्यते। तथा च सुखदुःखमोहात्मकपञ्चमहाभूतानां कारणरूपाणि पञ्चतन्मात्राणि सन्ति। अतः परम्परया पञ्चतन्मात्राणि अपि सुखादीनामाधाररूपाणि स्वयमेव भवति इत्यत्र नास्ति विप्रतिपत्तिः। **"अस्मदाद्युपभोगार्थस्पष्टसुखादिधर्मकशब्दाद्याधारभूतानि यानि स्थूलभूतानि तेभ्यो विलक्षणानि अस्मदुपभोगाऽयोग्याऽस्पष्टसुखादिमच्छब्दाद्याधारभूतानि सूक्ष्मभूतानि पञ्चतन्मात्राणि"**[२] इत्यर्थे तात्पर्यात्। अन्यथा पञ्चतन्मात्राणां कार्यरूपेषु पञ्चमहाभूतेषु सुखाद्यनुभूतिः आकस्मिका सर्वथा नवीना एव भविष्यति। सा च

[1] सा.वां.टी.पृ. 262

[2] सा.वां.टी. पृ- 262

सांख्यशास्त्रस्य सत्कार्यवादसिद्धान्तात् सर्वथा विपरीता एव अस्ति। अतः न केवलं 'त्रयो गुणाः सन्ति अस्मिन्' इति बहुव्रीहिव्युत्पत्तिः, अपितु 'त्रयाणां गुणानां समाहारः' इत्यपि व्युत्पत्तिः 'त्रिगुणम्' इति पदस्य भवति, समाहारे एकवद्भावश्च भवति एव, नपुंसकलिङ्गश्च।[1] तदेवं बहुव्रीहिव्युत्पत्या व्यक्तप्रकृतिः समाहारद्वन्द्वव्युत्पत्या च अव्यक्तमूला प्रकृतिः त्रिगुणमिति पदेन संगृहीता भवति। न तु पुरुषः। पुरुषे अपि सुखदुःखाद्यनुभूतिः इति ज्ञानं अत एव भ्रान्तियुक्तम्। अनेन नैयायिकसिद्धान्तस्य अपि निराकरणं जायते। यतोहि नैयायिकाः इच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञानादीष्टगुणानात्मनः विशेषधर्मत्वेन (गुणत्वेन) स्वीकुर्वन्ति। इच्छादयः गुणा आत्मनः धर्माः (गुणाः) इति हि तेषां सिद्धान्तः। न्यायसूत्रकाराणां मतमत्र प्रमाणत्वेन उपस्थापितम् तथाहि- **"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिंगम्"**[2] तदेवं नैयायिकसिद्धान्तस्य अपि निराकरणं जातम् एव। गुणत्रयस्य सिद्धान्तः सांख्यदर्शनस्य स्वीय एव विद्यते। संख्यादीनामात्मातिरिक्तव्यक्ताव्यक्तधर्मत्वकथनेन, यत् पराभिमतम्= तार्किकसम्मतम्, सुखादीनाम् आत्मगुणत्वम्, तत् पराकृतम्=निराकृतम्, खण्डितमिति यावत्। "असंगोह्ययं पुरुषः" "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिविरोधान्न सुखादीनामात्मधर्मत्वमिति भावः। अतः एव

---

[1] पाणि.सू. - 2.4.17

[2] न्याय.सू. (1-1-10)

अन्यदर्शनसिद्धान्तेषु अपि अस्य गुणत्रयस्य चर्चा विद्यते। गुणत्रयस्य सत्ता यद्यपि कल्पनाऽधारिता एव तथापि अत्यन्तप्रचलिता इयं चर्चा विद्यते। गुणत्रयस्य अस्तित्वस्य वास्तविकतायाः संसिद्धिः विज्ञानेन न जायते। विवेचनशीलतायाः अभावः यत्र भवति स 'अविवेकी' इत्युच्यते। अथवा विवेकपदाद् अत्र स्वकारणात् कार्यच्च पृथग्भवनम् एव गृह्यते। प्रधाना मूलप्रकृतिः हि महदादिस्वकार्येभ्यः पृथग् भवितुं न शक्नोति। तथा महदादयः अपि स्वकारणात् मूलप्रकृतेः पृथग् भवितुं न शक्नुवन्ति। यतोहि कार्यकारणयोः अभेदः इति सांख्यसिद्धान्तोऽस्ति। अत एते सर्वे अपि पदार्थाः अविवेकिनः सन्ति। अथवा परस्परं सम्मेलनेन कार्यकरणमेवाविवेकित्वम्। सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रेण तथा व्याख्यानात्। प्रकृतेः किमपि तत्त्वं व्यक्तं वा अव्यक्तं तत् स्वीकर्त्तुं स्वयम् एव सामर्थ्यं नादधाति। कस्मादपि एकस्मादेव तत्त्वतः अन्यस्य (कार्यस्य) उत्पत्तिः न सम्भाव्यते, किन्तु सम्मेलनादेव किमपि कार्यमुत्पादयितुं समर्थाः प्रभवन्ति। अतः पृथग्रूपेण उत स्वतन्त्ररूपेण कार्यं कर्त्तुं सामर्थ्याऽभावेन व्यक्ताऽव्यक्तद्वयम् अपि 'अविवेकि' इति कथ्यते। अस्मिन् प्रकरणे गौडपादाचार्यमतमपि द्रष्टव्यम्। तेन उक्तं यद् यः कश्चिदपि व्यक्तिः गवाऽश्वयोः मध्ये अयमाश्वः, अयं च गौः इत्येवं प्रकारेण यो भेदं कर्त्तुं न शक्नोति सः अविवेकी इत्युच्यते। तथैव 'इदं व्यक्ताऽव्यक्तद्वयम्, इमे च गुणाः' एतेषां स्वरूपाणां यथार्थतः विवेकं कर्त्तुम् असामर्थ्यम् इति व्यक्ताऽव्यक्तयोः अविवेकिता।

विज्ञानवादिनः बौद्धाः इदम् आमनन्ति यद् विज्ञानमेव हर्षविषादमोहेषु शब्दादिरूपेषु च परिणतं भवति। बाह्यविषयाः वस्तुतः स्वाऽस्तित्वं नादधति। एतत्खण्डनाय एव कारिकायां 'व्यक्ताव्यक्तम्' इत्यनयोः कृते 'विषयः' इत्युक्तम्। अविवेकिपदस्य व्याख्याने आचार्य शिवनारायणशास्त्रिणा विज्ञानवादिनां योगाचारबौद्धानां मतमुपस्थापितम् तथा हि- योगाचारानुसारिणो विज्ञानवादिनो बौद्धा हर्षविषादमोहधर्मवान् शब्दादिराकारो यस्य तद् हर्षविषादमोहशब्दाद्याकारम्। तत्र हर्षः=सुखम्, विषाद्=दुःखम्, मोहः प्रसिद्धः। विज्ञानमेव सुखादिधर्मकशब्दादिप्रपञ्चाकारधारि न पुनः इतः=विज्ञानात्, अन्यः=भिन्नः बाह्यः शब्दादिप्रपञ्चः, तर्द्धर्मा=सुखादिधर्मवानित्यर्थः। तान् प्रतीतिः। "कुम्भस्तम्भाद्याकारम् आन्तरं विज्ञानमेव वस्तु सत्, न ततोऽन्यद् बाह्यं वस्तुजातं किमपि सत्" इति वदतो बौद्धान् प्रतीत्यर्थः। वहिरिति। भिन्नमित्यर्थः ग्राह्यत्वेन ग्राहकाद् विज्ञानाद् भिन्नः कुम्भादिरर्थे इति सरलार्थः। ग्राह्यग्राहकयोरेकाकारता न वक्तुं शक्या, कुम्भादीनां ग्राह्यत्वेन विज्ञानस्य च ग्राहकत्वेन प्रतीत्या तयोर्भेदस्य स्फुटं प्रतीयमानत्वात्।[1] ग्राह्यः भवति, अत एव विषयः स्वग्राहकविज्ञानाद् (बुद्धेः) सर्वथा भिन्नः तथा तदनन्तरभूतं च विद्यते। एकमेव स्त्रीरूपवस्तु प्रति अनुरक्तात्मकं द्वेष्यात्मकमेवम् विमूढात्मकम्, सुखदुःखमोहात्मकं वा जनानां ज्ञानं विभिन्नप्रकारेण

[1] सरवोधिनीटीका पृ.264

द्रष्टुं शक्यते। यदि वस्तु विज्ञानात्मकं भवेत् तर्हि विज्ञानस्य सामान्यरूपत्वात् प्रत्येकमपि वस्तु सर्वेषां कृते एकेनैव रूपेण प्रतीतिविषयं स्याद्, अतः विषयस्वरूपेऽपि वस्तुनः स्वतन्त्रसत्ता अपि अवश्यमेव मन्तव्या। व्यक्ताऽव्यक्तोभयरूपप्रकृतिः एव सामान्यमस्ति। अस्यायमर्थः यत् सामान्यरूपेण यत् तत्त्वमनेकपुरुषैः गृह्यते तदेव सामान्यशब्देन निगद्यते। यदि वस्तूनि विज्ञानाकारकाणि स्युः तर्हि विज्ञानस्य वृत्तिरूपत्वात् तत् साधारणम् अर्थात् सामान्यं नैव भवितुं शक्नोति, अपितु असाधारणमेव भविष्यति। एकस्य पुरुषस्य विज्ञानमपरस्य स्याद् इति सम्भवः नास्ति। अतः निःसन्देहेन सः विषयविशेष एव अस्ति। अर्थस्य विज्ञानात्मकत्वेऽनुपपद्यमानं 'सामान्यम्' इति विशेषणान्तरमवतारयति। **"एकस्यैवार्थस्य अनेकपुरुषग्राह्यत्वेन भवति सर्वपुरुषसाधारणतया, सा विज्ञानवादे नोपपद्येतेति भावः"**[1]।

चेतनं नाम आत्मनः प्रकाशनसामर्थ्यम्। एतादृशं सामर्थ्यं यस्मिन् अस्ति तदेव चेतनम् इति उच्यते। व्यक्ताऽव्यक्तोभयात्मिका प्रकृतिः हि आत्मानं प्रकाशयितुं सामर्थ्यं आदधति अत एव तदचेतनमित्युच्यते। बौद्धास्तु बुद्धिमेव चेतनमिति मन्यन्ते। किन्तु बुद्धितत्त्वस्य अचेतनप्रकृतेः कार्यात्मकत्त्वाद् बुद्धिः अपि अचेतना एव, यतोहि कारणगुणाः कार्यगुणान्नारभन्ते इति न्यायेन तादृशरूपेण स्वीकारात्। विज्ञानमेव स्वप्नमिव बाह्यार्थरूपेण प्रकाशितं भवति अतः तच्चेतनं कथं नास्ति? इति बौद्धानाम्

[1] सारबोधिनीटीका पृ.-264

आक्षेपः। अस्य निराकरणं तु व्यक्ताव्यक्तोभयरूपप्रकृतिः विषयात्मिका अस्ति इति निश्चयेन एव सिद्ध्यति। **"यथा चैत्रस्य विज्ञानं परेण मैत्रेण न गृह्यते, विज्ञानाद्भिन्नोऽर्थोऽप्यन्येन नैव गृह्येतेत्यर्थः। यदि हि घटाद्यर्थानां विज्ञानाकारत्वं स्यात्, तदा तेषामनेकैर्गृहीतत्वं न स्यादित्यत्र फलितम्।**[1]

टीकाकारः विज्ञानवादस्य विशदं व्याख्यानं करोति। 1. विज्ञानाकारत्वेनार्थस्यासाधारणत्वे। 2.विज्ञानाभावकाले न पदार्थानां प्रतीतिः पदार्थाभावकालेऽपि स्वप्नादौ विज्ञानं वर्तते इति विज्ञानमेवैकं तत्त्वं नान्यत् तदतिरिक्तं किञ्चिदस्ति, तदतिरिक्तं यत् बाह्यपदार्थजातं प्रतीयते तदलीकमेव सर्वं स्वप्नादिविषयवत्। किमुक्तम्? बाह्याः किल जडपदार्थाः स्वप्रकाशताविरहात् स्वप्रकाशताविरहात् स्वप्रकाशार्थं विज्ञानमपेक्षन्ते, इति विज्ञानकाल एव तेषां प्रतीतिर्भवति न तु तदभावकाले, तथा च मृत्तिकासत्त्वकाले घटसद्भावात् तदसत्त्वकाले च तदभावात् मृत्तिकातो यथा न तत्त्वान्तरं घटस्तथैव विज्ञानसत्त्वासत्त्वाधीनसत्ताकत्वाद् बाह्यपदार्थानामपि न विज्ञानतो तत्त्वान्तरत्वम्। किञ्च स्वप्ने यथा बाह्यपदार्थानामभावेऽपि विज्ञानमेव नानापदार्थाकारेण भाति जागरितेऽपि तथा विज्ञानमेव तथाकारेण प्रतीयते न जातु बाह्यविषया इत्येव युक्तं

---

[1] सारबोधिनीटीका पृ.-264

मन्तुमिति[1] "। विज्ञानवादस्य स्वरूपं प्रदर्श्य तस्य निराकरणम् इत्थं कृतम्- घटपटादिज्ञानस्याकारो बुद्धावेव नान्यत्रेति हि सौगतमतम्, तत्र वदामः- यान् पदार्थान् प्रत्यक्षत इन्द्रियाणि विषयीकुर्वन्ति ते न सन्तीति कथनं केवलं तस्याऽविकृतबुद्धित्वसूचकमेव, प्रत्यक्षसिद्धस्यार्थस्याऽपलपितुमशक्यत्वात्, तस्मात् "सन्ति बाह्याः पदार्था यान् विज्ञानं विषयीकरोति, ते च विज्ञानतो भिन्ना" इत्येव स्वीकर्तुमुचितम्। सर्वः खलु प्रत्येता घटमहं प्रत्येमीति घटपटादीन् बाह्यार्थेन घटपटादिना विज्ञानं सर्वत्र विशेष्यते। विशेषणविशेष्यभावश्च भेदनिबन्धः प्रवर्तते नामभेदनिबन्धन इति प्रत्यक्षम्। न चैवं प्रत्यक्षे भेदावगमे भवति शक्योपपादः कदाचिद् बाह्यार्थाभावः। तस्माद् विज्ञानतो व्यतिरेकेण नास्ति कश्चिद् बाह्योऽर्थ इत्येतदनुपपन्नम्। प्रमाणेनोपलब्धेः। विज्ञानवादेऽपि पूर्वपूर्वविज्ञानस्यानुभवं नोत्तरं विज्ञानं स्मार्तुं प्रभवति, भिन्नाधारत्वात्। यदि स्मरणार्थं वासनायाः संक्रम इति विभाव्यते, तदेदं पृच्छामः- किं सा वासना पूर्वविज्ञानात् उत्तरविज्ञाने गमनं करोति, आहोस्वित् उत्तरविज्ञाने सजातीया द्वितीया काचित् वासना प्रादुर्भवतीति। तत्राद्यः पक्षस्तु न संभवति, न हि वासनायाः पादौ वर्तेते, येन सा एकस्मात् स्थानात् द्वितीयस्मिन् स्थाने गन्तुं प्रभवेत्। उत्तरविज्ञाने पूर्वविज्ञानीयवासनाया उत्पत्तिरिति द्वितीयपक्षोऽपि न संभवति, विज्ञानं हि भवन्मते क्षणिकमिति

---

[1] सर्वाथसिद्धिटीका पृ.265

उत्तरविज्ञानं प्रादुर्भूय विनष्टमित्याधाराभावात् वासना उत्पद्येत, नहि विनाऽऽधारं कुत्रापि किंचिदप्युत्पद्यमानं। अतो वासनाया अभावात् उत्तरविज्ञानस्मरणं सर्वथाऽसंभवि। तस्मात् तत् स्मरणार्थं विज्ञानातिरिक्त आत्मपदार्थोऽवश्यामभ्युपेयः। न च स्वप्नमायामरीच्युदकरज्जुसर्पगन्धर्वनगरादिषु (शून्य नगरस्य प्रतीतिः) यथा विषयो नास्ति, किं तु ज्ञानमेव ग्राह्यग्राहकरूपेण प्रतीयते, तथा जागरितेऽपि ज्ञानमेव ग्राह्यग्राहकरूपेण भासते, न जातु ज्ञानात् पृथग् ज्ञानस्य कश्चिद् विषयोऽस्तीति शङ्क्यम्, स्वप्नादिस्थाने यो विषयो भासते तस्योत्तरकाले बाध इत्येवमत्र दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यात्। तस्मात् विज्ञानात् पृथक् विज्ञानस्य विषयः पदार्थोऽस्तीति सुस्पष्टं सिध्यति। तथा चानुमानम्– "कुम्भादिकं विज्ञानाद् भिन्नम्, ग्राह्यत्वात्, प्रदीपवत् तत्प्रकाश्यपटादिवत्" इति।[1]

वस्तुतस्तु मनोबुद्ध्यादिषु या चेतनता प्रतीयते सा पुरुषसंसर्गाद् एव, न तु स्वतः। सांख्यदर्शनम् एतदेवाभीप्सति। विज्ञानं तु विशुद्धचैतन्यात् प्रकाशं प्रगृह्य एव आत्मानं प्रकाशयति। तथा वाह्यपदार्थानपि प्रकाशयति। प्रसवधर्मि–यस्मिन् प्रसवात्मिका क्रिया आहोस्वित् प्रसवरूपः धर्मः अवतिष्ठते सः एव प्रसवधर्मी भवति। अत्र प्रसवः अन्याऽविर्भावरूपः परिणामः स चासौ धर्मश्च इति प्रसवधर्मः सः अस्य अस्ति इति 'प्रसवधर्मी' इति विग्रहाऽनुसारमत्र इनिप्रत्ययः नित्ययोगार्थे एव

[1] सरवोधिनीटीका पृ.267

विज्ञेयः अत्र नित्ययोगे एव न तु अन्यस्मिन्नर्थे। नित्ययोगे इनिप्रत्ययेन व्यक्ताव्यकतोभयविधप्रकृत्या सह प्रसवधर्मस्य नित्यसम्बन्धेन अवस्थानमेव प्रयोजनम्। अन्यथा तु विशेषणमात्रनिर्देशाय 'प्रसवः धर्मो यस्य' इति बहुब्रीहिणा समासात्मकविग्रहेण अपि 'प्रसवधर्मि' पदं साधयितुं शक्यते। अतः प्रसवधर्मीतिपदम् अस्य तथ्यस्य अभिधायकमस्ति यद् व्यक्ताऽव्यक्तोभयरूपप्रकृतौ निरन्तरम् (नित्यम्) अहर्निशं प्रसवः जायते। प्रसवधर्मीत्यस्य परिणामीत्यर्थः अपि जायते। प्रकृतौ बुद्ध्यादिभिन्नतत्त्वेषु विरूपः परिणामः तथा सत्त्वरजस्तमोगुणेषु सरूपपरिणामाः जायन्ते। प्रकृतौ बुद्ध्यादिभिन्नतत्त्वेषु विरूपः परिणामः तथा सत्त्वरजस्तमोगुणेषु सरूपपरिणामाः जायन्ते। न केवलम् एतदेव अपितु घटादयः पदार्थाः अपि सरूपविरूपपरिणमयुक्ताः भवन्ति। महाप्रलयसमये विरूपपरिणामाः न भवन्ति, अपितु त्रयाणां गुणानां साम्यावस्या भवति, सा एव अवस्था सरूपपरिणामः कथ्यते। **"प्रसवः=अन्याविर्भावहेतुत्वरूपः परिणामः, स चासौ धर्मश्चेति प्रसवधर्मः सोऽस्यास्तीति प्रसवधर्मीति विग्रहः"।**[1] तदेवम्प्रकृतिः कदापि प्रसवाद् अर्थात् परिणामाद् विरता न भवति। पुरुषश्च प्रसवधर्मात् परिणामाद् वा सदा रहितः भवति, अत एव उक्तं कारिकायां 'तद्विपरीतस्तथा च पुमान्'[2] इति। अत्र एवं वक्तुं शक्यते यद् अहेतुमत्त्वं (यस्य कस्यचिदपि हेतुः न स्यात्) तथा नित्यत्वं (यद् नित्यमस्ति)

---

[1] सरवांधिनीटीका पृ.२६९

[2] सां.का ।।वीं का.

एतौ उभौ धर्मौ पुरुषस्य मूलप्रकृतेश्च स्तः। यतोहि यथा प्रकृतेः किमपि कारणं नास्ति, तथा पुरुषस्य किमपि कारणं नास्ति। एतौ द्वौ अपि नित्यौ एव। तथा च अनेकत्वं व्यक्तप्रकृतौ पुरुषे च समानम् एव, अतः व्यक्तात् प्रधानाद् वा पुरुषः कथं भिन्नः? इति जिज्ञासायां उच्यते- 'तथा च पुमान्' इत्यत्र चकारस्य अर्थः 'अपि' अस्ति। "आदिना व्यापकत्वनिष्क्रियत्वैकत्वानाश्रितत्वलिंगत्वनिरवयवत्व स्वतन्त्रत्वानां समुच्चयः"। एतस्माद् अयमर्थः निस्सरति यद् यद्यपि पुरुषः अनेकांशेषु प्रकृतेः सर्वथा विपरीतः अस्ति, तथापि केषुचिदंशेषु अपि समानः अस्ति। मूलप्रकृत्या सह समानतायाः आधायकानि तत्त्वानि व्यापकत्वम्, निष्क्रियत्वम्, ऐकत्वम्, अनाश्रितत्त्वम्, अलिङ्गत्वम् अवयवराहित्यम् स्वतन्त्रत्वं च इत्येवम्प्रकारेण बहूनि सन्ति। वस्तुतस्तु व्यक्ताऽव्यक्ताभ्यां विपरीतं निर्गुणत्वादिकम् अपि पुरुषे कल्पितम् एव अस्ति।

### तत्त्वप्रतिपादने वाचस्पतिमिश्रस्याभिमतम्

अत्र साङ्ख्यतत्त्वकौमुदीकारेण मूलप्रकृतेः स्वरूपप्रतिपादने स्वाशयं इत्थं प्रकाशितं-"तथापि न पृथिव्यादिभ्यस्तत्त्वान्तरं, तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाभिप्रेतमिति न दोषः"[1] अस्य व्याख्याने किं नाम तत्त्वान्तरत्वम् इत्यस्य आशयः तद्-तद् शास्त्रानुसारेण च प्रकाशितः वर्तते। अत्र ग्रन्थकर्त्ता तत्त्वान्तरत्वमिति लक्षणिकः प्रयोगः कृतः, तत्र स्वयमेव लक्षणं कृतं "सूत्राद्याभिहितलक्षणस्य

---

[1] सां.त.कौ. ४७-४८

प्रधानमात्रपरत्वेनानुगतत्वाभावात्सर्वानुगतं तत्त्वान्तरोपादानत्वरूपमेव लक्षणमाश्रयणीयं, मृत्कनकादौ च प्रकृतित्वव्यवहारो लाक्षणिको गौणे वा"। तत्र तत्त्वान्तरं किम् इत्यस्य योगवार्तिकोक्तं व्याख्यानमाश्रयणमिति स्वयमेव प्रतिपादितं, तद् यथा 'तत्त्वं च द्रव्यत्वं तत्त्वान्तरत्वं च स्ववृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं, पञ्चविंशतितत्त्वेषु पञ्चविंशतिजात्यनङ्गीकारे च तत्त्वान्तरत्वं स्ववृत्तिद्रव्यविभाजकोपाधिमत्त्वम्' अत्र लक्षणोक्तं स्वपदं तत्त्ववाचकम् यदा चोक्तं 'यथाऽहङ्कारादेः स्वोपादानमहदाद्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्याहङ्कारत्वादिजातिमत्वेन महदादिभ्यः तत्त्वान्तरत्वं न तथा गोघटादीनां पृथिव्यादिभ्यस्तत्त्वादिजातिमत्त्वेनोपादानावृत्तिद्रव्यत्व साक्षाद्व्याप्यजातिमत्त्वाभावादित्यत्र फलितम्"। तत्रैव ग्रन्थकर्ता सर्वेषां गोघटादीनां स्थूलत्वम् इन्द्रियग्राह्यत्वं च पृथिव्यादिभिः समानत्वाद् गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरं प्रतिपादितम्। सांख्यतत्त्वकौमुदीकारेण "व्यक्तवृत्तमव्यक्तेऽतिनिर्दिशति" इत्यनेन व्यक्तानां येऽपि धर्माः तेषामव्यक्तौ अतिदेशः कृतः, अर्थात् व्यक्ताव्यक्तयोः साधर्म्यमुक्तम् अनया एव कारिकया श्रीमदीश्वरकृष्णेन व्यक्ताव्यक्तयोः साधर्म्यं उक्त्वा 'तद्विपरीतः' इत्यंशेन पुरुषस्य व्यक्ताव्यक्ताभ्यां वैधर्म्यं प्रतिपादितम्। तमेव स्पष्टयति "तद्विपरीतः व्यक्ताऽव्यक्तविलक्षणः अत्रिगुणः विवेकी, अविषयः साधारणः चेतन अप्रसवधर्मी पुरुष इत्यर्थः"। कौमुदीकारेण उक्तं तत्र "व्यक्ताव्यक्तज्ञ विज्ञानात्"[1] इत्यस्य

[1] सां.का. 2 का.

व्याख्याने दीर्घकालनैरन्तर्यादादरसेवितादू भावनामयादू विज्ञानादिति। आचार्यवाचस्पतिमिश्रेण पूर्वपक्षीनाम् आशयमुपस्थाप्य तन्निराकृतं सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वादित्यनेन शास्त्रेण।

**टीकाकर्तुः शिवनारायणशास्त्रिमतोपस्थानं तत्समीक्षणं च।**

गुणत्रयानां साम्यावस्था प्रकृतिः के त्रयो गुणाः किं च तेषां स्वरूपं इत्यत्र वदति कारिकाकारः नह्यत्र पुरुषस्य व्यक्ताव्यक्तगतयावद्धर्मेण त्रिगुणमित्युक्तं, तत्र के ते त्रयो गुणाः किञ्च तल्लक्षणमित्यत आह–

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**

**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥**[1]

पुमान् व्यक्ताव्यक्तविपरीतः, तथा च=तद्वदपि व्यक्ताव्यक्तसमानधर्मोऽपीत्यक्षरार्थः। तथा चेत्यस्य तत्सदृशोऽपीत्यर्थ इति तु सारम्। एवं च–अहेतुमत्त्वानेकत्वादिसाधर्म्याविरोधिनोऽपि त्रैगुण्यविरोधितदभावस्य सत्त्वेन तद्विपरीततत्त्वमपि संभवतीत्यभिप्रायः। वैपरीत्यं येन "तद्विपरीतः" इत्युक्तिरसंगता भवेत्, किंतु "त्रिगुणमविवेकि" इति कारिकोक्तत्रैगुण्यादिधर्मेण वैपरीत्यं विवक्षितं तच्च पुरुषस्यास्तीति न "तद्विपरीतः" इत्युक्तिरसंगतेति भावः। व्यक्तमपि सिद्धम्। गुणत्रयस्य निरूपणानन्तरं तेषां पृथक् स्वभावस्य वर्णनं

[1] सांख्यतत्त्वकौमुदी का. 12 पृ. 271

पश्चाद् तन्निरासः गुणत्रयाविवेकित्वसाधनान्वयव्यतिरेकीणां विवेचनं कृतम्। टीकाकारेण कौमुदीकारोक्तस्याशयः प्रस्तूयते। **"सर्वेषां भावानां त्रैगुण्यं प्रसाध्य सम्प्रति तेन हेतुना प्रधानादीनामविवेकित्वादिधर्मवत्त्वं साधयितुं"**[1]।

त्रैगुण्यात् हेतोः, प्रधानादीनाम् इति उक्तं कौमुदीकारेण।

अविवेकि इति विशेषणपदस्य तात्पर्यं इत्थं स्फोरयति आचार्यः- "अविवेकि" इति पदं व्याचष्टे- अविवेकित्वमिति भावः। द्विशब्देन द्वित्वविशिष्टयोर्बोधनेन, एकशब्देन च एकत्वविशिष्टैकस्य बोधनेन तयोर्द्वन्द्वे द्वयैकशब्दस्य बहुसंख्याकत्वेन बहुवचनापत्तेरवश्यं भावात्, इत्यर्थः। तथा च सूत्रे द्विवचननिर्देश एव द्वित्वैकत्वपरत्वे लिंगमिति भावः। व्यक्तम्=घटादिकं स्थूलं वस्तु, इति=इत्येवम्, स्फुटत्वात्=अन्वयव्याप्तेः स्पष्टत्वात्, अभावज्ञानानपेक्षितत्वेन झटित्युपस्थितेरिति यावत्। टीकाकारः अत्र जिज्ञासा उपस्थापिता कस्मात् हेतुना अविवेकिस्वपि अनुमितिः भवति, **"ननु त्रैगुण्यस्याधुनाप्यसिद्धेः कुतस्तरां तदन्वयेन अविवेकित्वादिसिद्धिरित्याशंक्य व्यतिरेकव्याप्त्यैव व्यक्ताव्यक्तयोः सिद्धि"**[2]। अत्र समाधानं करोति **"स्वरूपं तु 'सुखदुःखमोहधर्मका महदादयः सुखदुःखमोहधर्मककारणजन्याः, कार्यत्वे सति सुखदुःखमोहात्मकत्वात्, कान्तादिवत्' इत्यनुपदमुक्तमेव। तादृशं कारणं च प्रधानमेवेत्यव्यक्तं**

---

[1] सारबोधिनीटीका पृ.-291।

[2] सारबोधिनीटीका पृ.-292

सिध्यति"[१]। इदमत्रोपदिष्टं भवति- कार्ये ते एव गुणाः प्रादुर्भवन्ति ये तत्कारणे समवयन्ति। येषां च कारणे न समवायः, न च तत्पूर्वकाः कार्यगुणाः कथंचिदाविर्भवन्ति। नवा कदाचिदिदमित्थं विपर्येति- कारणे वर्तमानाः गुणाः कार्ये न प्रादुःष्युः, ततो विलक्षणा वा तत्र प्रादुर्भवेयुः। अतः कार्यं दृष्ट्वा निःशङ्कमनुमातुं शक्यते- येऽमी कार्यगुणा अनुभूयन्ते, नूनं तत्सजातीयास्तत्कारणे विद्यन्ते, ये चात्र कार्ये नोपलभ्यन्ते, न च ते तत्रापि वर्तन्ते इति।

**अव्यक्तस्वरूपम्**

**अत्र टीकाकारेण अव्यक्तस्य सिद्धिः निरूपणप्रसङ्गे नैयायिकानां मतोपस्थापनेन प्रतिपादनं विहितं वर्तते।** व्यक्तेभ्यः परमाणुभ्यो जगदुत्पस्यत इत्यव्यक्ते प्रमाणाभाव इति शङ्कया। तावत् प्राणिनां भोगभूतये परमेश्वरस्य सिसृक्षा जायते, आत्मगतानि अथ च लब्धवृत्तीनि अदृष्टानि तत्संयोगेभ्य इति फलितार्थः। लब्धवृत्तिकाऽदृष्टविशिष्टाऽऽत्मसंयोगाद् दोधूयमानेषु पवनपरमाणुषु प्रथमतः कर्मोत्पत्तिः, ततो द्वयोः पवनपरमाण्वोः संयोगः, ततो द्वयणुकोत्पत्तिः, ततस्त्रिषु द्वयणुकेषु कर्मोत्पत्तिः, ततस्तेषां संयोगः, ततो द्वयणुकोत्पत्तिः, ततस्त्रिषु व्यणुकेषु कर्मोत्पत्तिः, ततस्तेषां संयोगः, ततस्त्र्यणुकोत्पत्तिः, एवं चतुरणुकाद्युत्पत्तिक्रमेण महावायुरुत्पद्य विहायसि दोधूयमानस्तिष्ठति। ततस्तस्मिन् वायौ जलपरमाणुभ्यो द्वयणुकादिक्रमेण महाजलराशिरुत्पन्नः पोप्लूयमानस्तिष्ठति। ततस्तस्मिन् महोदधौ

[1]सारबोधिनीटीका पृ.-293

पृथिवीपरमाणुतो द्व्यणुकादिक्रमेण महापृथिवी- उत्पद्य संहताँऽवतिष्ठते। ततस्तस्मिन्नेव जले तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्षु महाभूतेषु परमेश्वरस्याभिर्ध्यानमात्रात् तैजसोभ्योऽणुभ्यः पार्थिवादिपरमाणुसहितेभ्यो महदण्डमारभ्यते। तस्मिंश्चतुर्वदनकमलं सकललोकपितामहं ब्रह्माणं सकलभुवनसहितम् उत्पाद्य प्रजासर्गे निर्युङ्क्ते। स च महेश्वरेण निर्युङ्क्तो ब्रह्मा अतिशयज्ञानवैराग्यैश्वर्यसंपन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानवैराग्यभांगायुषः सुतान् प्रजापतीन् मानसान् मनून्–देवर्षिपितृगणान्–मुखबाहूरुपादतश्चतुरो वर्णान्–अन्यानि चोच्चावचानि भूतानि सृष्ट्वा, आशयानुरूपैर्धर्मज्ञानवैराग्यैश्चर्यैः संयोजयति। इति हि कणादादीनां प्रक्रिया। अस्यां प्रक्रियायां परमाणुतः स्थूल जगतः उत्पत्तिः संभवति। अतः आचार्य न्यायभाष्यकाराणां मतमपि यथा प्रमाणं प्रस्तौति। तथाहि- सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते- यथा तन्तुभ्यः पटस्य तन्तूनां चांशेभ्यः, एवमपकर्षक्रमेण अपकर्षकाष्ठामापन्नं कारणद्रव्यम् अतिसूक्ष्मम् अनवयवम् टीकाकारः अत्र वात्स्यायनभाष्यकारस्यमतमपि प्रदर्शितम् अवतिष्ठते, तच्च परमाणुरूपम्। तथा हि उक्तं-

"जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः।

**तस्य षष्ठतमो भागः परमाणुः स उच्यते।।"**[1]

"बुद्ध्यादिकं शक्तिरूपसूक्ष्मावस्थापूर्वकं भवितुमर्हति, कार्यत्वात्, घटवत्" इति। टीकाकारः अत्र तत्परिहारः, इत्थं करोति अव्यक्तकारणसाधनानि, तत्र कारणकार्ययोर्विभागादविभागाभ्यां व्यक्तसिद्धिः भवति। अर्थात् प्रवृत्तं भवति, तथा समुदयात्=परस्परसंमिश्रणात्, इति प्रवर्तते, तथा च प्रधानस्य द्विधा प्रवृत्तिर्भवति- सृष्टिकालीना प्रलयकालीना च। तत्र सृष्टिकाले प्रकृतेस्त्र्योगुणा मिलित्वा प्रवर्तन्ते, ते च तस्मिन् समये केचन गुणभूताः केचिञ्च प्रधानभूता भवन्ति, अन्तरेण गौणमुख्यभावम् अनेकपदार्थानां मिलित्वा प्रवृत्तेरसंभवात्, प्रलयकाले च प्रधानस्य त्रयोगुणाः परस्परं पृथग्भूत्वा स्वातन्त्र्येण स्वस्वरूपत एव प्रवृत्ताः भवन्ति। तत्र "कारणमस्त्यव्यक्तम्" इत्याकारकप्रतिज्ञायां कारिकाकृता "परिमाणात्" इत्यादयः पञ्च हेतव उपन्यस्ताः, वाचस्पतिमिश्रस्तु तत्र पाठक्रमं परित्यज्य आकांक्षाक्रमेण तान् व्याचिख्यांसुर्हेतुद्वयप्रयोगं प्रदर्शयति-कारणकार्यविभागाद्, अविभागाद् वैश्वरूप्यस्येति। तत्र "कारणकार्यविभागात्" इति प्रथमं हेतुं विवृणोति- टीकाकारः कारणे सत्कार्यमिति। कारणे सतः कार्यस्यैव कूर्मांगानामिव निःसरणरूपपृथग्भावादिरूपविभागात् महदादिकार्यस्य तादृश तादृशावस्थाहेतुरव्यक्तमेवेति भावः। तन्मात्रादीनां च यद् अव्यक्तत्वं प्रतिपाद्यते, तत्र समीचीनम्, यतः संहारे स्वस्वकारणे तिरोभूतं सत् कार्यम् अनभिव्यक्तं भवति, अतः

---

[1] सरवोधिनीटीका पृ. 295

तादृगनभिव्यक्तं कार्यम् अपेक्ष्यैव तत्तत्कारणम् "अव्यक्तम्" इति प्रोच्यते, न तु प्रधानवत् मुख्यमव्यक्तत्वमादायेत्यर्थः। अयं भावः- प्रधानातिरिक्तस्य सर्वस्याऽवान्तरकारणजातस्य व्यक्तत्वेऽपि तत्तत्कार्यीयसूक्ष्माऽवस्थाऽख्याऽनभि. व्यक्ततारूपधर्मसंबन्धात् सर्वस्यापि कारणरूपस्याऽव्यक्तत्वमिहोपचर्यत इति। कार्यकारणयोरभेदात् कार्यस्य अनभिव्यक्तत्वमेव कारणस्याऽव्यक्तत्वमिति निष्कर्षः। टीकाकारः अग्रे अव्यक्तस्य सिद्धयां द्वितीयं हेतुं वर्णनं कृतम्। टीकाकारः अग्रे अव्यक्तस्य सिद्धयां द्वितीयं हेतुं वर्णनं कृतम् यथा- "यदाविर्भवति तत्सूक्ष्मावस्थापूर्वकमेव भवति, यच्च तिरोभवति तत्सूक्ष्मवस्थान्तमेव भवति, यथा कूर्मांगानि" इति व्याप्तिबलेन "महदादिकं कार्यं सर्गकाले स्वीयसूक्ष्मावस्थापूर्वकम्, संहारकाले च स्वीयसूक्ष्मावस्थान्तं भवितुमर्हति, आविर्भावतिरोभाववत्त्वात्, कूर्मांगवत्" इत्यनुमानेन यदाऽऽदावन्ते च सूक्ष्मावस्थाश्रयतया सिध्यति तदेवाऽस्माकं प्रधानमिति सिद्धा "कारणमस्त्यव्यक्तम्" इति प्रतिज्ञेति। "तद्धेदं तर्ह्यव्याकृतमासीत्-" गीतायामपि उक्तं-

**"अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।**

**अव्यक्तनिधनान्येव तत्र का परिदेवना"।**

इत्यादय आगमा अपि अतर्कानुकूलत्वेन अनुसन्धेयाः। टीकाकारेण कौमुदीकारोक्तस्याशय महदादिपर्यन्तस्य कार्यजातस्य परिमिताच्चेति तृतीयं प्रकाशितः यत्- टीकाकारेण कौमुदीकारोक्त स्वाशय महदादिपर्यन्तस्य कार्यजातस्य

परिमित्वाच्चेति तृतीयं प्रकाशितः यत् "शक्तितः प्रवृत्तेः, कारणकार्यविभागात्" इति हेतुद्वयेन कार्याणामव्यक्तपूर्वकत्वं साधितम्, "अविभागाद्वैश्वरूप्यस्य" इति हेतुना च अव्यक्तान्तत्वं प्रसाधितम्, तथापि नैतावता प्रधानकारणकत्त्वनिश्चयः[1]। बुद्धेरपि परिच्छिन्नत्वेन कार्यत्वान्न महतः परमाव्यक्तत्वम्, अपि तु तत्कारणत्वेन अनुमितस्य प्रधानस्यैव तत्त्वमिति। "महदादिकम् अव्यक्तकारणकम्, परिमितत्वात्, घटादिवत्" इति प्रयोगे महदादिरूपपक्षैकदेशे नभसि परिमितत्वरूपहेतोरवर्तनाद् भागासिद्धत्वापातः, सर्वं परिणामिनं न व्याप्नोतीति अव्यापि, तस्य भावः अव्यापित्वम्, तस्मादित्यर्थः। एवं च नभसः "नहि कार्यं कारणं व्याप्नोत्यपितु कारणं कार्यम्" इति न्यायेन स्वकारणशब्दतन्मात्राद्यव्यापित्वेन न हेतोर्भागासिद्धत्वम्, निखिलपरिणाम्यनुवृत्तित्वरूपव्यापित्वाभावात्। यथा सत्त्वादिभिर्निखिलं कार्यमाविष्टं न तथा सत्त्वरजस्तमांसि परस्परं व्याप्नुवन्ति, मिथः कार्यकारणभावाभावादिति गुणेषु व्यभिचारो दुर्वार इति। यथाऽहङ्कारादिकारणत्वेन महदादिरूपमव्यक्तं सिध्यति, तथा महत्तत्त्वकारणत्वेनापि किंचिदव्यक्तं सिद्धम्, तथा च- यन्महत्कारणत्वेन सिद्धं तदेव नः परमाव्यक्तं प्रधानमित्याशयः। टीकाकारः अत्र जिज्ञासा उपस्थापयति यत्- "प्रधानमपि यत्किंचिदव्यक्तकारणकं भवितुमर्हति, अव्यक्तत्वात्, महदादिवत्" अत्र समाधानं करोति- "प्रधानमपि यत्किंचिदव्यक्तकारणकम्-" इति प्रागुक्तमनुमानं हि न प्रमाणतां भजति, यत्राव्यक्तकारणत्वं महदादौ तत्राव्यापित्वं, यत्र चाव्यक्तत्वं प्रधाने

[1] म.वो.टी.पृ-

न तत्राव्यापित्वम्" इत्येवं साध्यव्यापकत्वे सति साधनाव्यापकत्वेन अव्यापित्वरूपोपाधिग्रस्तत्वादिति भावः। पुनः आचार्यैः पूर्वपक्षीनां मतमुपस्थापयति- नन्वनुमानस्य सामान्यविषयकत्वेन विशेषबोधने सामर्थ्याभावात् प्रागुक्तानुमानेन सिध्यत्सत् यत्किंचिदव्यक्तरूपं कारणं ब्रह्मैव सिध्येदिति कथं प्रधानकारणत्वनिश्चय। समन्वयादिति अत्र समाधानरूपे अव्यक्तस्य सिद्धयां समन्वयाच्चचतुर्थहेतुनः प्रस्तूयते। तदर्थमाह- भिन्नानामिति। अध्यवसायादिलक्षणतत्तदसाधारणधर्मवत्त्वेन मिथो भिन्नानां बुद्धादीनां या सुखाद्यात्मकसाधारणधर्मवत्त्वेन एकरूपता स समन्वय इत्यर्थः। **"यानि च घटादीनि यत्स्पर्शादिमन्मृत्सामान्यरूपसमन्वितानि, तानि तत्स्पर्शादिस्वभावमृदातमसामान्याव्यक्तोपादानकानीत्यर्थः। एतदभिप्रेत्यैवोदाहरणं दर्शयति-यथा मृद्हेतुमेति। निगमनमाह- इति कारणमिति। इति=इत्येवम् उक्तहेतोर्वा इत्यर्थः। भेदानाम्=महदादिकार्याणामित्यर्थः। अनेन चानुमानेन यत्सुखाद्यात्मकाव्यक्तं कारणं सिध्यति, तत् तादृग् (सुखाद्यात्मकं) गुणत्रयवत् प्रधानमेव, न ब्रह्म, तस्य निर्गुणत्वेन त्रिगुणत्वाभावादिति न ब्रह्मणोऽर्थान्तरत्वेत्यपि बोध्यम्"**[1]। प्रधानं कथं पवर्तते इति प्रतिपादयितुं आचार्यः वदति- द्विविधा हि प्रधानस्य प्रवृत्तिः, प्रलयकालिकी सर्गकालिकी च। तत्र "सत्त्वरजस्तमसाम् अन्योन्यगुणप्रधानभावानपेक्षा साम्येन स्वरूपमात्रेण अवस्थानरूपा सदृशपरिणामपरम्परावाहिनी प्रथमा" सत्त्वरजस्तमसां परस्परांगागित्वप्रयुक्ता

[1] सारबोधिनीटीका पृ.-302

साम्यावस्थानात्प्रच्युतिरूपा विसदृशपरिणतिपरम्परावाहिनी च द्वितीया। प्रलयावस्थायां सत्त्वादीनि गुणानि सदृशपरिणामानि भवन्ति, न तु सर्गारम्भ इव विलक्षणतत्तन्महदहङ्कारादिरूपेण परिणामशीलानीत्यर्थः। लघुत्वादिरूपस्वानुरूपपरिणामेनैव प्रलये सत्त्वं प्रवर्तते, न तु केनचिदन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमते, एवं रजोऽपि उपष्टम्भकत्वादिरूपस्वानुरूपपरिणामेनैव तत्र प्रवर्तते, न केनचिदन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमत इत्यर्थः।

## पुरुषस्वरुपम्

सांख्यशास्त्रे पंचविंशतितमं तत्त्वं वर्तते पुरुष इति। तस्य स्वरूपं किमिति विचारणे आचार्यः स्वाभिप्रायं इत्थमुपस्थापयति- यद्यपि अहंप्रत्ययविषयतयाऽऽत्मासिद्ध एवेति न पृथक् तत्साधनमावश्यकम्, तथापि अहंप्रत्यये तद्विषयस्य देहाद्यतिरिक्तत्वानवगाहनात् तस्य देहाद्यतिरिक्तत्वसाधनाय अयमारम्भ इत्याशयेन पुरुषं विशिनष्टि- अव्यक्तादेर्व्यतिरिक्त इति। भिन्न इत्यर्थः।[1] **पुरुषस्य त्रिगुणादिरहितत्त्वार्थबोधनाय श्रुतिवाक्यस्योल्लेखं करोति आचार्यः इति अत्र अजाह्येतां जुषमाणानुशेते इति। अत्र शिवनारायणशास्त्रि महोदयानामाशयः वर्तते यत् पुरुषः त्रिगुणातीतः सदपि नित्यः वर्तते।**

[1] सा.बो.टी. पृ-308

**"आत्मा- असंहतः, अत्रिगुणादिमत्त्वात्, यत्र असंहतम्, तत्र अत्रि गुणादिमत्, यथा महदादिकम्"** [१] इत्यनुमानमत्र फलति। पारार्थ्यमात्रसाधनापेक्षया संहतपारार्थ्यसाधनस्यं गौरवग्रस्तत्वादित्यर्थः। [2] पुरुषस्यासंहतत्वप्रतिपादने आचार्यः व्याप्तिं प्रदर्शयति तथाहि- "यद् यत् संहतं तत् तत् परार्थम्, यथा शयनासनादि" इति व्याप्तिः, न तु "संहतपरार्थम्" इति, संहतत्वविशेषणस्य व्यर्थत्वात्। तथा च दृष्टान्ते संहतार्थत्वस्य दृष्टत्वेऽपि दार्ष्टान्तिकेऽसंहतार्थत्वसिद्धेर्न काचित् क्षतिः। अत्र पुरुषे संहतत्वस्याभावेन तदर्थत्वस्य साधयितुमशक्यत्वादिति भावः।[3] महदादिष्वेव तु कश्चिदधिष्ठाता न भवितुमर्हति, स्वस्य स्वाधिष्ठानायोगादिति भावः। अयस्कान्तमणेरिव निर्व्यापारस्यापि सन्निधिमात्रेण अधिष्ठातृत्वोपपत्तेर्व्यापारवत एवाधिष्ठातृत्वमिति नियमस्याश्रयितुमशक्यत्वात्। [4] पुनश्च बुद्धयादिषु सुखादुखामोहात्मकत्वादपि अधिष्ठातृत्वाभावः अतः उक्तं- "सुखाद्यात्मकं बुद्धयादिकं, स्वातिरिक्तेन केनचिद् भोक्ताऽनुभवनीयम्, भोग्यत्वात्, ओदनादिवत्" इत्यनुमानं अत्र फलति"[5]। स्वयमेव स्वस्य भोक्ता लोके न दृश्यते भोक्ता अन्यः भोग्यः अन्यः

---

[1] सा.वा.टी. पृ-309

[2] सा.वा.टी. पृ-309

[3] सा.वा.टी. पृ-309

[4] सा.वा.टी. पृ-311

[5] सा.वा.टी. पृ-312

इति लोकसिद्धः अत भोक्तृ भोग्ययोः विरोधादपि बुद्धौ अधिष्ठातृत्वाभावः अतः वदति टीकाकारः– "एकस्य कर्मकर्तृभावविरोधेन स्वस्य स्वेन भोग्यत्वासंभवान्न बुद्ध्यादीनां भोक्तृत्वं भवितुमर्हतीति"[1]। श्रुतिरपि पुरुषस्य असंगतत्वं प्रतिपादयति। पुरुषस्य पारमार्थिकत्वं तु सिद्धमेव। बुद्ध्यादयस्तु न पारमार्थिकाः अतः उक्तं आचार्यैः– "असङ्गस्यात्मनः परमार्थतो दर्शनकर्तृत्वं न संभवतीति बुद्ध्युपाधिकमेव तस्य द्रष्ट्टत्वं वक्तव्यम्, ततश्च द्रष्टत्ववद् भोक्तृत्वमपि बुद्ध्युपाधिकं तस्य संभवतीति प्रथमा व्याख्यापि समीचीनैवेति"[2]। बुद्ध्यादयः पुनः अनित्याः परिणामिनः पुरुषस्तु नित्यः अपरिणामी। पुरुषस्य नित्यत्वात् अहंकारादीनां अकारणत्वं सिद्धयति। अनित्य अहंकारादीनां यत् कारणं तत् अनित्यमेव। अतः तत् बुद्धिः एव तथा हि– "आत्मनो नित्यत्वेऽपि देहेन्द्रियादिसम्बन्धरूपं जननमक्षतमित्यभिप्रायः" [3]। अपरिणामित्वेन घटादेरिव मुख्यस्योत्पत्तिरूपस्य परिणामस्य आत्मनि वक्तुमशक्यत्वादिति बोध्यम्"[4]। कूटो निश्चलस्तिष्ठितीति कूटस्थः, यद्वा–कूटम्=अयोधनः, तद्वत् तिष्ठतीति कूटस्थः, संसर्गिनाशेऽपि स्वयमनष्ट इत्यर्थः। "न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने

[1] सा.वां.टी. पृ–312

[2] सा.वां.टी. पृ–312–313

[3] सा.वां.टी. पृ–315

[4] सा.वां.टी. पृ–315

शरीरे"।। इत्याद्याः श्रुतय आत्मनः जन्मादिपरिणामशून्यत्वेन कूटस्थनित्यत्वमामनन्तीति नैव तस्य मुख्यौ जन्मनिधनौ संभवतः इति भावः। न च देवदत्तो जातो देवदत्तो मृतः इति व्यवहारान्यथानुपपत्त्या आत्मनो जन्मनिधनावश्यमभ्युपेयाविति भ्रमितव्यम्, "शरीरादिनां संयुज्यमानत्वमेवात्मनो जायमानत्वम्, शरीरादुत्क्रमणमेव चात्मनो म्रियमाणत्वम्" इत्यभ्युपगमेनापि तस्य व्यवहारस्योपपत्तेः" [1] । स्थावरजङ्गमशरीरविषयो जन्ममरणव्यपदेशो मुख्यः, आत्मनि तु औपाधिकजन्मादिविषयत्वेन गौणः, उपाधिजन्मनाशे सत्येव आत्मनि जन्मनाशव्यवहारस्य भावित्वादित्यत्र फलितम्"[2]। उपाधिजन्मनाशे सत्येवात्मनि जन्मनाशव्यवहारस्य= भावित्वादित्यर्थः"[3]। लोके हि- "देवदत्तो जातो यज्ञदत्तो मृतः" इति व्यपदिश्यते। सोऽयं लौकिको जन्ममरणव्यपदेशो जीवात्मनि मुख्यो भवेदाहोस्विद् भाक्त इति सन्दिह्यते। तत्र मुख्य इति पूर्वः पक्षः, भाक्त इति सिद्धान्तः"[4]।

अत्र अद्वैतीनां मतं निराकर्तुं तेषां पक्षः उपस्थाप्यते- अन्धत्वादीनाम् इन्द्रियधर्मतया जन्ममरणादीनां च देहधर्मतया इन्द्रियदेहादीनां च परस्परं भेदात् पुरुषस्यैक्येऽपि उपाधिभेदेन घटाकाशादिभेदवत् देहाद्युपाधिभेदैर्भवेदेव

---

[1] सा.वो.टी. पृ-315

[2] सा.वो.टी. पृ-(315-316)

[3] सा.वो.टी. पृ-316

[4] सा.वो.टी. पृ-316

जन्मादिव्यवस्थेति किं गौरवग्रस्तेन पारमार्थिकेन भेदेन, तदाहुः- "यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते। न सर्वे सम्प्रयुज्यन्ते तथा जीवाः सुखादिभिः।" इति वेदान्तिमतमाशङ्क्य निराचष्टे।[1] यदि हि देहस्योपाधित्वेन जन्मादिव्यवस्थापकत्वमभ्युपगम्येत, तदा विनिगर्मनाविरहेण देहवद् हस्तस्तनादीनां देहावयवानामपि उपाधित्वेन भेदकत्त्वं स्यात्, तथा च देहावयवानाम् उद्भवविरोधाभ्यामपि पुरुषस्य जन्ममरणादिव्यवहारः स्यादिति"[2]। देहस्यैवोपाधित्वमभ्युपगच्छामः" यदि पुरुषनानात्वमभ्युपगम्येत्, तदा आत्मैक्यप्रतिपादनपराणाम् "एको देवः सर्वभूतेषु गूढः-" इत्यादिश्रुतीनां का गतिरिति चेत्। अत्राहुः- "एकत्वश्रुतीनाम् "अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः इति बद्धमुक्तजीवभेदप्रातिपादकश्रुतिविरोधात्। जन्ममरणादिव्यवस्थादर्शनरूपप्रत्यक्षप्रमाणविरोधाच्च, आत्मनां व्यापकत्वेन सर्व एव आत्मानः सर्वत्र सन्निहिता इति विभिन्नदेशत्वाभावेन विभागाप्रतीतेः, गौणत्वेन एकत्वव्यवहारेणापि उपपत्तेः"[3] इति। "शरीराणि प्रतिशरीरं विभिन्नपुरुषाधिष्ठेयानि, अयुगपत्प्रवृत्तिमत्त्वात्, रथादिवत्"[4] तत्र चलनात्मकः प्रवृत्तिरूपो व्यापारो देहधर्मः, चालनात्मकः प्रवर्तनारूपः प्रवृत्तिरूपो व्यापारो

---

[1] सा.वां.टी. पृ-318

[2] सा.वां.टी. पृ-318

[3] सा.वां.टी. पृ-319

[4] सा.वां.टी. पृ-319

देहधर्मः, चालनात्मकः प्रवर्तनारूपः प्रयत्नश्च चेतनधर्मः। तथा च- "प्रवृत्तेरयौगपद्यदर्शनेन प्रवर्त्तनारूपप्रयत्नस्य अनैक्यम्, प्रयत्नायौगपद्येन च तदाश्रयचेतनभेदः" इत्यर्थोऽत्राभिप्रेतः[1]। तत्र प्रयत्नरूपः परिणामोऽस्ति बुद्धेर्धर्मो न जात्वपरिणामिन आत्मनो धर्म इति कथम"[2]। अप्रमात्वव्यवहारे न्यायभाष्यकाराणां मतमुपस्थापयति- तत्र "कुतश्चित् निमित्ताद् अतस्मिन् तद् व्यवहार उपचारः। यदाहुर्वात्स्यायनभाष्यकाराः- "सहचरणादिनिमित्तेन अतद्भावे तदभिधानम् उपचारः इति"[3]। अविवेकिनामात्मान्तः करणयोर्भेदग्रहाभावात् अन्तःकरणधर्मरूपा प्रवृत्तिः पुरुषे आरोप्यत इति तात्पर्यम्"[4]। टीकाकारः अत्र पुरुषभेदस्य सिद्धत्वात् अद्य विवेकज्ञानेन तस्य साक्षित्वादि धर्मस्य निरूपणं करोति। निष्कर्षः- "यद्यत्र कारिकायां "विपर्यासादस्मात्" इत्येवम् इदंशब्द उपादीयेत, तेन च समनन्तरोक्तं "त्रैगुण्यविपर्ययात्" इति परामृश्येत, तदा "त्रैगुण्यविपर्ययात्" इति परामृश्येत, तदा "त्रैगुण्यरूपविपर्ययरूपाद् विपर्यासात्" इत्येवमन्वये त्रिगुणत्वविपरीतेन अत्रिगुणत्वहेतुना केवलं सुखादिशून्यतारूपकैवल्यधर्मवत्त्वमेव पुरुषस्य लभ्यते, न साक्षित्वादिधर्मवत्त्वम्, तत्साधकचेतनत्वादेर्हेतोरलाभात्, "त्रैगुण्यविपर्ययात्सकाशाद् यो विपर्यासस्तस्मात्" इत्येवमन्वये तु विपरीतमेवापद्येत, अतः

---

[1] सा.वां.टी. पृ-319

[2] सा.वां.टी. पृ-319-320

[3] सा.वां.टी. पृ-320

[4] सा.वां.टी. पृ-320

उपात्तनिखिलधर्माणम् "अनेन हेतुना साक्षित्वम् अनेन च हेतुना अकर्तृत्व... इत्यादिरूपेण सहेतुकत्वलाभाय कारिकायां "तस्मात्" इति तच्छब्दादुपपात्तो नेदं शब्द: इति। तस्मिंश्चोपात्ते तेन व्यवहितस्य "त्रिगुणादिविपर्यय इत्यादे: परामर्शात् "तस्मात्=त्रिगुणादे:, विपर्यासात्=विपरीतसत्वादेर्हेतो: पुरुषस्य साक्षित्वादिकं सिद्धम्" इत्यर्थ: तस्माद् विपर्यासात् पुरुषस्य साक्षित्वादिकं सिद्धमित्यर्थ:"[1]। इन्द्रियप्रणालिकया बुद्धौ तत्तदाकारेण परिणतायां पुरुषेण दृश्यायां सत्यां तदारूढा: पदार्था अपि दृश्या भवन्तीति तेषां द्रष्टा पुरुष इति भाव:। बुद्धे: साक्षात्प्रकाशक: पुरुषोऽन्येषां तु बुद्धिवृत्तिव्यवधानेन प्रकाशक इति तत्त्वम्। यदुक्तम्- "द्रष्टा दृशिमात्र: शुद्धोऽपि प्रत्ययानुपश्य:" इति "द्रष्टा बुद्धे: प्रांतसंवादीं पुरुष:" इति चेति"[2]। संवेदिन्या बुद्धे: प्रतिरूप: अर्याकारायां बुद्धौ सत्यां तत्प्रतिबिम्बतत्वेन तदनुकारीति योगभाष्यार्थ:। एतदुक्तं भवति- ज्ञानाधारत्वं द्रष्ट्टत्वम्, ज्ञातृत्वमिति यावत्, यो हि दृशिमात्रो नासौ ज्ञानाधारो भवितुमर्हति सत्यम्, बुद्धिवृत्त्यविशिष्टवृत्तित्वेनारोपितं निखिल दृश्यद्रष्ट्टत्वं तस्याक्षतमेवेति"[3]। कर्ता हि स्वाभीष्टोत्पादाय प्रयतमानोऽविवेकी प्रसवधर्मी च भवति, तस्य

---

[1] सा.वां.टी. पृ-323-324

[2] सा.वां.टी. पृ-324

[3] सा.वां.टी. पृ-324

विविक्तत्वात् न कर्तृत्वमित्यर्थः। तच्च कर्तृत्वं बुद्ध्याश्रयमपि पुरुषे उपचर्यते"[1]। तात्पर्यमिदं त्रिगुणत्वादि धर्मात् विद्यते इयं आत्मायां साक्षित्वं, कैवल्यं, माध्यस्थ्यं, द्रष्ट्टत्वं अकर्तृत्वं च सिद्धयति। अत्र टीकाकारः प्रधानपुरुषसंयोगसिद्धिनिरूपितं करोति। "जानाम्यहं करोमीदमहम्" इति प्रत्यये द्रष्ट्टत्वस्य कर्तृत्वस्य च भवत्येकाधिकरणत्वेन प्रतीतिरिति "द्रष्ट्टत्वमकर्तृभावश्च" इत्यनेन यद् आत्मनो द्रष्ट्टत्वे सति अकर्तृत्वमुक्तं तदसमीचीनमिति"[2]। यतः चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्मात् "चेतनोऽहं करोमि" इति सामानाधिकरण्यप्रतीतिर्भ्रान्तिरेव"[3]। बुद्ध्यादिरूपेण परिणतानां गुणानां कृतिमत्त्वेऽपि, तथा=बुद्ध्युपरागात्-तत्प्रतिबिम्बतत्वात्, उदासीनोऽपि, पुरुषः कर्ता इव भवति, तेन "करोमि"[4] इति प्रत्यय उपपन्न इति।

"त्रिगुणत्वात् परिणामित्वाद् बुद्धेः कर्तृत्वम्, निर्गुणत्वाद् अपरिणामित्वात् पुरुषस्य अकर्तृत्वम्-द्रष्ट्टत्वादिकं च"[5] 'असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतेः चेतनस्य असङ्गत्वात् कथं तत्संयोग इत्यभिप्रेत्य संयोगपदं व्याचष्टे- तत्सन्निधानमिति।

---

[1] सा.वां.टी. पृ-325

[2] सा.वां.टी. पृ-325

[3] सा.वां.टी. पृ-326

[4] सा.वां.टी. पृ-326

[5] सा.वां.टी. पृ-326

तथा च कापिलसूत्रम्- **"उपरागात्कर्तृत्वं चित्सन्निधानात्"**[1] इति। संयोगलक्षणं इत्थं प्रतिपादयति यथा- **"स्वस्वामिशक्तयोः स्वरूपोपलब्धिः संयोगः"**[2] इति। द्रष्ट्रर्थं हि दृश्यं, ततो दृश्यजनितोपकारं भोगापवर्गलक्षणं भजमानः पुरुषः स्वामी, स्वं च दृश्यं, तयोर्बुद्ध्यापादितो विविक्तस्य द्रष्टुः स्वामिनः स्वरूपस्योविवेकाद् द्रष्टकर्मतयोपलब्धिर्भोगः। तद् हेतुभूतो यः स्वस्वामिंशक्तयोबुद्धिपुरुषयोः स्वस्वामिभावलक्षणो वा, भोग्यभोक्तृभावलक्षणो वा, दृश्यदृष्ट्भावलक्षणो वा सम्बन्धः, स संयोग इति भावः। यश्चायं भोगापवर्गहेतुः प्रकृतिपुरुषसंयोगः, स च न घटपटयोरिव संयोगविशेषः, किं तु योग्यतालक्षणः। भवति दृश्यनिष्ठा जडत्वविषयत्वलक्षणा भोग्यत्वयोग्यता, द्रष्ट्टनिष्ठा च चेतनत्वलक्षणा भोक्तृत्वयोग्यता। सोऽयं योग्यतालक्षणः संयोगोऽनादि विपर्ययज्ञानवासनाप्रभवतया अनादिः सन्नपि नानन्तः, किं तु मध्ये निमित्तापायादपायशीलः। निमित्तापायाश्च सम्यग् दर्शनादेव, नोपायान्तरात्। यतः सम्यग् दर्शनमेव विपर्ययदर्शनप्रतिद्वन्द्वीति द्रष्टव्यमिति पातञ्जलाः"[3]।

**इति द्वितीयोध्यायः**

[1] सां.सू. 1/164

[2] यो.सू 2/23

[3] सा.यो.टी. पृ-327

# तृतीयोऽध्यायः

वादप्रकरणम्

वैदिकदर्शने वादतत्त्वप्रदर्शनम्

सांख्याभिमतसत्कार्यवादस्थापनम्

आचार्यवाचस्पतिमिश्रमते सत्कार्यवादसिद्धौ युक्तिप्रदर्शनम्

सतकार्यवादसिद्धौ टीकाकर्तुः मतसमीक्षणम्



# तृतीयोऽध्यायः

## वैदिकदर्शनेषु वादतत्त्वप्रदर्शनम्

भारतीयदार्शनिकपरम्परायां कारणतावादस्य व्यावहारिकपक्षः सैद्धान्तिकपक्षापेक्षया महत्त्वपूर्णः विद्यते। अत एव पूर्वं व्यावहारिकपक्षः ततश्च सैद्धान्तिकपक्षः विविच्यते। दार्शनिकग्रन्थेषु वांदरायणव्यासः वेदान्तसूत्रस्यारम्भे एव "जन्माद्यस्य यतः" इत्यनेन सूत्रेण कारण-कार्यसिद्धान्तस्य स्वरूपं सूत्रितवान्। तत्र भाष्यकारेण भगवता शङ्कराचार्येण सुविशदं कारणतावादस्य स्वरूपं विवेचितम्। "प्रधानादचेतनात्, अणुभ्योऽभावात्, संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम्। न च स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात्"[1]। स च कारणविषयकः सिद्धान्तः अद्वैतनये व्यावहारिकः, न तु पारमार्थिकः। अन्यत्र सांख्यादिसूत्रेषु अयं सिद्धान्तः व्यावहारिकः सैद्धान्तिकश्चेति उभयविधः विवेचितः। कारणस्वरूपम् - कार्यते यत् तत् कारणम्। कार्यकरणसमर्थं वा इति कारणपदस्य सामान्यार्थः। "साधकतमं करणम्"[2], अत्र करणशब्दार्थः एव कारणस्य स्थूलं स्वरूपं लक्षणं

---

[1] ब्र.सू.शा.भा. 1/1/2

[2] तर्कभाषा

वा। येन कस्यचित् कार्यस्य सृष्टिः, फलस्य प्रादुर्भावो वा भवति यस्माद् वा भवति तस्य कार्यात् पूर्ववर्तिता अवश्यम्भावीति द्योत्यते। 'येन विना यन्न भवति तत् तात्पर्याय हेतु बीजम्' तात्पर्यमिदं कारणहेतुः बीजमिति पर्यायशब्दः। कारणं नाम सा सत्ता शक्तिर्वा यतः परिवर्तनं गतिः क्रिया वा सम्भावयते 'पुरस्तदागच्छतिकारणं कार्यस्य जनकत्वात्। कार्यात् नियतपूर्ववर्तित्वे सति कार्योत्पादकत्वम्'। भारतीयदर्शने कारणस्य लक्षणं तथ्यमाधारीकृत्येवोपवर्णितम्। तद्यथा-"यस्य कार्यात् पूर्वभावो नियतोपस्थितिः अन्यथासिद्धिश्च तत्कारणमिति"[1]। यथा तन्तुवेमादिकं पटस्य कारणम्। एका अपरापि परिभाषा उपलंभ्यते तथाहि- यत् "अनन्यथासिद्धनियतपूर्वभावित्वं तत् कारणम् इति। कार्यं कारणतामात्रबोधः"[2]।

सत्कार्यवादोऽसत्कार्यवादश्चेति वादद्वयं दर्शनेषु प्रसिद्धम्। केचन दार्शनिकाः सत्कार्यवादिनः अन्ये चासत्कार्यवादिनो भवन्ति। तत्र सत्कार्यवादीदर्शनेषु साङ्ख्यानां प्रमुखं स्थानमस्ति। कार्यं कारणस्योत्पत्तेः प्रागेवावतिष्ठत इति ये आमनन्ति ते उच्यन्ते सत्कार्यवादिनः। ये चोत्पत्तेः व्यापारात् पूर्वं कार्यं कारणे नाङ्गीकुर्वन्ति ते भवन्त्यसत्कार्यवादिनः। असत्कार्यवादिषु गौतमीयं न्यायदर्शनं प्रामुख्यं भजते। दार्शनिकैः स्वस्वपक्षस्य स्थापनाय प्रबलाः तर्काः समुपस्थापिताः सत्कार्यवादिनो वदन्ति यदि व्यापारात् पूर्वं तिलेषु तैलं न स्वीक्रियेत तदा व्यापारबलेन

---

[1] न्या.सि.मु.का.प्र. प्रत्यक्ष खण्ड

[2] तर्कभाषा

बालुकास्वपि तैलमुत्पद्येत, जगति न तथावलोक्यत अत एव सत्कार्यवाद एव स्वीकार्यः सर्वैः। असत्कार्यवादिनश्च वदन्ति यदि व्यापारात् पूर्वमेव तिलेषु तैलस्यास्तित्वं स्वीक्रियते तदा तिलैरेव तैलकार्यं कथं न सम्पाद्यते? कारणताविषये सन्ति वादिनां विप्रतिपत्तयः। तत्र चत्वारः पक्षाः सन्ति यथा कौमुदीकारेण तत्त्वकौमुद्यां कारणता विषये विप्रतिपत्तिः प्रतिपादिता 'असतः सज्जायते' इति बौद्धाः वदन्ति। **"त्रैकालिकबाधरहितं ब्रह्मैव सत्"** एकस्यैव सतो विवर्तः कार्यजातं वस्तु न सत्, अस्य जगतो रज्जौ अहेर्भ्रम इव विवर्तमात्रत्त्वमिति वेदान्तिनः यथा 'सतोऽसत् जायते' नित्यपरमाणोरसद्द्व्यणुकाद्युत्पत्तेरिति नैयायिकाः।

तत्रोपर्युक्तपक्षत्रयात्प्रधानासिद्धेः तेषामत्र निराकरणं क्रियते। तथाहि-

**बौद्धमते असत्कारणवादः तत्खण्डनञ्च**

'असतः सज्जायते' इति बौद्धाः वदन्ति यथा बीजनाशानन्तराङ्कुरोत्पत्तिदर्शनादिति अभावाद् भावो जायते इत्यर्थः। बीजावयवानां नाशान्तरं कार्योत्पत्तिः जायते। अतः अङ्कुरादिकार्याणां कारणत्वमव्यवहितपूर्ववर्तिबीजनाशादेः स्यात् इति सौगतमतं। तन्न समीचीनम् असतः सदुत्पत्तेरसंभवात्। 'असतः सज्जायते' तर्हि सदसतोरभेदासम्भवादनिर्वचनीयाभावरूपकारणात् शब्दरूपात्मकसुखदुःखादिरूपजगतः कथमुत्पत्तिरिति। सुखदुःखादिरूपकार्यस्य कारणमपि सुखदुःखादिरूपौचित्यात्।

कार्यकारणयोरभिन्नत्वास्वीकारादपि आंशिकानुरूपत्वस्वीकृतेः नोचेदनवस्थाप्रसङ्गः। कार्यरूपगुणावगमनानन्तरमेव रूपगुणविशिष्टवस्तुन एव तदुत्पत्तिग्रहणत्वम्। न हि बन्ध्यापुत्रात्कस्यचिदुत्पर्त्तिदृश्यते। नापि शशविषाणं कारणतया दृष्टिपथमवतरति। अङ्कुरादिस्थलेऽपि बीजावयवा एव कुतश्चित निमित्तात् प्रादुर्भूतक्रिया पूर्वव्यूहं जहाति व्यूहान्तरं चोपद्यन्ते तस्माद् व्यूहान्तराच्च अङ्कुर उत्पद्यते इति बीजावयवस्यैव कारणत्वं नाभावस्येति सर्वं सुस्थिरम्। अत्र पुनः टीकाकारः सुगतमते दोषं प्रदर्शयति अभावाद् भावोत्पत्तौ को दोष इति जिज्ञासामुखेन "यद्यभावाद् भाव उत्पद्येत, अभावत्वाविशेषात् कारणत्वविशेषाभ्युपगमोऽनर्थकः स्यात्, न हि बीजादीनामुपमृदितानां योऽभावस्तस्य च शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद् विशेषोऽस्ति, येन बीजादेवाङ्कुरो जायते क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान् स्यात्, निर्विशेषस्य अभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्, न चैवं दृश्यते"[1] इति। अतः अभावात् भावस्योत्पत्तिः नैव वक्तुं शक्यते। पुनश्च न हि शालिबीजविनाशो यवबीजविनाशाद् विशिष्यते इत्यपि वक्तुं शक्यते। न चेदृक् कार्यभेदः कारणे विशिष्टशक्त्यभ्युपगममन्तरा कथंचिद् युज्यते। विशिष्टा शक्तिश्च भावस्य कारणस्य धर्मो भवितुमर्हति नाभावस्य। न च कारणे विनष्टे कार्ये तदन्वय

[1] मा.बो.टी. पृ-229

उपपद्यते। न हि विनष्टास्तन्तवः पटमन्वेतुं पारयन्ति।[1] अतः इदं सिद्धं यत् भावादेव भावपदार्थस्योत्पत्तिः संभवति। न तु अभावाद्भावस्येति।

**न्यायमते असत्कार्यवादः तत्खण्डनञ्च**

असत्कार्यवादप्रत्यवस्थानाय तत्त्वकौमुदीकारेण उक्तं- सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणम् एवञ्च सूत्रकारेण "कणभक्षाक्षचरणमतमवशिष्यते" [2], इत्येवोक्तम् तत्र 'सतोऽसत्जायते' असत्कार्यवादो नैयायिकानाम्। तन्मते असदेव कार्यमुत्पद्यते। यथा पूर्वम् असदेव तत्तद् घटादिकार्यं दण्डचक्रचीवरादिसामग्रीसमवहिताद् मृदादिकारणाद् भिन्नं सदुत्पद्यते। अत्रायं भावः स्वोत्पत्तेः पूर्वं तत् कार्यं नासदेव, पश्चात् कारणसामग्रीवशाद् उत्पद्यत इति कार्यकारणयोरन्यत्वं परमार्थतः सत्यं चेति। ततश्च "सतोऽसज्जायते" इति युक्तियुक्तम्। तदिदं नैयायिकमतमप्यसाधु, असतः कार्यस्य कारणव्यापारसहस्रैरपि कर्त्तुमशक्यत्वात्। न हि नीलं शिल्पिसहस्त्रेणापि पीतं कर्तुं पार्यते। सत् कारणेऽसतः कार्यस्य कार्यसत्तया सह सम्बन्धासंभवाच्च। न हि अविद्यमानं शशशृङ्गं कदापि शशे शृङ्गरूपकार्यसत्तां भजते। तथा च कपिलसूत्रम् "नासदुत्पादो नृशृङ्गवत्"[3] इति। अत एव टीकाकारः वदति - कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यम्,

[1] सा.बो.टी. पृ-230
[2] सां.त.कौ. -पृ. 105
[3] सा. द. 1/114

असतः कर्तुमशक्यत्वात् सदेव हि कर्तुं शक्यते नासदिति।[1] अर्थात् उत्पत्तेः प्राक् कारणे कार्यस्य सत्ता तु भवत्येव। यतोहि कारणाद्भिन्नं कार्यं नैव भवति। कारणस्य सत्त्वात् कथं कार्यमसत् स्यादिति। अतः कार्यं सदेव तिष्ठति उत्पत्तेः प्राक्, उत्पत्त्यनन्तरं कारणे विद्यमानं सत्कार्यमेवाभिव्यज्यते। पुनः कारणे विद्यमानं सत्कार्यं उत्पत्त्यनन्तरमपि सदेवास्ति तर्हि सिद्धसाधनमापतति इति चेत् तर्हि वक्तुं शक्यते जनकस्य कार्योत्पत्त्यानुकूलव्यापारात् प्रागपि कार्यं सदेव अतः न सिद्धसाधनम्। अतः वदति टीकाकारः- - कार्यसत्ताया न तार्किकवैमत्यमिति "कारणव्यापारात्प्रागपि कारणे कार्यं विद्यते"[2] पुनश्च निष्कर्षरूपेण टीकाकारः वदति- मम मतमेव साधु दुष्टानि चान्यमतानीति प्रतिपिपादयिषुरादौ बौद्धमतस्य दुष्टतां निराकृतवान्। यद्यपीति शास्त्रेण निपातसमुदायोऽयं शंकाद्योतकः। यदि बीजादि नाशोत्तरमङ्कुराद्युत्पत्तिस्तर्हि कथं न नाशस्य कारणत्वमित्यत्राह- तथापि नेति न। कस्य तर्हि कारणत्वमित्यत्राह- अपि त्विति। बीजावयवा एव कुतश्चिन्निमित्तात्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहाति व्यूहान्तरं चोत्पद्यन्ते तस्माद् व्यूहान्तराञ्चाङ्कुर उत्पद्यत इति बीजावयवस्यैव कारणत्वं नाभावस्येत्यर्थः। तथा च बीजादय एवाङ्कुराद्युपादानकारणानि। परन्तु तद्गतावयवसंस्थानविशेषस्य पूर्वसंस्थानप्रध्वंसात् अन्यविधसंस्थानप्रतिबन्धकतया

[1]सा.बो.टी. पृ- 227
[2]सा.बो.टी. पृ-228

प्रतिबन्धकाभावरूपसहकारिसमवधाने जाते बीजाद्यवयवा एवाङ्कुरादिकमुत्पादयन्तीति न बीजाद्यभाव उपादानकारणम्, किन्तु बीजादिसंस्थानविशेषाभावो निमित्तकारणमिति भाव:।[1]

**वेदान्तमते विर्वतवाद: तत्खण्डनञ्च**

'अथ एकस्य सतो विवर्त: शब्दादिप्रपञ्च:' अप्रच्युतोऽन्यथाप्रथा असत्यनानाऽऽकारणावभासो विवर्त: तदुक्तम् -

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरित:।

अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृत:।।"[2] इति।

विवर्तवादो मायावादिवेदान्तिनाम्। तन्मते कारणमेव कार्यस्वरूपेण भासते इति कारणस्यैव सत्यत्वं न तु कार्यस्य सत्यत्वम्। यथा शङ्करभारतीमते "शुक्तौ इदं रजतम्" इति ज्ञानानन्तरम् अधिष्ठानशुक्तिज्ञाने जाते बाधज्ञानेन पूर्वं जातं रजतं यथा निवर्तते, तद्वद् ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तते। तदुक्तम् -

"ततो निरंश आनन्दे विवर्तो जगदिष्यताम्।

अवस्थान्तरभानं तु विवर्तोरज्जु सर्पवत्।।"

तदिदं वेदान्तिमतमपि न समीचीनतामर्हति असति बाधे प्रत्यक्षसिद्धपदार्थस्य मिथ्यात्वासंभवात्। यत्र हि बाधज्ञानं किञ्चिदन्यत्र कारणं वा भवति, तत्रैव

---

[1] सा.वा.टी. पृ- 228

[2] वेदान्तसार:. पृ. 29

मिथ्यात्वस्य वक्तुं शक्यत्वात्। यथा–पीतशंखज्ञानम्। बाधकं च "नेदं रजतम्" इति ज्ञानम्। न च इदं तथा प्रकृत्यादीनामदुष्टत्वात्। "नैदं जगत" इति प्रत्ययाभावात् बाधकं च नास्ति। तस्माज्जगतो मिथ्यात्वासंभवाद् विवर्तवादोसङ्गतः, श्रुतिरपि जगतः सत्यतां स्पष्टं प्रतिपादयति – "यदिदं किं च तत्सत्यमित्याचक्षते" "सूर्याचन्द्रमसो धाता यथापूर्वमकल्पयत" "भोक्ता भोग्यं प्रेरितारं च" इति। वेदान्तसूत्रकारः श्री व्यासदेवोऽपि "परिणामात्" इत्यादिसूत्रैः प्रपञ्चः ब्रह्मणः परिणामभूतभ्युपैति न तद्विवर्त इति जगतोऽनित्यत्वमेव न मिथ्यात्वमिति सारम्। टीकाकारोपि वदति– प्रतीयमानस्यापि शुक्तिरजतादेर्मिथ्यात्वस्य सर्वसम्प्रतिपन्नत्वादित्याशङ्कां परिहरति दृढतरबाधकप्रमाणासन्निधाने सतीत्यर्थः। अर्थादुत्तरप्रमाणेन पूर्वज्ञानस्य नाशः संभवति अतः पूर्वज्ञानं मिथ्याप्रत्ययरूपमिति सिद्ध्यति। अस्माकं मते तु तथा नास्ति। अतः जगतः सत्यत्वमपि सिद्धं भवति। सूत्रकारोपि एवमेव वदति– एतेन "जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात्"[1] इति कपिलसूत्रं व्याख्यातम्। वाचारम्भणश्रुतिस्तु कार्यस्य कारणात्मकत्वमेव प्रतिपादयति न कार्यस्य मिथ्यात्वमिति। अत्र वदति आचार्यः शिवनारायणशास्त्री विश्वं चेत् सद् भवेत्, न तन्निषेधः श्रूयेत। कल्पितं हि निषिध्यते, नायं पुरुषः स्थाणुरिति, न सत्। विश्वनिषेधस्तु श्रूयते– "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"[2] "नेह

[1] सां. 6/52

[2] कठ. 4/10

नानास्ति किंचन"[1] तस्मात् कल्पितमेतद् विश्वमिति। एवमपि नावक्तुं शक्यते यतोहि ब्रह्मण: अनेकत्वनिषेध: श्रूयते। यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्यो: स मृत्युमाप्नोति। य इह नानेव पश्यति। अर्थात् यद् ब्रह्म अस्मिन् लोके वर्तते तदेव अमुष्मिन् लोके वर्तते। यच्च अमुष्मिन् लोके वर्तते तदेवास्मिन् लोके वर्तते। य: पुरुष: लोके अभेदेन वर्तमानं ब्रह्म लोकभेदात् भिन्नमिव पश्यति स पुन: म्रियते न कदाचिन्मुच्यते। अत: नेदं कल्पितं विश्वम्। उक्तं हि "वाचा हि नामान्यभिवदति" इति श्रुतेर्वागारभ्यमिति तदर्थ:। कार्यं तावत् कारणमपि गच्छत् सह रूपेणाकारेणापि गच्छति। तन्नामधेयं च न तदैव रूपवदप्येति, किन्तु पश्चादपि किंचित् कालं प्रतितिष्ठति। तदेवाभिप्रेत्योच्यते- "विकारो नामधेयम्" इति। नामधेयं च वाक्कार्यं प्रसिद्धम्। शब्दमयत्वात्। अतो युक्तं तस्य वाचारम्भणमिति विशेषणम्। न चैतावता विकारस्य कार्यस्यानृतत्वमभिहितं भवति, किन्त्वनित्यत्वम्[2]। पुनश्च ब्रह्मण: अतिरिक्तस्य सर्वस्य जगत: मिथ्यात्वाभ्युपगमे जगदन्तर्गतत्वेन वेदस्यापि मिथ्यात्वाभ्युपगमे जगदन्तर्गतत्वेन वेदस्यापि मिथ्यात्वापत्ति: आपतति, वेदस्य मिथ्यात्वे तत् प्रतिपाद्यस्य ब्रह्मण: अपि मिथ्यात्वं स्यात्। अत: वक्तुं शक्यते कार्यरूपं जगद् उत्पत्ते: प्राक् कारणरूपेण सद् भवति। उत्पत्त्यनन्तरमपि कार्यरूपेण सदेव भवति, अत: जगत: अपि सत्यत्वं तु सिद्धमेव। "कार्यं सत्

[1] बृ. 4/4/19
[2] सा.वो.टी. पृ-232

करणात्-क्रियमाणत्वात्, यन्न सत् तन्न क्रियमाणं यथा नीले पीतं नरविषाणं वा" इति प्रयोगोऽत्र फलति। 'असदकरणात्' इत्यस्य हेतुत्वमिति पक्षधर्मत्वाभावात्कथमस्य हेतुत्वमिति न चोद्यावसरः।[1]

**सांख्याभिमतसत्कार्यवादस्थापनम्**

सत्कार्यवादः सांख्यानाम्- सिद्धान्तः वर्तते। सांख्यकारिकाकारेण सांख्यशास्त्रप्रतिपादितसिद्धान्तमाश्रित्य सत्कार्यवादः व्यवस्थापितः। तत्र सत्कार्यवादसिद्धये पञ्चहेतवः प्रदर्शिताः। कार्यं सद् असदकरणाद्, उपादानग्रहणाद्, सर्वसम्भवाभावाद्, शक्तस्य शक्यकरणात्, कारणभावाच्च। सांख्यकारिकायाः तत् तत् टीकाकारैः एतेषां पञ्चहेतूनां व्याख्यानं यथामति साधितम्। तत्त्वकौमुदीकारेण सत् कार्यं इत्यस्य इत्थं व्याख्यानं कृतं- "कारणव्यापारात् प्रागपीति शेषः"[2]। एतन्मते कारणमेव कार्यरूपेण परिणमते इति कार्यकारणयोरनन्यत्वं सत्यत्वं च। यथा दुग्धं सदैव दधिरूपेण परिणमते दध्नः कार्यान्तरं दुग्धाद्भिन्नं न भवति। युक्तं चैतत्, पीड़नेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन गवादिषु पयसश्चाभिव्यक्तेः परिदृश्यमानत्वात्। अत्र तावत् साङ्ख्यदिशा सत्कार्यवादो विशेषेण विवेचयिष्यते। साङ्ख्यानां सत्कार्यवादसमर्थकं महत्त्वपूर्णं पद्यमिदमस्ति।

---

[1] सा.बो.टी. पृ-233

[2] सां.त.कौ.-अ.।

यथा चोक्तं सांख्यवृद्धैः "सदैव कार्यमुत्पत्तेः पूर्वकारकरूपकम्। आविर्भावतिरोभावौ जन्मनाशावुदीरितौ।।" इति

"असदकरणादुपादानग्रहणात् सर्वसम्भवाऽभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।"[1]

"असतः क्रियमाणे दृष्टान्ताभावादिति।"[2]

एषु पञ्चहेतुषु प्रथमो हेतुः "असदकरणाद्"। सत् कार्यं कारणव्यापारात् प्रागिति शेषः। "असदकरणात्" इति। असदिति चेत् कारणव्यापारात् पूर्वं कार्यं, नास्य सत्त्वं केनापि कर्तुं शक्यते। नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यम्। कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते। सतश्चाभिव्यक्तिरूपोपपन्ना, यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु, तण्डुलानाम्, दोहनेन सौरभेयीषु पयसः। असत् करणे तु न निदर्शनं किञ्चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद् दृष्टम्। असतः क्रियायोगाभावात् सत्कार्यमिति"[3]। असतोऽक्रियामाणत्वात्कार्यं सत्। लोकेऽपि असन्नैव क्रियते। न सत् असत्, असतोऽकरणं असदकरणम्। इह लोकेऽसत् करणं नास्ति यथा "सिकताभ्यस्तैलोत्पत्तिः"। तस्मात् सतः करणादस्ति प्रागुत्पत्तेः प्रधाने व्यक्तम्।

---

[1] सां.का. -9वीं

[2] साङ्ख्यतत्वकौमुदी -9, पृ. 52

[3] युक्तिदीपिका कारिका -9

अतः सत्कार्यम्। "सदेव सद्भवति। असतः करणं नास्ति। यदि स्यात्तदा सिकताभ्यस्तैलं, कूर्मरोमेभ्यः पटप्रावरणं, वन्ध्यादुहितृभ्रूविलासः, शशविषाणं, खपुष्पं च स्यात्। न चास्ति तस्मादनुमीयते प्रधाने प्रागुत्पत्तेर्महदादिकमस्त्येव"। 'लोकेऽसतः करणं नास्ति, यथ शशविषाणादीनाम्। यदेव सद् घटादिद्रव्यं तदेव मृत्पिण्डादिना कारणविशेषेण क्रियते सतकार्यम्' इति।

उपादानग्रहणात् – "कारणव्यापारत् प्राक् सदेव कार्यम् 'उपादानग्रहणात्'। अर्थाद् उपादानानि कारणानि, तेषां ग्रहणं कार्येण सम्बन्धः। उपादानैः कार्यस्य सम्बन्धादिति यावत्। यदुक्तं कार्येण सम्बद्धं कारणं कार्यस्य जनकं, सम्बन्धश्च कार्यस्यासतो न सम्भवति, सत्कार्यमिति"[1]। "कारणेनाभिज्ञसम्बद्धानां कार्येणैव सम्बन्धात् नार्थान्तरत्वं कार्यस्य। अवयविप्रतिवेधादनुत्पन्नार्थत्वाच्च सत्कार्यम्"। कार्यार्थिभिरुपादानात् यथा वेमादिभ्यः पटः। तन्तवश्च पटादिभिरुपादीयन्ते तस्मात्तेभ्योऽप्यर्थान्तरं पट इति। एतेन सत्त्वं प्रत्युक्तम्। यद्यदर्थमुपादीयते तत्तस्मिन्नसत्। तथा वेमादिषु पट इति। उच्यते, न अवयविप्रतिषेधात्। प्रतिषिद्धस्तावदवयवी द्रव्यान्तरभूतस्तस्मादनुपपन्नार्थमेतत्।' अर्थिनोपादानस्य ग्रहणात्'। उपादानग्रहणात्, उपादानं (कारणं) तस्य ग्रहणात्। येनार्थी, स तदुपादानग्रहणं करोति। यथा दध्यर्थी क्षीरस्य, न तु जलस्य। तस्मात् सत्कार्यम्। 'उपादानग्रहणात्'

[1] सां.त.कौ. – १०८

(कारणग्रहणात्) येनार्थी स तदुपादानग्रहणं करोति। तन्निमित्तमुपादत्ते। तद्यथा दध्यर्थी क्षीरस्योपादानं कुरुते। यदि चाऽसत्कार्यं स्यात्तदा दध्यर्थी उदकस्याप्युपादानं कुर्यात्, न च कुरुते, तस्मात् प्रधाने महदादिकार्यमस्तीति। इह यदर्थं यदुपादीयते तस्य तदुपादानं कारणम्, यथा तैलस्य तिलम्। अत्र तैलं यदि न स्यात् कथं तस्योपादानस्य ग्रहणं तदर्थिभिः क्रियते। तस्मादुपादानग्रहणात् सदेव कार्यम्।

सर्वसम्भावाभावात्– 'असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद् भवेत्, न चैतदस्ति। अपि तु सम्बद्धः सम्बद्धेन जन्यत इति। उक्तञ्च प्रांचीन सांख्याचार्यैः–

"असत्त्वान्नास्ति सम्बन्धः कारकैः सत्त्वसङ्गिभिः।
असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।।"

'अर्थान्तरत्वसामान्यात् तन्तुवत् सर्वस्मात् कारणात् कार्यस्यासम्भवात् ग्रहणाग्रहणविकल्पाच्च सत्कार्यमिति। उपादानसामान्याद्धेमादिवदर्थान्तरं पटस्तन्तुभ्य इति ब्रुवतोऽर्थान्तरत्वसामान्यात्तन्तुवत्सर्वस्मातकारणात्कार्यस्य सम्भवः स्यात्, न त्वेवमस्ति। तस्मात् सर्वसम्भवाभावादसम्यगेतत्। "सर्वस्य सर्वत्र सम्भवो नास्ति। यथा सुर्वणस्य रजतादौ तृणपांशुसिकतासु अर्थात् सर्वस्य सर्वोत्पत्त्यभावात् सत्कार्यमिति"[1]। यद् यस्मिन् विद्यते तस्मादेव तदुत्पद्यते। यथा तिलेभ्यस्तैलं, दध्नो

---

[1] गौड़पादभाष्यम् - 9वीं का. पृ. 42

घृतम्। यदि साऽसत्कार्यं स्यात्तदा सर्वं सर्वतः सम्भवेत्ततश्च तृणपांसुवालुकादिभ्यो रजतसुवर्णमणिमुक्ताप्रवालादयो जायेरन्। न च जायन्ते। तस्मात् पश्यामः सर्वसम्भवाभावादपि 'सम्बद्धकार्यस्य सम्बद्धकारणजन्यत्वात् सत्कार्यमिति'।[1] सत्कार्यं भवेत् तदा सर्वस्य सर्वदा सर्वत्र सम्भवः स्यात्। न चैवम्। तस्मात् सदेव कार्यम्।[2]

**शक्तस्य शक्यकरणाद्** – "शक्तस्य शक्यकार्यजनानुकूल शक्तिमत्त्वात्सत्कार्यमिति"।[3] 'शक्तकारणनिरूपिता शक्ये घटादिकार्ये शक्तिः' (शक्तकारणनिष्ठा) सा शक्तिः सर्वत्र (सर्वनिरूपिता) वा स्यात्, शक्ये एव (शक्यनिरूपितैव) वा? तत्र सर्वत्र चेत्तदवस्थैवाव्यवस्था। शक्ये एव चेत्, कथमसति शक्ये तत्रेति वक्तव्यम्। ननु शक्तिभेद एव एतादृशो यतः किञ्चिदेव कार्यं जनयेत् न सर्वमिति चेद्, हन्त भोः, स शक्तिविशेषः कार्यसम्बद्धो वाऽसम्बद्धो वा असम्बद्धत्वे सैवाव्यवस्था? सम्बद्धत्वे नासता सम्बन्धो भवतीति सिद्धं सत्कार्यमिति। 'शक्तेन शक्योत्पत्तेः सत्कार्यमिति'।[4] शक्तो मृद्दण्डचक्रचीवररज्जुनीरादिकरणः उपकरणं वा शक्यमेव घटं मृत्पिण्डादुत्पाद्यते। तस्मात् सत्कार्यम्। शक्तकारणनिरूपिता शक्ये घटादिकार्ये शक्तिः शक्ये तत्र तिष्ठत्येव। शक्तस्य=शक्तिमतश्च कारणस्य मृदादेः, शक्यकरणात् शक्यस्य

---

[1] माठरवृत्तिः – 9वीं का. पृ. 12-13

[2] जयमंगला – 9वीं का. पृ. 74

[3] सां.त.कौ. 9वीं का. पृ. 55

[4] गौड़पादभाष्यम् – 9वीं का. पृ. 43

घटादेरुत्पादस्यैव करणात्, शक्तिनिरूपिता शक्ये शक्तिरस्तीत्यनुमीयते, न चाऽसति शक्ये शक्तिस्तत्राऽस्तीति वक्तुं शक्यते, अतः शक्यं कार्यं सदित्यर्थः। 'शक्तस्य शक्यप्रतिपादकत्वात् सत्कार्यमिति'[1] शक्यमिदमस्य, शक्तश्चायमस्येत्ययं नियमः। तद्यथा चक्षुषो रूपस्य। अस्ति चायं पटस्य वेमादीनां च नियमः। तस्माच्च सत्कार्यम्। सहकारिवत्तन्नियम इति चेत् स्यान्मतम्। यथापो वीजाङ्कुरस्योत्पत्तौ समर्था भवन्ति न काष्ठादग्नेर्वा। उभयं च तत्तासु न विद्यते। बीजादपां विच्छिन्नत्वात् रूपव्यवस्थानाच्च। तद्यथा रूपं विज्ञानोत्पत्तिहेतुत्वे सति न रूपं दृष्टमिति नेदानीं तत्सामान्यात् रूपमप्यरूपं भवति। एवं पटकारणत्वाद्वेमादयो न पट इति नेदानीं तन्तवोऽप्यपटः। शक्तं कारणं नाशक्तमित्येवमप्यवगन्तव्यम्। अन्यथोपहतशक्तेर्बीजादङ्कुरोत्पत्तिप्रसङ्गः। शक्तश्च को भवितुमर्हति, यः शक्तिमान्। तस्य शक्तिमतः शक्यस्य करणात्, शंकनीयस्य कार्यस्योत्पादनादित्यर्थः। एवं च तच्छंकनीयं तदि कारणे शक्तिरूपेणावस्थितं स्यात्। तस्मात् सदेवोत्पद्यते नासत।[2] शक्तः शिल्पी करणादिकारणोपादानकालोपायसम्पन्नः शक्यादेव शक्यं कर्म आरभते नाशक्यमशक्यात्। तद्यथा–शक्तः कुम्भकारः शक्यादेव मृत्पिण्डात् शक्यदण्डचक्रसूत्रोदकविदलतलादिभिः सम्पन्नो घटशरावोदञ्चनादीन्यारभमाणो

---

[1] युक्तिदीपिका- पृ. 68

[2] जयमङ्गला टीका पृ. 74

दृष्टः। न च मणिकादि, अशक्यत्वात्तावता पिण्डेन तस्य। यदि पुनः करणनियमो न स्यादशक्यादप्यशक्यमारभ्येत। तस्मात् सत् कार्यं स्यान्नासत्।

कारणभावाच्च सत्कार्यम् 'न चार्थक्रियाभेदोऽपि भेदमापादयति एकस्यामपि नानार्थक्रियादर्शनात्। नाप्यर्थक्रिया व्यवस्था वस्तुभेदे हेतुः तेषामेव समस्तव्यवस्थानामर्थक्रिया व्यवस्था दर्शनादिति' कार्यस्य कारणात्मकत्वात्। न हि कारणादभिन्नं कार्यं, कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेत्, कार्यस्य कारणाभेदसाधनानि च प्रमाणानि न पटस्तन्तुभ्यो भिद्यते, तन्तुधर्मत्वात् इह यत् यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्यं। धर्मश्च पटस्तन्तूनां, तस्मान्नार्थन्तरम्। उपादानोपादेयभावच्च नार्थान्तरत्वं तन्तुपटयोः, ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः, यथा घटपटयोः। उपादानोपादेयभावश्च तन्तुपटयोः, तस्मान्नर्थन्तरत्वमिति। नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात्। अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः। पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तरकार्याग्रहणात्। इह यद् यस्माद् भिन्नं तस्मात् तस्य गुरुत्वान्तरं कार्यं गृह्यते।[1] कारणं यल्लक्षणमेव तल्लक्षणमेव कार्यमपि, यथा यवेभ्यो यवाः, व्रीहिभ्योः, व्रीह्यः। यदाऽसत्कार्यं स्यात्ततः कोद्रवेभ्यः शालयः स्युः, न च सन्तीति, तस्मात् सत्कार्यम्।[2] असत्कार्ये कारणभावात्। असत्कार्योत्पत्यसिद्धेश्शशविषाणवद् असतो निरात्मकत्वाद् विशेषतः

[1] सां.त.कौ – ९वीं का. पृ. 55-56

[2] गौड़पादभाष्यम् – ९वीं का. पृ. 44

दुरुपपादात् सत्कार्यमिति।[1] कार्ये कारणभावो नास्ति। तद्यथा बन्ध्याद्याः। अस्ति चेह कारणभावस्तन्तुपटयोस्तस्मात्सत्कार्यम्। कारणान्तरात्कार्योत्पत्तिदर्शनादन्यत्र तद्बुद्धिरिति चेत्, स्यान्मतं प्राक्कारणान्तरात्कार्यान्तरस्यासत उत्पत्तिमुपलभ्य पश्चात्कारणान्तरे कारणबुद्धिर्भवतीति। एतच्चायुक्तम् अनभ्युपगमात्। कस्मात् उक्तत्वात्। संस्थानं कार्यं पटस्य, संस्थानं न पुरुष एवमसत्त्वाविशेषे पटः कार्यं न शशविषाणमिति। सामान्यविशेषभावात्। उक्तञ्च-

निरात्मकत्वादसतां सर्वेषामविशिष्टता।

विशेषणं चेद् भिन्नं ते सत्त्वमभ्युपगम्यताम्।।

तस्माद्युक्तमेतत्कारणभावाच्च सत्कार्यम् 'कारणस्य सत्त्वादित्यर्थः' अर्थात् कारणभावादिति कारणस्वभावात्। यत्स्वभावं कारण तत्स्वभावं कार्यम्, यथा स्निग्धस्वभावेभ्यस्तिलेभ्यः स्निग्धमेव तैलम्, मृदो मृत्स्वभावो घटः। यद्यसत्कार्यं स्यात्, असत्स्वभावेभ्यो ह्युत्पाद्येतेत्येवं सांख्यानां सदेवोत्पद्यत इति सिद्धान्तः।[2]कार्यं सदेव स्यात्। यल्लक्षणं कारणं तल्लक्षणं कार्यं स्यात्। यथा-कोद्रवेभ्यः कोद्रवाः व्रीहिभ्यो व्रीह्यः स्यु। यदि चाऽसत्कार्यं स्यात् तदा क्रोद्रवेभ्यः शालीनामपि निष्पत्तिः स्यात्। न च भवति। तस्मात्कारणभावादपि पश्यामः प्रधाने महदादि कार्यमस्तीति।

---

[1] युक्तिदीपिका - ९वीं का. पृ. 68-69

[2] जयमङ्गला - ९वीं का. पृ. 74

साधितमेवमेतैः पञ्चभिर्हेतुभिः सत् कार्यम्।[1] तत्र टीकाकारेण तत्त्वकौमुद्याः "कारणव्यापारात्प्रागपि" इत्याशयः व्याख्यानावसरे प्रकाशितः। ननु नैयायिकनयेऽपि इत्यादिशास्त्रेण नैयायिकाभिमतं सत्कार्यवाद निराकृतः। आचार्यैः उक्तं यत् तत्त्वकौमुदीकारेण यद्यपि पदं प्रयुक्तं तस्यार्थः वर्तते "कारणव्यापारोत्तरमपि कार्यं सत्, तत्रोत्तरकाले कार्यसत्तायां न तार्किकवैमत्यमिति कारणव्यापारात्प्रागापि कारणे कार्यं विद्यत इत्यस्माभिः साधनीयमतो नैयायिकतनयैः तनयवत् तदनुगामिभिरत्र सिद्धसाधनं न प्रदर्शनीयमित्यर्थः। स्वमतस्याऽदुष्टत्वव्यवस्थापनायान्यमतानां दुष्टत्वं प्रतिपादयितुमादौ बौद्धमतस्य दुष्टत्वमाह 'यद्यपि' इति।

### आचार्यवाचस्पतिमिश्रमते सत्कार्यवादसिद्धौ युक्तिप्रदर्शनम्

सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रस्य सर्वेषु दर्शनेषु अप्रतिहिता गतिरस्ति। अत एभिः सर्वेषु एव दर्शनेषु व्याख्याग्रन्थः प्रणीतः। सांख्यकारिकोपरि सांख्यतत्त्वकौमुदी अस्य महनीयः ग्रन्थः वर्तते। तत्र आचार्यमिश्रैः निरपेक्षभावनया सांख्यशास्त्रप्रतिपादिततत्त्वानामुपपादनेन किञ्चित् विशिष्टं व्याख्यानं विहितम्। यद्यपि तन्त्रान्तरेऽपि एभिः कार्यकारणवादसिद्धान्तं व्यवस्थापितं, तथापि सत्कार्यवादनिरूपणावसरे एभिः सांख्याभिमतयुक्तीनां प्रतिपादनं यादृशं विहितं तत्तु श्लाघनीयम् एव। तत्र तत्त्वकौमुदीकारेण असदकरणाद् इत्यस्य हेतोः व्याख्याने

[1] माठरवृत्तिः - ९वीं का. पृ. 13

उक्तं यत् "कारणव्यापारत्प्राग्" अर्थात् कार्योत्पत्तेः प्रागपि कार्यस्य सत्ता स्वकारणे भवत्येव। कार्यस्य सत्ता कारणे नास्ति इति स्वीक्रियते चेत् तर्हि केन कारणेन कस्य कार्यस्याविर्भावः भवति इति निर्णयः कर्तुं नैव शक्यते। पुनश्च कारणव्यापारात् पूर्वं कार्यस्यास्तित्वं कारणे न भवतीति स्वीक्रियते चेदपि समस्या तु अस्त्येव। यतोहि केनापि कारणेन कार्यसत्त्वं नहि कर्तुं शक्यते तथाहि उक्तं- **"असच्चेत् कारणव्यापारत्पूर्वं कार्यं नास्य सत्त्वं कर्तुं केनापि शक्यं, नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते"**[1] इति। अस्य व्याख्यानं विहितं टीकाकारेण **"पक्षधर्मत्वाभावात्कथमस्य हेतुत्वमिति"** शास्त्रेण पूर्वपक्षमुपस्थाप्य तन्निराकरणंकृतम्। अत्र पूर्वपक्षीनामाशयः वर्तते कार्यमिति पक्षः, सत्त्वम् इति साध्यम् असदकरणादिति हेतुः। कारणे कार्यविद्यमानस्य सद् धर्मस्य अभावात् कथमस्य हेतुत्वमिति। कार्यं सत् करणात्-क्रियामाणत्वाद् इत्यर्थः। यन्न सत् तन्न क्रियमाणं यथा नरविषाणादयः। अत्र अयं सिद्धान्तः यत् पक्षे साध्यसाधनयोः धर्मभावत्वं स्यात्। किन्तु अत्र नैयायिकानामाशयः वर्तते कार्ये पक्षे असद् करणत्वहेतुधर्माभावाद् अहेतुप्रसङ्गः, अत असदकरणाद् इति न सद् हेतुः। अत्र टीकाकारेण व्यतिरेकव्याप्त्या उक्तमतं निराकृतं करणाद्, अर्थात् क्रियमाणत्वाद्' यन्न करणं तन्न क्रियमाणं यथा नीलं पीतस्य करणत्वाभावाद् तन्न पीतम्। अत्र

[1] सां.त.कौ. -पृ. 105

परिशेषानुमानप्रयोगः टीकाकर्त्रा कृतः' अतः न दोषः। अग्रे पुनः स्पष्टयति "एतदभिप्रायेणैव व्यतिरेकव्याप्तिस्वरूपं स्पष्टयन् तस्यार्थमाह "असच्चेद्" इति। अस्माकं मते यद् विकारजातं तद् न शशविषाणवद् असत् स्वभावम्, अपितु सद् स्वभाववान् एव विकारः भवति। अत्र पुनः नैयायिकानां मतम् उत्पत्तेः प्राक् असत्त्वमन्तरं सत्त्वं घटवत् स्वीक्रियते चेदपि तदवस्थमेव। अतः टीकाकारेण उक्तं- "अथासत्त्वसमये तन्नास्ति तर्हि कस्य धर्मोऽसत्त्वं, नह्यविद्यमाने धर्मिणि तद्धर्मो विद्यमान इत्युपपद्यत इत्याशयेनाशङ्कां निरस्यति "तथापि" इति, सदसत्त्वयोर्धर्मत्वाङ्गीकारेपीत्यर्थः"। यतोहि धर्मिसत्त्वं विना धर्मस्य स्थितिः न सम्भवति अतः कारणव्यापारात् प्रागपि कारणे कार्यस्य सत्त्वं सिद्ध्यति।

अत्र कौमुदीकारोक्तं "असंबद्धेनातदात्मना"[1] इति। शास्त्रस्य व्याख्याने टीकाकारेणोक्तं असत्त्वधर्मिण कथम् असत्त्वरूपधर्मः स्यात्। असत्स्वरूपेण अर्थाद् धर्मिस्वरूपतयाऽविद्यमानेन चाऽसत्त्वेन सह सत्त्वं कथमपि न सम्भवति। अत एव उक्तं "धर्मिसंबद्धेन धर्म्यात्मना वा विद्यमानेन धर्मेणैव तदाश्रयत्वनियमान्नात्रासंबद्धेनाऽतदात्मना वाऽसत्त्वेन धर्मेण तदाश्रयत्वसम्भव इति तत्त्वम्"[2]।

[1] सां.त.कौ -पृ. 106

[2] सा.यो.टी.पृ-235

अत्र पूर्वपक्षिभिः पुनः आक्षेपः उपस्थापितः यत् कुलालादिव्यापारसाध्यं घटादिकार्यं कुलालादिव्यापारात्प्रागेव मृत्तिकादिकारणे विद्यमाने सति कुलालादिव्यापारस्य वैयर्थ्यं सिद्ध्यति, अत एव कारणव्यापारात्प्राग् मृत्तिकादिकारणे घटादिकार्याणां असत्त्वमेव। मृत्तिकां दृष्ट्वा न कोऽपि घटः इति व्यवहारः दृश्यते। कौमुदीकारेण कारणाच्चेत्यादि शास्त्रेण तस्य निराकरणं कृतम्। अस्य व्याख्यानं कृतं टीकाकारेण "चकारः पुनरर्थः', अर्थात् अस्य सतः कारणव्यापारात्प्रागपि व्यवहारायोग्यसूक्ष्मरूपेण सिद्धस्य कार्यस्य या व्यवहारयोग्यस्थूलरूपोपादनरूपाभिव्यक्तिः सा पुनः कारणात् कुलालादिव्यापारादेव" अभिव्यज्यते, अतः कारणव्यापारान्तरं कार्यस्य अभिव्यक्तिः न तु उत्पत्तिः यथा च **"इत्येवमभिव्यक्तिरेव साध्यत्यावशिष्यते नोत्पत्तिरित्यर्थः"**[1]।

उपादानग्रहणाद्- तत्र सत्कार्यवादपक्षे हेत्वन्तरमुपस्थापितं उपादानग्रहणाद् इति। अर्थात् कारणव्यापारात्प्राग् सदैव कार्यम् उपादानग्रहणाद्। तत्र कौमुदीकारेण **"उपादानैः कार्यस्य संबन्धाद्"**[2], इति यद् विवेचितं तस्य किञ्चित् विशिष्टं व्याख्यानं कृतं आचार्य शिवनारायण शास्त्रिणा- "कार्यम् उपादाने सद् उपादानेन सह संबद्धत्वाद् यद् यन्न सद् न तत् तेन संबद्धं यथा मृत्तिकया पटादिकम्" कार्येण संबद्धमेव कारणं कार्यजनकम्' इत्युक्त्या उत्पत्तेः प्राक् कार्यम्

---

[1] सा.बो.टी.पृ-236

[2] सां.त.कौ. -पृ. 107

उपादानसंबद्धं तज्जन्यत्वाद् यच्च नोपादानसंबद्धं न तत् तज्जन्यं यथा मृदः पटादिकम् इत्यनुमानम्", इति अनुमाने तज्जन्यत्वाद् इति हेतुः उपादानसंबद्धमिति साध्यम्, इत्यत्र कौमुदीकारेण अयं पक्षः उपस्थापितः यत् स्यादेतद् इत्यनेन यत् पूर्वपक्षीभिः विपक्षे बाधकाभावः, योहि उक्तः तन्निरासाय एव हेत्वन्तरं दीयते- सर्वसंभवाभावात् अर्थात् 'सर्वसंभवाभावाद्' इत्यनेन विपक्षे बाधकाभावादनुकूल तर्कः प्रदर्श्यते। तत्र कौमुदीकारेण व्यवस्थापितं "असंबद्धस्य जन्यत्वे असंबद्धत्वविशेषेण सर्वं कार्यजातं सर्वस्माद् भवेद्, न चैतदस्ति प्रत्यक्षसिद्धः लोके। तस्मान्नासंबद्धमसंबद्धेन जन्यतेऽपि तु संबद्धमेव संबद्धेन जन्यत इति, यथाहुः साङ्ख्यवृद्धाः-

असत्त्वे नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः,

असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः"[1] इति।

अद्वैतिनां मतं निराकरणाय आचार्येणोक्तं यद् भामत्यां वाचस्पतिमिश्रेण प्रपञ्चप्रत्ययस्य मिथ्यात्वं साधितं, तदपि न युक्तियुक्तं, अत्र न्यायवार्तिकतात्पर्य्यटीकायाः उद्धरणं दत्तं "नह्यनन्वयविनष्टयोः शालियवबीजयोः कश्चिद् विशेषोऽस्ति येनैकस्माच्छाल्यङ्कुरो नान्यस्माद्' [2] । इत्यादिना तात्पर्यटीकायामपि स्पष्टमेतद्, इत्याशयेनाह इत्यादि न्यायवार्तिकतात्पर्य्यटीकायाम्

---

[1] सां.त.कौ.- 108

[2] न्या.ता.टी. 4.1.18

इति, इत्यादि। एवंविधं दूषणजातमित्यर्थः। अर्थात् अद्वैतीनां मतं न्यायवार्तिकतात्पर्यटीकायामेव निराकरणं जातं अतः अत्र तमेव प्रमाणम्। अतः अद्वैतमतं तेनैवनिराकृतम्। अद्वैतीनां मते "ब्रह्मैव जगतः कारणम्" तन्मतं निराकरणाय आचार्येणोक्तं-शुक्तौ यद् रजतज्ञानं जायते तस्य नेदं रजतमित्युत्तरज्ञानरूपबाधकस्य सम्भवात् तस्य मिथ्यात्वं वक्तुं शक्यते, किन्तु अत्र घटपटादौ प्रपञ्चप्रत्यये न कोऽपि बाधकः अतः कथं मिथ्येति। अत्र वाचारम्भणश्रुतेः तात्पर्यमपि जगतः प्रपञ्चस्य एव मिथ्यात्वप्रतिपादने नास्ति। "वाचारम्भणविकारो नामधेयं मृतिका इत्येव सत्यम्" अस्याः श्रुतेः आचार्यैः साक्षाद् व्याख्यानं कृतं यत् तेनापि कार्यस्य कारणात्मकत्वमेव प्रतिपाद्यते न तु कार्यस्य मिथ्यात्वमिति। स्पृश्यते उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यम् इत्येव सत्यं प्रमाणप्रतिपन्नं न तु घटादिकं द्रव्यान्तरमिति।

**सत्यकार्यवादसिद्धौ सारबोधिनीटीकाकर्तुः मतप्रदर्शनं समीक्षणं च।**

अत्र तावत् साङ्ख्यदिशा सत्कार्यवादो विशेषेण विवेचयिष्यते। साङ्ख्यानां सत्कार्यवादसमर्थकं महत्त्वपूर्णं पद्यमिदमस्ति-

असदकरणादुपादानग्रहणात् सर्वसम्भवाऽभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्[1]॥

[1] सां.का.का- ९

अत्र यद्यपि यावत् परपक्षस्य निराकरणं न संभवति, तावत् स्वमते अदुष्टत्वव्यवस्थापनमपि न सम्भवति। अतः परपक्षे दुष्टत्वप्रदर्शनाय स्वपक्षे च साधुत्वप्रदर्शनाय आदौ। तत्त्वकौमुद्यां यद् बौद्धादिमतत्रयं निराकृतमेतदाशयं इत्थं प्रत्यपादि आचार्यः। तथाहि- इत्थम् अभावकारणवादम्, विर्वतवादम्, आरम्भवादम्, परिणामवादं चेति वादचतुष्टयं प्रदर्श्य सांख्यातिरिक्तवादानां प्रधानकारणत्वासाधकत्वादनुपादेयतां दर्शयितुमाह- तत्र पूर्वस्मिन् कल्पत्रय इति। तत्र-पूर्वोक्तेषु बौद्ध-वेदान्त-न्याय-सांख्य ऐषु चतुर्षुपक्षेषु, कार्यज्ञानेन यादृशं कारणं प्रधानं सिद्धं भवति तादृशं प्रधानम् आद्यपक्षत्रये नैव सिध्यतीत्यर्थः[1]। अनेन अस्य दर्शनस्य वैशिष्ट्यमपि सिद्धयति। यद्यपि न्यायदर्शनेऽपि कार्य दृष्ट्वा कारणस्यानुमानं भवति तत्र क्षित्यङ्कुरादिना कार्येण ईश्वरस्यानुमानं क्रियते घटपटादि कार्यस्य कारणत्वेन परमाणुः अनुमेयः वर्तते तथापि यादृशं कार्यस्यास्तित्वं उत्पत्ते प्राक् कारणे विद्यमानत्वं सांख्यैः साधितं तादृशं नान्यैः। अतः एतेषां वैशिष्ट्यं तु अस्त्येव। सांख्यदृष्ट्या कार्यमपि सत् कारणमपि सदेव वर्तते। अर्थात् अस्य जगतः आत्यन्तिकविनाशः नैव संभवति। अस्य जगतः कारणभूतस्य प्रकृतेः सिद्धिः अनुमानेनैव कर्तुं शक्यते। तथा हि- कीदृक् प्रधानं कार्यलिंगकानुमानबलेन सिध्यति यदन्यमते न सिध्येदिति।[2] पृथिव्यादि भूतानां

[1] सा.बो.टी. पृ-223

[2] सा.बो.टी. पृ- 223

शब्दादि तन्मात्राणां इन्द्रियादि कार्याणां च सुखदुखमोहात्मकत्वात् एतेषां यत् कारणं तदपि सुखदुखमोहात्मकं भवेदिति, अतः सत्त्वरजसतमसां साम्यावस्थारुपायाः प्रकृतेः अनुमानं कारणरूपेण भवति। अत एव उच्यते- सुखदुःखमोहभेदवत्स्वरूपाः, एवंविधा ये परिणामाः-पञ्च तन्मात्रादिरूपशब्दाद्याः, त एवात्मा-स्वरूपं यस्य तत् सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं तस्य भावस्तत्वम्। एवंविध हि जगत्कारणस्य प्रधानत्वं कार्यदर्शनात् सिध्यति तच्चान्यमते नोपपद्यत इत्यर्थः। लोके हि दृश्यते रक्ततनु एव रक्तपट रूपेण परिणमते न तु श्वेत तन्तुः। घटरूपपरिणामश्च मृत्तिकायाः एव भवति न बालुकादीनां अतः कारणे विद्यमानाः गुणाः एव कार्ये दृश्यते। अतः घटपटादिषु विद्यमानानां रक्तादि गुणानां दर्शनेन तत्कारणस्यानुमानम्। अर्थात् तादृश गुणविशिष्टमेव कारणं भवितुमर्हति इति अनुमानं कर्तुं शक्यते। अत एव उच्यते- यतः कार्यभूतानां शब्दादीनां कारणस्य परिणामस्वरूपत्वं मन्तव्यम्, घटादीनामिव मृत्पिण्डस्य, एवं तेषां शब्दादीनां सुखदुःखमोहरूपतया प्रसिद्धत्वेन कारणस्यापि अन्तर्लीनसुखदुःखमोहात्मकत्वमंगीकरणीयम्, पटस्य श्वेतरक्तनीलरूपत्वे तन्तूनामपि तथात्ववत्, अतः प्रधानस्यैव जगत्कारणत्वं सिध्यति, तस्यैवान्तर्लीनसुखाद्यात्मकत्वात्, तञ्च वैनाशिकादिपक्षत्रये नैवसिद्धं भवतीति। सुखाद्यात्मकं यत् जगत् तत् स्वकारणस्य सत्त्वरजस्तमः स्वरूपत्वम् 'अवगमयति'

इत्येवं व्याख्येयम्[1]। अत्र पुनः प्रधानमेव जगतः कारणमित्यत्र प्रमाणं किम्, अथ च अस्याः कारणभूतायाः प्रकृतेः सिद्धिः कथमिति जिज्ञासायां उच्यते। प्रधानस्यैव जगत्कारणत्वं साधनीयमित्यत्र किं बीजमित्यत आह- **सुखदुःखेति**। यतः जगतकारणस्य सुखदुःखमोहविशेषवत्स्वरूपपरिणामशब्दाद्यात्मकत्वम् अतः प्रधानमेव जगत्कारणमित्यर्थः।

ननु प्रधानस्य सुखदुःखमोहात्मकत्वं कथं निर्णीतं यद्दृष्ट्या सुखदुःखमोहात्मकस्य प्रपञ्चस्य कारणत्वमस्यानुमीयत इत्यत आह- प्रधानत्वं सत्त्वेति। सत्त्वरजस्तमः स्वरूपत्वं प्रधानत्वम् इत्येवं योजयन्ति[2]।

निरात्मकत्वादसतां सर्वेषामविशिष्टता।

विशेषणं चेद् भिन्नं ते सत्त्वमभ्युपगम्यताम्।।

तस्माद्युक्तमेतत्कारणभावाच्च सत्कार्यम्

'कारणस्य सत्त्वादित्यर्थः' अर्थात् कारणभावादिति कारणस्वभावात्। यत्स्वभावं कारण तत्स्वभावं कार्यम्, यथा स्निग्धस्वभावेभ्यस्तिलेभ्यः स्निग्धमेव तैलम्, मृदो मृत्स्वभावो घटः। यद्यसत्कार्यं स्यात्, असत्स्वभावेभ्यो ह्युत्पाद्येतेत्येवं सांख्यानां सदेवोत्पद्यत इति सिद्धान्तः।[3]

---

[1] सा.वा.टी. पृ- 224

[2] सा.वा.टी. पृ- 224

[3] जयमङ्गला - ९वीं का. पृ. 74

कार्यं सदेव स्यात्। यल्लक्षणं कारणं तल्लक्षणं कार्यं स्यात्। यथा–कोद्रवेभ्यः कोद्रवाः व्रीहिभ्यो व्रीह्यः स्युः। यदि चाऽसत्कार्यं स्यात् तदा क्रोद्रवेभ्यः शालीनामपि निष्पत्तिः स्यात्। न च भवति। तस्मात्कारणभावादपि पश्यामः प्रधाने महदादि कार्यमस्तीति। साधितमेवमेतैः पञ्चभिर्हेतुभिः सत् कार्यम्।[1] अनया रीत्या सत्कार्यासत्कार्यसम्बन्धे साङ्ख्यन्यायदर्शनयोरस्ति महान् मतभेदः। एतयोः वादयोः सन्दर्भ एव केचन सदेव सौम्येदमग्र आसीद् अथ चासदेव सौम्येदमग्र आसीदिति श्रुतिवाक्यद्वयमुदाहरन्ति। परन्त्वेतदुदाहरणं न युक्तियुक्तं प्रतीयते यतो ह्यसत्कार्यवादिनोऽपि नैयायिकाः "सदैव सौम्येदमग्र आसीदिति" श्रुतिं समर्थयन्ति। तत्र सच्छब्देनेश्वरबोधो जायते तन्मते। एवमेव बौद्धा यद्यपि प्रतीत्यसमुत्पादमुखेन कार्यकारणभावं स्वीकुर्वन्ति, परमेतेन ते सत्कार्यवादिन इति वक्तुं नोचितम्। असत्कार्यवादित्वमपि तेषां न भवति, यतो हि तत्त्वं तु भवति सदसद्विलक्षणम्। अनया रीत्येदं सिद्धं भवति। यत् साङ्ख्या न केवलं सत्कार्यवादिन एवापि त्वनीश्वरवादिनोऽपि वर्तन्ते। तन्मते प्रकृतिपुरुषयोश्चेतनाचेतनयोरपि पङ्गवन्धन्यायेन सम्बन्धो जायते। सृष्टिक्रमोऽयमविरतं प्रचलति। अत्र अस्या टीकायाः इदं वैशिष्ट्यं यत् टीकाकर्त्रा स्वमतपोषणाय भगवतः भाष्यकारस्य अन्ये आचार्याणां मतम् उपस्थापितं यथा "शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नाऽन्याऽसती वा

[1] माठरवृत्तिः – 9वीं का. पृ. 13

कार्यं नियतच्चेद्, असत्त्वाविशेषादन्यत्त्वाविशेषाच्च, तस्मात्कारणस्यात्मभूता शक्तिः शक्तश्चात्मभूतं कार्यम्"[1] इति "कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वाद्, लाघवाच्च, सा शक्तिः कार्यस्यानागतावस्थैवेत्यतः शक्तस्य शक्यकार्यकरणान्नसत उत्पाद इत्यर्थः, इत्येतत्समानानुपूर्वीकसांख्यसूत्रे विज्ञानभिक्षवः"[2]।

अत्र टीकाकारेण परिशेषानुमानेन कार्यस्य कारणात्मकत्वं साधितं यथा न पटः तन्तुभ्यो भिद्यते इति प्रतिज्ञा तद्धर्मत्वाद् इति हेतु। गुरुत्वान्तरकार्यग्रहणाद् अपि कार्यकारणभूतयोः तन्तुंपटयोः एकत्वं सिद्ध्यति। अर्थात् यथा प्रशस्तपादाचार्यैः प्रतिपादितं "तत्र जलभूम्योरित्याश्रयकथनं, पतनकर्मकारणमिति गुरुत्वस्य कार्यकथनम्"[3]। अर्थाद् गुरुत्वं नाम शीघ्रपतनकर्मकारणत्वं तन्तुपटयोः अभेदात्, अर्थात् तन्तुकारणनिष्ठगुरुत्वापेक्षया पटकार्यनिष्ठगुरुत्वभेदः गृहोत्वापि, कार्यकारणयोः अभेदः सिद्धिः जायत एव, टीकाकर्त्रा "अयं भावः" इत्यनेन शास्त्रेण तस्य विवेचनं कृतं "तुलादण्डकोणद्वयनिबद्धरज्ज्वालंबनं यच्छिक्यद्वयमस्ति तत्रैकत्र गुञ्जादि धृत्वाऽपरत्र शिक्ये तोलनीयं वस्त्वस्थाप्यते, तत्र यदि गुञ्जादिनिष्ठगुरुत्वेन समं गुरुत्वं तोलनीये भवति तदा तुलादण्डो नाप्युन्नतो

---

1 ब्र.सू.भा. –पृ. 2/1/18
2 सा.वां.टी.
3 सा.वां.टी.

नाप्यवनतो वा भवति, यदा तु गुञ्जाद्याश्रितगुरुत्वापेक्षयाऽधिकं गुरुत्वं तोलनीये भवति तदा तदाश्रितगुरुत्वकार्यावनतिविशेषणाधिकस्तुलादण्डोऽवनतो भवति, तथा च यदि पटस्तन्तुभ्यो भिन्नो भवेत् तदा तन्तुगुरुत्वकार्यापेक्षयाधिकः पटाश्रितगुरुत्वकार्योऽवनतिविशेषो गृह्यते तथा च न गृह्यते किन्तु तन्तुगुरुत्वेन यादृशोऽवनतिविशेषो जन्यते तादृश एव पटाश्रितगुरुत्वेनावनतिविशेषो जन्यते, तथा च समानगुरुत्ववत्त्वादत्र पटस्तन्तुभ्यां भिन्न इति"[1]। कूर्माङ्गदृष्टान्ते सत्कार्यवादं व्यवस्थाप्य यथा मिश्रपादैः "कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निस्सरन्ति चाविर्भवन्ति न तु कूर्मस्तदङ्गन्युत्पद्यन्ते प्रध्वंसन्ते वा"[2], इयमेव यथा मृत्सुवर्णखण्डस्य वा घटम् उपपाद्यो विशेषाः निस्सरत आविर्भावन्ता उपादयन्ता इति उच्यते निविशमानश्च तिरोभवन्तो इति उच्यते। एवमेव लोकव्यवहारः प्रचलति अतः विवृतं टीकाकर्त्ता "आविर्भावरूपविकाशशालिषु मृदादिषु सत्सु घटादय उत्पन्ना इति व्यवहारः, कार्यीयातीतावस्थारूपसंकोचशालिषु च मृदादिषु सत्सु घटादयः प्रध्वस्ता इति व्यवहार इति भावः"[3]। कौमुदीकारेण अत्र "एवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटो न तन्तुभ्योऽर्थान्तरं पटः"[4], इत्यनेन प्रतिपादितं यत् कार्यकारणयोः अभेदेपि कार्यस्य अधिष्ठानभेदाद् भेद प्रतीयते, तस्य

1 सा.वा.टी.
2 सां.त.कौं -114
3 वि.तो.टी. -पृ. 114
4 सां.त.कौं. 112

एवं प्रकारेण विवेचनमुपस्थापितं टीकाकारेण "तन्तुपटयोरभेदे पटस्य तन्त्वात्मकत्वेन स्वस्मात्स्वस्योत्पत्तेरसम्भवात् स्वस्मिंश्च स्वस्य प्रध्वंसाघटनादुत्पन्नः पटः प्रध्वस्तः पट इत्युत्पत्तिनिरोधबुद्धिर्न स्याद्, एवं च दृश्यमानावुत्पत्तिध्वंसावभिन्नेऽनुपपन्नौ सन्तौ तन्तुपटयोर्भेदं साधयत इत्यत्र फलितम्"[1]। अर्थात् तन्तुपटयोः भेदः उत्पादनत्वेन नष्टत्वेन दृश्यमानत्वात् एवमेव बुद्धिभेदेनापि यथा तन्तव पटश्च अयं इति ज्ञानवैलक्षण्यमपि तन्तुपटयोर्भेद साधकम्। रूपवत् रसवत् इति विभिन्नज्ञानवत् विषयत्वात् भेदवत्। कौमुदीकारेण अत्र पञ्चहेतुः उपस्थापितः कार्यकारणयोरभेदसाधकं ते च "क्रियांनिरोधबुद्धिव्यपदेशार्थ-क्रियाव्यवस्थाभेदाश्च"[2], टीकाकर्त्रा प्रतिपादितं भेदसत्वेऽपि "पारमार्थिकः भेदः" नास्ति एव इह वने तिलका इत्यनेन दृष्टान्तेन यथा तिलकाख्यां वृक्षाणां समूह एव वनपदवाच्यः, तिलकवनयोः रभेदेऽपि अभेद एव, तावद् एव तन्तुपटयोः हेतुभेदात् भेदभासमानत्वेऽपि अभेद एव, तत्र आचार्यवाचस्पतिमिश्रेण भामत्यां यथा प्रतिपादितं "अर्थक्रियायां च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तरं किञ्चिन्मिलिताः कुर्वन्तो दृश्यन्ते यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति'[3] इति, भामत्युक्तः प्रकारोऽप्यत्रनुसन्धेयः"[4]।

---

1 वि.तां.टी. –पृ.113
2 सां.त.कौ. 113
3 वें.भा. 1/2/15
4 वि.तां.टी. –पृ. 115

अत्र टीकाकर्त्रा भगवतः कपिलस्य "उत्पत्तिवद् वाऽदोषः"[1], अथ च भाष्यकारस्य मतमुपस्थापितं, एवञ्च तत् तत् पूर्वपक्षिनां मतं निराकृत्य स्वमतं व्यवस्थापितं "यथोत्पत्तेरुत्पत्त्यन्तरानभ्युपगमेन परमते नानवस्थादोषः- तथाभिव्यक्तेरप्यभिव्यक्त्यन्तरास्वीकारेण नास्मन्मतेऽप्यवस्थादोष इति सूत्रार्थः, विज्ञानभिक्षुस्तु यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेवेष्यते परैस्तथास्माभिरपि घटादभिव्यक्तेरप्यभिव्यक्तिः स्वरूपमेवेष्यते, ततो नानवस्थादोष, इत्येवं सूत्रार्थमभिधाय अथैवमभिव्यक्तेरभिव्यक्त्यनङ्गीकारे कारणव्यापारात्प्राक् तस्याः सत्त्वानुपपत्या सत्कार्यवादक्षतिः, इत्याशङ्क्य अस्मिन् पक्षे सत् एवाभिव्यक्तिंरित्येव सत्कार्यसिद्धान्त इत्याशयाद्, अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिरित्येवं समादधौ"[2]।

हेत्वन्तरमुपस्थाप्यते "कारणभावादि"ति तत्र कौमुदीकारेणोक्तं "कार्यस्य कारणात्मकत्वाद् नहि कारणाद् भिन्नं कार्यं, कारणं च सद् इति कथं तद् अभिन्नं कार्यं असद् भवेत्। तद् यथा न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वाद्"[3]। कारणभावाच्च इत्यस्य हेतोः व्याख्याने आचार्यः स्वाशयं इत्थं प्रतिपादयति घटः सदासद्, कारणभिन्नत्वात् कारणरूपवत् इति। अर्थात् कार्यस्य कारणात्मकत्वं तु प्रसिद्धमेव।

---

[1] सां.सू. 1/123

[2] सा.वो.टी.

[3] सां.त.कौ. - 110

अतः ये हि तार्किकाः वदन्ति कार्यकारणयोः भेदः, स अयुक्तः। उत्पत्तेः प्राग् कार्यस्य कारणभिन्नत्वेन अप्रसक्तमेव। अतः मिश्रः अत्र परिशेषानुमानमाश्रयति– "न पटः तन्तुभ्योर्भिद्यते तद्धर्मत्वात्।"[1] अतः वदति टीकाकारः– "पटस्तन्तुभ्यो न भिन्नः पदार्थः किंतु अभिन्नः एवेत्यर्थः। एवम् अग्रेऽपि न्यायांगानि योज्यानि।"[2] प्रयोगान्तरमपिदर्शितमत्र– "उपादीयते– कार्यजननाय गृह्यत इत्युपादानम्–कार्यस्य अनागतावस्थाश्रयीभूतं कारणम्, उपादेयम्=व्यवहारार्थिभिर्ग्रहीतुं योग्यं कार्यम्, इत्यर्थः।"[3] "इह यद् यत" इति उदाहरणं व्यतिरेकव्याप्तिपुरसरं प्रदर्शितं व्यापकस्य तद्धर्मत्वाभावस्य पटे निवृत्त्या व्याप्तस्य भेदस्य निवृत्त्याभेदसिद्धिरिति पक्षे तद्धर्मत्वरूपहेतुसत्त्वप्रदर्शनपरमुपनयवाक्य 'धर्मश्च पटस्तन्तूनाम्' इति निगमनवाक्यं 'तस्मान्नार्थान्तरम्' [4] इति। अत्र ग्रन्थकारेण युक्त्यन्तरमपि प्रदर्शितं, यथा कौमुदीकारेण प्रतिपादितं "उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावो यथा घटपटयोः"[5]। तत्र व्याख्याकारेण अस्य विवेचनं कृतं कार्योत्पत्तौ यद् उपादानं भवति तस्यैव ग्रहणमर्थीभिः क्रियते। अतः पटकार्यं प्रति तन्तु एव उपादानम्, तन्तुपटयोः उपादानोपादेय भवत्यपि इदं

---

[1] सा. वो. टी.

[2] सा. वो. टी.–पृ. 244

[3] सा. वो. टी.–पृ. 244

[4] सा.वो.टी.

[5] सां.त.कौ. - 11।

सिद्धं यत् कार्योत्पत्तेः प्राक् कारणे कार्यस्य सत्ता विद्यत एव, अतः उपादानोपादेयभावेऽपि कार्यं सत्। अत्र कार्यकारणयोः अनद्योत्तरत्वसाधनाय युक्त्यन्तरं प्रदर्शय स्पष्टयति यत् तन्तुपटयोः कारणकार्ययोः अर्थान्तरं स्वीक्रियते चेद् तन्तुपटयोः कार्यत्वं कारणकार्ययोः संयोगः कल्पनीय स च संयोगस्तु तन्तुपटयोः नांगीक्रियते। यथा च वदति टीकाकारः– "तत्र अप्राप्तयोः प्राप्तिः संयोगः, अप्राप्तिश्च विभागः।"[1] तथाहि–पटः तन्तुभ्योः न भिद्यते, तत्संयोगा नाप्रयत्वात्, यत् यतो भिद्यते तयोः संयोगो दृष्टः यथा पटयोः"[2] अतः वक्तुं शक्यते यत् कार्यकारणादभिन्नमेव भवति। पुनश्च आचार्यमिश्रः कार्यकारणयोः अभेदसाधने गुरुत्वान्तरकार्याग्रहणाद् इति हेत्वन्तरं प्रदत्तवान्। अत्र गृरुत्वस्य लक्षणं वर्तते– गुरुत्वं जलभूम्योः पतनकर्मकारणम्।" कारणनिष्ठ– गुरुत्वापेक्षया कार्यनिष्ठगुरुत्वं भिन्नं भवति। तस्य यत् अधः पतन विशेषावनति रूपं कार्य तत् तु पटे कार्ये नास्ति। यतोहि कारण तन्तुभ्यः निर्मितस्य पटस्य गुरुत्वं तन्तोः गुरुत्वाद् अभिन्नैव वर्तते। अत एव टीकाकारः वदति–"पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तर प्रयुक्तस्वाश्रिततुलादण्डाद्यवनतिविशेषग्रहणायोग्यत्वात्, गुरुत्वान्तरयुक्तस्वर्णादिवत् "[3] इति।

---

[1] सा. वां. टी.–पृ. 244

[2] सा. वां. टी.–पृ. 244

[3] सा. वां. टी.–पृ. 246

अत्र पुनः टीकाकारः "एवमभेदसिद्धे तन्तव एव" इत्यस्य रहस्यं स्फोरयति- तन्तुपटयोः एक्ये स्वीकृतेऽपि इमे तन्तवः पटश्चायम्" इति अभेद प्रतीतिः भवितुमर्हति इति शंका या स्याद् अतः हेतो अस्मन्मते तन्तुः संस्थानभेदेन अवस्थान्तरं प्राप्तिताः भवन्ति। अतः वदति च- "पटस्तन्तुभ्यो भिद्यते, तत्रोत्पन्नत्वेन तत्र नष्टत्वेन च प्रतीयमानत्वात्, यो न भिद्यते स तत्रोत्पन्नो न भवति, यथा तदन्वयः" एवं पटस्तन्तुभ्यो भिद्यते बुद्धिभेदात्, व्यपदेशभेदाश्च इत्यादिप्रयोगैः पूर्वोक्ताभेदसाधकावीतप्रयोगान् सत्प्रतिपक्षितान् वदतां तार्किकाणां मतं तावत् खण्डयति- स्वात्मनीति।"[1] तन्तुपटयोरभेदः स्वीक्रियते चेत् तर्हि, पटस्य तन्त्वात्मकत्वात् स्वस्मात् स्वस्योत्पत्तिः। स्वस्मिन् च स्वस्य नाशः इति न संभवः। अत एव पटः तन्तुभ्यो भिन्नः इति टीकाकाराणामाशयः। अतः अनुमान वाक्यं दर्शितं- "पटस्तन्तुतो भिन्नः तत् उत्पन्नत्वेन तत्र नष्टत्वेन च दृश्यमानत्वात्, यो न भिन्नः, न स तत उत्पद्यते, यथा तन्तवः"[2] इत्येवं तन्तुपटयोर्भेदः साधितः। अत्र टीकाकारैः नैकैः उद्धरणैः कार्यकारणयो भेदः प्रदर्शितः। यथा- बुद्धिभेदात् तन्तुपदयोः भेदः व्यपदेश भेदात् तन्तुपदयोः भेदः अर्थक्रियाभेदात् तन्तुपटयोः भेदः अर्थक्रियाव्यवस्थातः तन्तुपटयोः भेदः। विभिन्नार्थसाधकत्ववत् तन्तुपटयोः भेदः, प्रावरणादित्वात् तन्तुपटयोः भेदः प्रावरणादि कार्यभेदवत्त्वाच्च तन्तुपटयोः भेदः

---

[1] सा. वां. टी.-पृ. 247

[2] सा. वां. टी.-पृ. 247

सिद्ध्यति। पुनश्च तन्तुपटयो अभेदसाधने यो हि तद्धर्मत्वात् इति हेतुः प्रदत्तः तत्रापि टीकाकृ : सत्प्रतिपक्षं प्रदर्श्य कार्यकारणयोः भेदः साधितः। अस्मिन् प्रसंगे आचार्यः मिश्रः गीतायाः प्रमाणं प्रस्तौति "नासतो विद्यते भावो नाभावो विद्यते सतः" इत्यस्य व्याख्यानेऽपि टीकाकारः वदति- सदसतोरेकत्रसमावेशाभावादित्यर्थः। लोके यो हि घटकुण्डलादयः मृत्कनकादिभ्यः उत्पद्यन्ते इति व्यवहाराः भवन्ति सः मृत्कनकादीनां अविर्भावः विकासशीलः वर्तते। तेषां च कार्यरूपाणां घटकुण्डलादीनां तिरोभावरूपसंकोचः जायते तदा मृत्कनकादिरूपेण व्यवहारो भवति। एवमेव बुद्धिभेदेनऽपि यथा- पटस्य पूर्वावस्था कृते तन्तु इति व्यवहारः भवति पटस्य च वर्तमानावस्था पटोऽयमिति व्यवहारः प्रसिद्धः। "विभिन्न प्रत्ययविषयत्वात् तन्तुपटर्योभेदः इति वार्त्तिकस्य मतं अपास्तं टीकाकृद्भिः। तथाहि- एकस्मिन् विलक्षणबुद्धिबोध्यस्योपपन्नत्वात् इत्यपि बोधव्यम्।" व्यपदेश भेदादपि कार्यकारणयो भेदः न सिद्ध्यति तथा हि प्रतिपादयति- "तिलकनामतरुसमुदायस्यैव वनत्वेन तिलकवनयोरभेदेऽपि यथाऽऽधाराधेयव्यवहारस्तथा तन्तुपटयोरभेदेऽपि आधाराधेयव्यवहारोपपत्तेर्व्यप-देशभेदस्य भेदासाधकत्वादित्यर्थः।"[1] अर्थक्रिया भेदादपि भेदोऽसिद्धः, उक्तं हि-

[1] सा. वो. टी.-पृ. 250

"यत्र यत्र विभिन्नकार्यकारित्वं तत्र तत्र वस्तुभेदः"[1] इति व्याप्तिर्न सार्वत्रिकी, वह्न्यादौ व्यभिचारादिति भावः। उक्तदोषाणां परिहारः इत्थं क्रियते आचार्यः- आविर्भावस्यापि प्रागनभिव्यक्तिमभ्युपगच्छाम इति तदाविर्भावाय कारणव्यापारः आवश्यक इति न कारणव्यापारवैयर्थ्यमिति चेत्, तर्हि आविर्भावत्वाविशेषाद्, "यदनभिव्यक्तं तदेवाविर्भवति इति सिद्धान्ताच्च अनभिव्यक्तस्य आविर्भावस्य आविर्भावोऽपि प्रागनभिव्यक्त इति तस्यापि अन्य आविर्भावो वक्तव्यः, एवं तस्य तस्य अन्योऽन्य इति न कापि विश्रान्तिः।"[2] अर्थात् यो हि आविर्भावः ततः प्राक् कार्यस्य अनभिव्यक्तिः इति स्वीक्रियते चेदपि कार्यस्य अभिव्यक्तये कश्चित् व्यापारः कल्पनीयः भवति। तेनापि यत् अनभिव्यक्तं तदेवाविर्भवति इति स्वीकारे अनभिव्यक्तस्य आविर्भावः आविर्भावोऽपि प्राक् अनभिव्यक्तः इति अनवस्था आपतति। अतः एतदेव वक्तव्यम् यत्-"तन्तुभ्योऽसन् पटः कारणव्यापारेण नोत्पाद्यते किं तु तन्तव एव आविर्भूतपटस्तेन क्रियन्ते इति यद् वचस्तत् प्रमाणविधुरमिति सरलार्थः।"[3] इति। अत्र इदं निष्प्रपंञ्चं वक्तुं शक्यते यत् यदि कार्यकारणयोर्भेदः वादिनां अभेदवादिनां च मते दोषः समानः स्यात् तर्हि प्रतिवादिनां कृते दोषः नैव देयः। उक्तं हि- "यश्चोभयोः समो दोषः परिहारोऽपि

---

[1] सा. वां. टी.-पृ. 250
[2] सा. वां. टी.-पृ. 251
[3] सा. वां. टी.-पृ. 251

वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे।"[1] अत्र टीकाकारः पूर्वपक्षिणां मतं निराकृत्य कार्यस्य च परिणामः साधितः– अर्थात् कारणं कार्यरूपेण परिणमते न तु उत्पद्यते। पुनश्च नैयायिकानां मतमपि अत्रैव व्यवस्थितं तथाहि– "उत्पत्तिर्नाम आद्यक्षणसम्बन्धः, स च स्वरूपसम्बन्धविशेषः, न तु संयोगमात्रम्, गुणक्रियादेस्तदसंभवात्, तयोश्च उत्पत्तिव्यवहारस्य सर्वसिद्धत्वात्"[2] नैयायिकाः तावत् पदादीनां कार्याणां उत्पत्तिं स्वीकुर्वन्ति। पटादिनां उत्पत्तिः स्वीक्रियमाणे तेषां विनाशोऽपि अवश्यमेव सम्भवति। अतः कार्याणां उत्पत्तौ विरोधः दर्शितः शिवनारायणशास्त्रिणा तथाहि– "पटशब्देन पटत्वविशिष्टस्यैव उत्पत्तिमतोऽप्यभिधानात् चैकदा विनाश प्रतियोगित्वासंभवेनाऽयोग्यत्वादित्यर्थः:"[3] पुनश्च टीकाकारः निष्कर्षरूपेण प्रतिपादयति यद् कार्याणां उत्पत्तेः प्राक् कारणे अविद्यमानता स्वीक्रियते चेत् सत्कार्यवादभंगप्रसंगः आपतति, उत्पत्तिः स्वीक्रियते चेदपि सिद्धान्तस्य हानिः। कारणे अविद्यमानस्य अभिव्यक्तिस्वीकारेऽपि सत्कार्यवाद- भंगप्रसंगः, अभिव्यक्तस्य अभिव्यक्त्यंगीकारेण अनवस्थाप्रसंगः। अतः उत्पत्ते प्राक् कार्य कारणे सूक्ष्मरूपेण वर्तते। तेषामेव कार्यरूपेण अभिव्यक्तिः भवति। कार्याणां च स्वकारणे प्रत्यावस्थायां लयो जायते न तु विनाशः। अतः कार्य

---

[1] सा. वां. टी.-पृ. 25।

[2] सा. वां. टी.-पृ. 252

[3] सा. वां. टी.-पृ. 252

सत् तथाहि- "न चैवं सति कारणव्यापारेण या सूक्ष्माया अभिव्यक्तेरभिव्यक्तिः सापि पूर्वं सूक्ष्मा सत्येव अभिव्यञ्जते, इत्युपेयम्, अन्यथा असत्कार्यवादप्रसंगात्, एवं तस्याः अभिव्यक्तेरन्याऽभिव्यक्तिरवश्यंभाविनीत्यभिव्यक्तेरप्यभिव्यक्त्यं गीकारेणाऽनवस्था पत्तिरिति शंक्यम्, सदैव सोम्येदमग्र आसीत्"[1] इति।

इति तृतीयोऽध्यायः

[1] सा. वां. टी.-पृ. 254

# चतुर्थोऽध्यायः

**सृष्टिप्रकरणम्**
**वैदिकदर्शनेषु सृष्टिप्रक्रिया**
**सांख्याभिमतसृष्टिविचारः**
**सृष्टिविषये वाचस्पतिमिश्रस्याभिमतम्**
**सारबोधिनीटीकाकारमतसमीक्षणम्**



# चतुर्थोऽध्यायः

## वैशेषिकदर्शने सृष्टिप्रक्रिया

चित्रविचित्रेयं सृष्टिर्वस्तुतः अतीव रहस्यात्मिका अतो मननशीलोऽयं जिज्ञासु मानवः अस्मिन् विषये जिज्ञासोपजिज्ञासया समाधिनोपसमाधिना स्वीयां जिज्ञासां न कथमपि उपशमयितुमलम् एतद् विचार्य ऋषिमहर्षिभिः स्वीयया प्रखरमेधया परमात्मसाहाय्येन सर्वाणि रहस्यानि विज्ञाय, मानव-मात्र-कल्याणाय उपदिदेश तेष्वेव सृष्टिसंरचनाप्रलयश्च वर्त्तते। यद्यपीदं सत्यं यद् महर्षि-कणादोक्तवैशेषिकसूत्रेषु तु सृष्टिप्रकारः प्रलय=संहारप्रकारो वा न क्वचिदपि स्पष्टमुपलभ्यते परं आचार्य प्रशस्तपादेन काणादीयं सूक्ष्ममनोभावं केषाञ्चित् सूत्राणां माध्यमेन अनुनिशम्य पृथिव्यब्जतेजवायु-पदार्थ-निरूपणानन्तरमेतेषामेव हि परमाणूनां संघातेन सृष्टिः विघातेन च प्रलयः अतः सृष्टिप्रलयविचारोत्थापितः। अनन्तरं तमेव ग्रन्थमनुसरद्भिः भाष्यकारैः श्रीधराचार्यव्योमशिवाचार्यादिभिः स्व-स्व टीकायां भाष्ये वा प्रशस्तपादीयमभिमतमेव विवेचितं तदेवेहोपस्थाप्यते-पञ्चदशनिमेषाः काष्ठाः, त्रिविंशतिः काष्ठाः कला, पञ्चदशकलाः नाडिका,

त्रिंशत्कलामुहूर्त्तः त्रिंशत्मुहूर्त्तकाहोरात्रः पञ्चदशाहोरात्राः पक्षः। द्वौ मासर्तुः, षट् ऋतवो द्वादशमासाः वा संवत्सरः ऋतुत्रयेणोत्तरायणम्, ऋतुत्रयेण दक्षिणायनम्, उत्तरायणं च देवानां दिनम्, दक्षिणायनं रात्रिः, तथाभूताहोरात्रशतरात्रेण षष्ठ्यधिकेन वर्षम् द्वादशसहस्रैश्च वर्षैश्चतुर्युगम्। चतुर्युगसहस्रपरिमितं ब्रह्मणो दिनम्।तथा च-

**मानुषेनैकवर्षेण देवानां दिनमुच्यते।**

**तेषां शतत्रयं षष्ठियुक्तं वर्षस्तु देवतः॥**

**देववर्षसहस्त्राणि द्वादशाहश्चतुर्युगम्।**

**चतुर्युगसस्रन्तु ब्रह्मणो दिनमुच्यते॥**

इत्यादि स्मृतिवचनानि ब्रह्मणो दिनपरिमाणे प्रमाणम्। इत्यनेन मानेन वर्षशतस्यान्ते वर्तमानस्य ब्रह्मणो मुक्तिकाले संसारे नानास्थानेषु भूयोभूयः शरीरादिपरिग्रहेण खिन्नानां गर्भवासादिना विविधदुःखेन दुःखितानां प्राणिनां किञ्चित्कालं-विश्रामार्थं दुःखोपशमार्थं सकलभुवनपतेः महेश्वरस्य संजिर्हीषा भवति। तदनन्तरं शरीरेनिद्रयमहाभूतारम्भकाणां सर्वेष्वात्मसु समवेतानामदृष्टानां शक्तिप्रतिबन्धः स्यात् तस्मिन् सति अनागतानां शरीरेन्द्रियमहाभूतानामुत्पत्तिः। उत्पन्नानां च विनाशार्थं महेश्वरेच्छया आत्मनां परमाणूनाञ्च संयोगेभ्य परमाणुषु क्रियाः जायन्ते। ततः शरीराणामिन्द्रियाणां च ये परम्परया कारणभूताः परमाणवः तेषु विभागा भवन्ति। संयोगनिवृत्तौ सत्यां तेषामापरमाण्वन्तो नाशः। एवमेव

पृथिव्यब्तेजो वायूनामपि अनेनैव रीत्या महाभूतानामुत्तरोत्तरविनाशेन पूर्व-पूर्व-विनाशः समुत्पद्यते। तथाहि जलस्यावस्थितेः पृथिव्या विनाशो एवं तेजसः स्थितेऽपि जलस्य विनाशः वायोरवस्थिते तेजसो विनाशः ततश्च प्रविभक्ताः परमाणवः अवतिष्ठन्ते। एतेषां धर्माधर्मभावनाख्यसंस्कारश्चानुविद्धआत्मनश्च ब्रह्मणो वर्षशतं यावदवतिष्ठन्ते। अयं संहारक्रमः। ततः पुनः आत्मनां सुखदुःखानुभवोत्पत्तये महेश्वरस्य सिसृक्षा जायते। ततः सर्वेष्वात्मसु विद्यमानानि अदृष्टानि वृत्तिं लभन्ते, तदपेक्षेभ्यः आत्मपरमाणुसंयोगेभ्यः पवनपरमाणुषु कर्माण्युत्पद्यन्ते। पवनपरमाणवस्तत्र समवायिकारणम्। लब्धवृत्यदृष्टवदात्मपरमाणुसंयोगोऽसमवायिकारणम् अदृष्टं निमित्तकारणम् एवं कर्मोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगेभ्यश्च द्व्यणुकानि जायन्ते। तदनुत्र्यणुकानीत्यनेन क्रमेण महान् वायुः समुत्पद्यमानः आकाशे दोधूयमानो वेगातिशययुक्तस्तिष्ठति। तदनन्तरं तस्मिन्नेव वायो अद्भ्यः परमाणुभ्यः द्व्यणुकादिक्रमेण महान् सलिलनिधिरुत्पन्नः सर्वत्र पोप्लूयमानस्तिष्ठति। ततस्तस्मिन्नेव जलधौ पार्थिवेभ्य परमाणुभ्यो महापृथिवी समुत्पन्ना स्थिरस्वभावावतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तेजसेभ्यो अणुभ्यो द्व्यणुकादिक्रमेणोत्पन्नो महांस्तेजोराशिः देदीप्यमानस्तिष्ठति। यद्यपि पयः पावकयोः स्वाभाविको विरोधस्तथाप्यदृष्टवशेनाधाराधेयभावः। एवमुत्पन्नेषु महाभूतेषु

महेश्वरस्य संकल्पमात्रात् महदण्डमारभते। तस्मिन्नण्डे चतुर्वदनकमलं सर्वलोकपितामहं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ.क्ते। स च महेश्वरेण विनियुक्तो ब्रह्मा अतिशयित ज्ञानवैरागयैश्वर्यसंपन्नः प्राणिनां कर्मविपाकं विदित्वा कर्माणुगुणज्ञानभोगायुषः सुतान् दक्षादीन् प्रजापतीन् मानसान् मनस्संकल्पप्रभवान् मनून् देवानृषीन् पितृगणान् मुखबाहूसपादितश्चतुरो वर्णान् अन्यानि चोच्चावचानि क्षुद्रक्षुद्रतराणि च भूतानि सृष्ट्वा कर्म अनुरूपैः धर्मज्ञानवैराग्यैश्वर्यैर्योजयति इत्ययं सृष्टिक्रमः।

अत्र युक्तिरेषा परमाणुसद्भावे ततो जगत्सृष्टौ चोक्ता कन्दल्यामणुपरिमाण तारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात्। महत्परिमाणतारतम्यवत्। यत्रेदं विश्रान्तं ततः परमाणुर्नास्ति स परमाणु, स चैको न जनकः। एकस्य नित्यस्य चारम्भकत्वे कार्यस्य सन्ततोत्पत्तिः स्यात् अपेक्षणीयाभावात् अविनाशित्वात् प्रसज्यते। आश्रयविनाशावयवविभागस्य विनाशहेतोरभावात्। त्रयाणां परमाणूनामारम्भकत्वं च न सम्भवति। अतः महत् कार्यद्रव्यस्योत्पत्तौ स्वपरिमाणापेक्षया अल्पपरिमाणस्य कार्यद्रव्यस्यैव सामर्थ्यदर्शनात्। त्र्यणुकं कार्यद्रव्येणैव जायते महत्परिमाणत्वात् घटवत्। इत्थञ्च त्रयाणामेकस्य चारम्भकत्वे प्रतिक्षिप्ते द्वाभ्यामेव परमाणुभ्यामारभ्यते यत् तत् द्वयणुकमुच्यते। द्वाभ्यां द्वयणुकाभ्यां त्र्यणुकोत्पत्तौ त्र्यणुकस्य महत्त्वं न स्यात्। अवयवबहुत्वस्यापेक्षितत्वात्

अतस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमिति। न चैवं सति द्व्यणुकानामेव घटारम्भकत्वापत्तिः घटस्य भंगेऽल्पतर भावदर्शनेन तयैवारम्भकत्वात्, अतस्त्र्यणुकादिक्रमेण घटाद्युत्पत्तिः, "अत्रेदं चिन्तनीयम् त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु, परमाणुभ्यामनारम्भस्तु सिद्धान्तीनां द्व्यणुकाभ्यामनारम्भ इव मानाभावात्। फलबलेन त्रयाणामेव युगपद्द्रव्यारम्भकसंयोगसंकल्पनात्।"

न्यायवैशेषिकदर्शनसंमतेस्मिन् ईश्वराधिष्ठितेभ्यः परमाणुभ्यो जगत्सृष्टिरिति पक्षे वेदान्तिभिरुद्भावितान् दोषानिदानीं पर्यालोच्यते।

**न्यायदर्शने सृष्टिप्रक्रिया**

न्यायदर्शने चतुर्थेऽध्याये **अभावात्भावोत्पत्तिर्नानुपमृद्या प्रादुर्भावात् इत्यादि सूत्रैः शून्यमेव जगदुपादानमिति मतमनुद्य दूषयित्वा ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्, न पुरुषकर्माभावे फलानिष्पत्तेः, न तत्कारितत्वादहेतुः।**[1] इति त्रिभिः सूत्रैः ईश्वरस्य जगत्कारणत्वं स्थापितं तथाहि पुरुषोऽयं समीहमानः नावश्यं समीहाफलमवाप्नोति तेनानुमीयते पराधीना पुरुषस्य कर्मफलप्राप्तिः इति यदि परापेक्षां विना पुरुषः कर्मफलभोगे समर्थः स्यात् न कदाचित् निष्फला क्रिया भवेत् तस्माद् यदधीना पुरुषस्य कर्मफलप्राप्तिः स ईश्वरः कारणम् इति प्रथमस्य सूत्रस्यार्थः। ईश्वराधीना चेत् फलनिष्पत्तिः स्यात् तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्यते ततश्चकर्मलोपः स्यात् इत्याक्षेपयुक्तं

[1] न्या. द. 4/1/19-21 (वात्स्यायनभाष्य)

द्वितीयः सूत्रार्थः। न ब्रूमः पुरुषकर्म अनपेक्षः ईश्वरः कारणमिति अपितु पुरुषकर्म ईश्वरोऽनुगृह्णाति, फलाय यतमानस्य पुरुषस्येश्वरः फलं संपादयति तस्मादीश्वरकारितत्वात् पुरुषकर्माभावे फलानिष्पत्तेरित्यहेतुरिति तृतीयसूत्रार्थः।

अस्मिन् सृष्टिप्रकरणे वार्तिककारोद्योतकराचार्येण महता प्रपञ्चेन ईश्वरस्य जगत्कारणत्वमुपपादितं सर्व संकलय्य संग्रहेणात्र लिख्यते, तत्कारितत्वात् इति ब्रुवता। सूत्रकारेण निमित्तकारणमीश्वर इत्युपगतम्भवति। यच्च निमित्तं तदितरयोः समवायिकारणासमवायिकारणयोरनुग्राहकं यथा तुरीयवेमादि तन्तूनां तत्संयोगानां च ईश्वरश्चेज्जगतो निमित्तं जगतः साक्षादुपादानकारणं किमिति चेत् परमसूक्ष्मं परमाणुसंज्ञितं पृथिव्यादिद्रव्यम्। परमाणुकर्माणि प्राक् प्रवृत्तेः बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति यथा वास्यादिवदिति यथा वास्यादि अचेतनं बुद्धिमता तक्ष्णा अधिष्ठितं प्रवर्तते तथा अचेतनानि परमाणुकर्माणि जगत्सृष्टौ प्रवर्तमानानि बुद्धिमत्कारणाधिष्ठितान्येव प्रवर्तन्ते इति। ये परमाणून् पुरुषकर्माधिष्ठितान् जगतः कारणत्वेन वर्णयन्ति तान् प्रति ब्रूमः परमाणवः प्रवर्तमानाः सदा प्रवर्तेरन्। अथ कालविशेषापेक्षाः प्रवर्तन्ते कालस्याप्यचेतनत्वात् बुद्धिमन्तमधिष्ठातारमन्तरेण प्रवृत्तिर्दुर्घटा अत एवाधिष्ठातेश्वरोऽपेक्षितः एवं धर्माधर्मौ वृद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः कारणत्वात् वास्यादिवत् न चात्मैवाधिष्ठाता धर्माधर्मयोरिति वाच्यम्। न

हि यस्य धर्माधर्मौ स एव तयोरधिष्ठाता भविष्यतीति युक्तम् शरीरोत्पत्तेः प्राक् तदसम्भवात् शरीरोत्पत्तेः प्राक् अज्ञोऽयमात्मा उपलम्भयोग्यान् रूपादीनपि तान्नोपलभते कुत उपलम्भः नह्यत्र धर्माधर्मावुपलप्स्यते। न च धर्माधर्माभ्यामेवाधिष्ठिताः परमाणवः प्रवर्तन्त इति वाच्यं धर्माधर्मयोरप्यचेतनत्वात् न हि किञ्चिदचेतनं स्वतन्त्रतया इतराधिष्ठापकं दृष्टम् तस्मात् जगत् सृष्टिहेतु धर्माधर्माधिष्ठातृतया ईश्वरः सिध्यति। ननु क्रियावतामेव कारणत्वं लोके दृश्यते ईश्वरस्य तु क्रियाशून्यत्वात् अकारणत्वमिति चेत् परिस्पन्दरूपक्रियाशून्यत्वेऽपि आख्यातवाच्यज्ञानचिकीर्षाप्रयत्नक्रियावत्त्वादीश्वरस्य कारणतोपपत्तेः। किञ्च परिस्पन्दरूप क्रियाशून्यानामपि कारणत्वं लोके दृश्यते। यथा कदाचिद् द्रव्याणि उपरतक्रियाणि द्रव्यमारभन्त इति निष्क्रियाणामारम्भकत्वम्। उत्पन्नेषु क्रियापरतौ द्रव्योत्पत्तेरिदमुदाहरणम्। क्वचिदनुत्पत्तक्रियेष्वपि द्रव्येषु पूर्वद्रव्योपरतौ द्रव्यान्तरोत्पादौ दृश्यते यथा एकावयवविभागे द्रव्यनिवृत्तौ शेषाणि द्रव्यान्तराणि द्रव्यमारभन्त इति न्यायेन। कानिचित् पुनः क्रियावन्त्यारभन्ते यथा अन्यतरकर्मजात् नोंदनात् संयोगात् निवृत्ति कर्माणि इतरस्मिन् द्रव्ये द्रव्यमुत्पद्यते।

ननु ईश्वरश्चेत् कर्ता स किं सापेक्ष निरपेक्षो वा यदि सापेक्षः यदपेक्षं प्रसंगं करोति तस्याकर्त्तेति कृत्वा अन्यत्रान्यकर्तृत्वं स्यात् तदा पुरुषकर्मणो वैफल्यं स्यादिति चेन्न। नायं नियमो यो येन करोति स तन्न करोतीति। यथानेकः निपुणः

शिल्पः पुरुषः कारणान्तरसापेक्षवास्यादिकार्यं करोति। वास्यादिसापेक्षः दण्डादि करोति दण्डादि सापेक्षो घटादि। न च पर्यायेण कतृत्वे सति अकर्तृत्वम् तथा ईश्वरोऽपि धर्माधर्मौ उपादानशरीरे सुखदुःखादि आत्ममनः संयोगः शुद्धाशुद्धो अभिसन्धिसाधनश्च धर्माधर्मौ सुखदुःखस्मृत्यपेक्षः तत्साधनापेक्षश्च वक्तव्यः इति।

## अद्वैतवेदान्तसृष्टिप्रक्रिया

उत्पत्तिविलययोः कर्त्तृत्वादीश्वरो जगत्कारणमुच्यते। उत्पत्तिविलयोरर्थ आविर्भावस्तिरोभावश्च। अयमीश्वर आत्मनि विलयितं समस्तजगत्प्राणिनाङ्कर्मानुसारेणाविर्भूतङ्करोति।[1] स एवेश्वरः प्राणिनिङ्कर्मणाङ्क्षीणो सति समस्तासंसारमात्मनि निगूहयति। एते सृष्टिप्रलया एतादृशा एव यथाहर्दिव जागृतसुषुप्तिवा। चेतनाचेतनरुर्वञ्जगद्ब्रह्मस्वरूपमेव।[2] अद्वैतदृष्ट्येश्वरोऽद्वितीयो निश्चयवश्च स्वीकृतोऽत आविर्भावतिरोभावयोराशय आरम्भः परिणतश्च नैव। ईश्वरो जगतो भिन्नरचनान्न करोत्यपित्वस्व्य जगत उत्पत्तिस्तथैव यथा सीपे रजतस्य, स्वर्णे आभूषणस्योत्पत्तिः। स एकैवेश्वरश्चेतनाचेतनयोः पदार्थानामुपादानकारणम्। वार्तिकाकारस्सुरेश्वराचार्यश्चेतनयोः कारणम्परमात्मानममन्यत् नेश्वरम्। स परमात्मा भावनाया ज्ञानस्य कर्मणा च

---

[1] ब्र. सू. -1/1/2

[2] (क) वेदान्तपरिजातसौरभम्- 1/1/2. 1/2/19

(ख) शा.भा.-2/1/26

कारणाद्यदा तमः प्रधानस्तदा देहानाङ्कारणम्। यदा चित्प्रधानस्तदा चिदात्मशाङ्कारणम्। जगद्विचारो वेदान्तदर्शनस्य महत्वपूर्णो विषयः। व्यावहारिकपारमार्थिकदृष्टिभ्यामस्य किमस्तित्वमेतस्य तर्कपूर्ण विवेचनं वेदान्त एव दृश्यते। ब्रह्म–मायेश्वरजीवात्ममोक्षाणां वेदान्तस्यास्या विषयसामग्रया: प्रतिपादन जगद्विचारेणे वारम्भो भवति। जगद्हस्य ज्ञानानन्तरं वेदान्तदर्शनस्योक्तप्रतिपाद्यविषयणान्तात्पर्यमवबोधनमति सुलभम्भवति। असाधारणशक्तियुक्तपरमात्मा जगदाकारे परिणतो भवति। व्याकरणदृष्ट्या गम्–लृ–गतौ–धातोः–क्विप्–प्रत्थय्र योजनेन–जगत–पदो निष्पद्यते। तस्य व्युत्पत्तिलब्धार्थो करोत्यपित्वस्य जगत उत्पत्तितथैव यथा सीपे रजतस्य, स्वर्णे आभूषणस्योत्पत्तिः। स एकैवेश्वरश्चेतनाचेतनयोः पदार्थनामुपादानकारणम्। वार्तिकाकारस्सुरेश्वराचार्यश्चेतना–चेतनयोः कारणम्परमात्मानममन्यत, नेश्वरम्। स परमात्मा भावनाया ज्ञानस्य कर्मणा च कारणाद्यदा तमः प्रधानस्तदा देहानाङ्कारणम्। यदा चित्प्रधानस्तदा चिदात्मशाङ्कारणम्। ''सतः'' अर्थो विद्यमानः। सः ''असतः'' प्रतियोगी अर्थादविनाशी, अपरिणामी, स्थिरः सत्यश्च। शंकराचार्येण सत्यस्य लक्षणङ्कथितम् यस्मिन् रूपे बुद्धि यन्निश्चितङ्कृतवती, चेत्तत्तेन रूपेण कदापि व्यभिचरितन्न भवति अर्थात्तं रूपङ्कदापि न त्यजति तदेव सत्यम्। परं यस्य जगत्स्वभावो विवर्तशीलः परिवर्तनशीलस्तत्सदविनाशी

कथम्भवितुमर्हति? इयमेका स्पष्टा वार्ता यदेकैव वस्तु सदसद्भावाभावं वा स्वीकर्तुमस्वीकर्त्तुञ्च नैव शक्यते। ततो जगत् ''सत्'' कथमन्तुं शक्यते? चेदवयञ्जगदसत्कथयामस्तर्हि पुनस्तस्योपलब्धिः कथं सम्भवा? यतो जगति या परिवर्तनशीलता तथा मिथ्यात्वन्तदव्यभिचारी। बुद्ध्या यद्यस्मिन् रूपे स्वीकृतन्तद्रूपङ्कदापि न त्यज्यते। अतस्सत्यस्योक्तलक्षणानुसारेण जगदपि सत्सिध्यति। अत एव जगद्वस्तुतस्सदसद् वा। कारणभावेन तत्सत्कार्यभावेनासाच्च। यो भावोऽदृश्यो गोचरो मूलरहितः, यम्बुद्धिरिन्द्रिया च ग्रहीतुमसमर्थानि, यस्य कश्चिदाकारः प्रकारश्च न योऽतीव सूक्ष्मः, अखण्डः, विभुः, नित्यश्च, परं यस्समस्तकार्यव्यापाराणाम्मूलकारणस्स एव ''कारणात्मभावः''। एतद्विपरीतं यस्ससीमो बुद्धिन्द्रियग्राह्यः, योऽतीतः, वर्तमानस्तथानागतः, एतासु तिसृसुं अवस्थासु विशिष्टस्स ''कार्यातमभावः''। इदङ्कालत्रयात्मकञ्जगत् यः कार्यात्मभावस्तस्य परब्रह्मणश्शक्तिः। जगदिदं सत्वरजस्तमतसाङ्गुणत्रयाणाम्मायाया भावः। कारणरूपब्रह्मण एकमंशम्। अयं सांसारिको मनुष्यो यस्य भावस्योपलब्धिङ्करोति, स कार्यात्मभावः। ब्रह्मणस्सापरावस्था। सृष्टिस्थितिलया जगत इयं स्थितिस्सनातना, यतोहि तज्जगद्ब्रह्मण एवापरावस्था। अत एव कारणात्मभावः परमेश्वरः कार्यात्मभावमिद जगत् यद्यत्तस्यैवाशम्, दं एव सती स्तः, कारणात्मभावो यत्र नित्थः,

कार्यात्मभावस्तत्रानित्योऽस्ति। मिथ्या स पदार्थो यस्य स्वकाचित्स्वतन्त्रसत्ता नैव। यश्चान्यसत्तया सत्तावान। तमसि निहितघटस्य सत्ता प्रकाशस्य सन्तामाश्रयते, नोचेतस्य किमप्यस्तित्वमेव नास्ति। वेदान्तदृष्ट्या जगतः काचित्सत्ता न, ब्रह्मणस्सत्तया स सत्तावान्। अत एव जगदिमथ्या ब्रह्म च सत्यमभिहितम्। ब्रह्मणस्तत्तया यदि जगतस्सत्ता तर्हि तस्य मिथ्यात्वं सदृजन्न। तत्केन रूपेण मिथ्या, एतस्य स्पष्टीकरणम् ''अभिन्ननिमित्तो पादानकारणस्य'' सिद्धान्तो नुबोधानन्तरम्भवति, अर्थाद् ब्रह्मास्य जगतोनिमित्तकारणमुपादानकारणञ्चास्ति।

वेदान्तानुसारेणस्य जगतः कारणम्ब्रह्म। निमित्तमुपादानमञ्च। कमपि पदार्थमुत्पन्नङ्करणे सहायककारणनतस्य पदार्थस्य निमित्तकारणमुच्यते। येभ्यस्तत्वेभ्यो यो पदार्थो जायते, तानि तत्त्वानि तस्य पदार्थस्योपादानकारणानि कथ्यन्ते। उदाहरणार्थङ्घटकर्त्ता कुम्भकारो घटस्य ''निमित्तकारणम्'' यस्या मृत्तिकायाश्च स घटो निष्पन्नो भवत्, सा मृत्तिका तस्य घटस्य ''उपादानकारणमिति।'' जगत् उपादानकारणमज्ञानम्। तस्याज्ञानस्य नाशाज्जगतस्स्वयेव नाशो भवति। अस्याज्ञानस्य नाशो ज्ञानेनैव भवितु मर्हति न तु कर्मोपासनाभ्यामज्ञानस्य नाशः। यतः कर्मोपासनेऽज्ञानस्य विरोधिनौ न। अज्ञानस्य विरोधी ज्ञानम्। यथा घटाभ्यान्तरस्यान्धकारः प्रकाशेनैव तथैवाज्ञानरूपान्धकारो ज्ञानरूपप्रकाशेनैव प्रणष्टुं शक्यते।

## सांख्याभिमतसृष्टिः विचारः

अव्यक्ताख्या मूलप्रकृतिः प्रवृत्तिस्वभावा स्वतंत्रा च सृष्ट्यारम्भे स्वयमेव क्षुब्धा सती जीवविशेषेण नारायणाख्येन संयुज्यते। ततश्च सजातीयैरन्यैः प्रकृत्यं-शैर्न्यूनाधिकभावेन मिलिता सती महत्तत्त्वमारभते। न च पुरुषस्य प्रकृत्या सह संयोगे असङ्गो ह्ययं पुरुषः इति श्रुतिविरोध इति वाच्यम्। विकारहेतुसङ्गस्यैव सङ्गशब्दार्थत्वात्।

"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।

लिप्यते न स पापेन पदम्पत्रमिवाम्भसा"[1]

इत्येवमुच्यमानः पद्मपत्रस्य असङ्गतोक्तार्थेनैवोपपद्यते। महत्तत्वञ्च चेतनाचेतनात्मकम्। तत्राचेतनांशस्य मुख्यैवोत्पत्तिः चेतनांशस्य त्वभिव्यक्तिरूपा गौण्येव। एवं सृष्ट्यारम्भे जीवविशेषभूता आदिशक्तिरपि महत्तत्त्वकारणीभूतविषमावस्थगुणत्रयसम्बन्धादभिव्यज्यते। इयमेव प्रकृत्यधिष्ठात्री देवता महालक्ष्मी, अम्बा, दुर्गेत्यादिशब्दैः पुराणेषूच्यते। जीवगता अखिला विशेषाः प्रधानाद्युपाधिसम्बन्धेन भासमाना औपाधिका एव। ततः पूर्वं निर्विशेषा जीवसमष्टिर्ब्रह्म शब्देनोच्यते। स्वयम्भूतस्तु सविशेषो जीवासमष्टिः। विशेषास्त्वौपाधिका एव। तस्योपाधिर्लिङ्गशरीरम्। लिङ्गशरीरं तु

[1] श्रीमद्भगवद्गीता–5/10

बुध्यहंकारमनोज्ञानेन्द्रियकर्मेन्द्रियपञ्चतन्मात्राणामष्टादशानां समुदायः। सप्तदशानां समुदाय इत्युक्तिस्तु अहंकारस्य बुद्धावन्तर्भावं कल्पयित्वा ज्ञेया। प्राणश्च बुद्धेरेव वृत्तिभेदः। उपाधिश्चात्मचैतन्यस्याभिव्यक्तिस्थानम्, वह्नेरिन्धनवत्। इदं च लिङ्गशरीरमादौ स्वयंभुव उपाधिभूतमेकमेव जायते। ततो व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते। पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्।

अयं च स्वयम्भूः स्वलिङ्गशरीरावयवान्सूक्ष्मानल्पान् स्वांशचेतनां संयोज्य सर्वान् प्राणिनः सृजति। जीवाश्च वस्तुतो भिन्ना एव। तेषां समष्टिः स्वयम्भूः। अयं च वस्तुतः सन्नेव जीवानां मिथो भेदः शरीराद्युपाधिभिरभिव्यज्यते दीपेन घटादिभिरिव। न तु असन्नेवोपाधिनाभिव्यज्यते। यथा जल उष्णस्पर्शोऽसन्नेव तेजसा स्वकीयस्तत्राभिव्यज्यते तद्वदत्र न मन्तव्यम्। जीवेषु मिथो भेदस्य नैसर्गिकत्वात्। स्वम्भूरेव च स्थूलशरीरोपाधिको नारायण इत्युच्यते। तदुत्पत्तिक्रमश्चेत्थम्– महत्तत्त्वादुत्पन्नस्तद्दशमांशोहंकारः। तस्मात्तन्मात्रद्वारोत्पन्नं तदद्शमांशभूतमाकाशम् एवं ततोऽपि न्यूनस्तद्दशमांशो वायुः, तद्दशमांशभूतं तेजः, तादृशमांशभूतं जलम्, ताद्दशमांशभूता पृथिवी। सैव स्थूलशरीरस्य बीजम्। तच्चाण्डरूपेण परिणमते। तत्र मध्ये तद्दशमांशभूतं चतुर्दशभूवनात्मकं स्वायम्भुवः स्थूलशरीरम्। अयमेव स्थूलशरीरोपाधिको नारायण इत्युच्यते। तन्मात्रोत्पत्तेः

प्रागिन्द्रियोत्पतिः, इन्द्रियोत्पत्तेः प्राक् तन्मात्रोत्पत्तिरिति वा नात्र क्रमनियमः। तयोः कार्यकारणभावाभावेन क्रमे प्रमाणाभावात्, इन्द्रियाणां मध्येऽमुकमेव प्रथममुत्पद्यते इत्ययमपि नियमो नास्ति। तन्मात्रोत्पत्तौ तु क्रमः अस्ति। तामसाहंकारात् प्रथमं शब्दतन्मात्रमुत्पद्यते तस्माच्छब्दतन्मात्राहंकारसहितात्स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकमुत्पद्यते। तस्मात् स्पर्शतन्मात्रादहंकारसहितात् रूपतन्मात्रं शब्दस्पर्शरूपगुणकमुत्पद्यते। तन्मात्रेभ्यश्च तादृशगुणकान्येव महाभूतानि उत्पद्यन्ते। प्रधानमहदहंकारपञ्चतन्मात्ररूपं प्रकृत्यष्टकं पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेकादशेन्द्रियगणः पञ्चमहाभूतानि चेति चतुर्विंशति तत्त्वानि। सर्वोऽयं मूलप्रकृतेः प्रधानस्य प्रपञ्चः। पुरुषस्तु पञ्चविंशो न कस्यापि प्रकृतिर्न कस्यापि विकृतिः। तथा च संक्षेपतो द्विविधं तत्त्वं चिदचिद्रूपं पुरुषप्रधानात्मकम्। तथा च–

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**

**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥**[1]

**प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः।**

**तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि॥**[2]

अत्रेयमाशंका जायते यत् यथा बीजस्य कारणमङ्कुरः तस्याङ्कुरस्य बीजान्तरं कारणं भवेत् तस्यापि बीजस्याङ्कुरानन्तरं कारणं तस्यापि पुनर्बीजान्तरमित्येव

---

[1] सां.का.का.21

[2] सां.का.का.22

प्राप्ताप्यनवस्था दोषाय न भवति। गत्यन्तराभावात्। विकृतयश्च प्रकृतयश्च महदहंकारतन्मात्राणि। तदप्युक्तं महदाद्याः प्रकृतिविकृतयः सप्त-

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**

**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः।।**[१]

प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्तमहदादीनि तत्त्वानि। तत्रान्तः करणादिपदवेदनीयं महत्तत्त्वमहंकारस्य प्रकृतिः। मूलप्रकृतेस्तु विकृतिः। प्रकृतिश्च तदेवाहंकारतत्त्वं तामसं सत्पञ्चतन्मात्राणां सूक्ष्माभिधानम्। तदेव सात्त्विकं सत्प्रकृतिरेकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुः श्रोत्रघ्राणरसनात्वगाख्यानां कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानां उभयात्मकस्य मनसश्च। रजसस्तूभयत्र क्रियोत्पादनद्वारेण कारणत्वमस्ति। तदुक्तमीश्वरकृष्णेन-

**अभिमानोहंकारस्तस्माद्द्विविधः प्रवर्तते सर्गः।**

**एकादशकश्च गणस्तन्मात्रपञ्चकं चैव।।**[२]

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात्।**

**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्।।**[३]

**बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि।**

---

[1] सां.का.का.3

[2] सां.का.का.24

[3] सां.का.का.25

**वाक्पाणिपादपायूपस्था कर्मेन्द्रियाण्याहुः॥**[1]

**उभयात्मकमत्रमनः संकल्पकमिन्द्रियं च साधर्म्यात्।**[2]

विवृतञ्च तत्त्वकौमुद्यामाचार्यवाचस्पतिभिः। अहमत्राधिकृतो ममात्रसामर्थ्यं मदर्था इमे विषया अहममुकोऽस्मि इत्यादिरभिमानात्मकोऽसाधारणव्यापारको यस्य सः अहंकारः। तस्मादहंकारात् द्विविधः सर्गः प्रवर्तते। प्रकाशकजडभेदेन द्विविधा सृष्टिर्जायते। यथाहि- एकादशकश्च गण इति पाठे एकादशसंख्या परिणामस्येत्येकादशकः। एकादशशब्दात्तदस्य परिमाणमित्यर्थ "संख्याया अतिशदन्तायाः कन्" इत्यनेन कन् प्रत्ययः। पञ्चज्ञानेन्द्रिय-पञ्चकर्मेन्द्रियमनसां प्रकाशकानामेकादशानां गणः एकः। शब्दतन्मात्रादीनां जडानां पञ्चानां गणोऽपरः।

एकोप्यहंकारः सत्त्वरजस्तमसां गुणानामुद्भवाभिभवाभ्यां भिन्नस्त्रिविधो भवति। तत्रैकः सत्त्वप्रधानो वैकृतसंज्ञकः। तस्मात् सत्त्वप्रधान एकादशेन्द्रियगणः उत्पद्यते। भूतादेरहंकारात् पञ्चतन्मात्रोत्पत्तिः। यतः स भूतादिस्तामसस्तमोगुणप्रधानः। रजः प्रधानस्तैजसस्तृतीयः। तस्य कार्यं तु इन्द्रियगणस्तन्मात्रगणश्चेति सात्त्विकतामसयोः कार्यमेव। यतः सत्त्वगुणस्तमो गुणश्च समयोऽपि क्रियारहितत्वात् न तावत्कार्यं करोति यावत् तं न रजोगुणश्चालयति।

---

[1] सां.का.का.26

[2] सां.का.का.27

ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च प्रवर्तकत्वान्मनः स्वयं ज्ञानेन्द्रियं कर्मेन्द्रियं चोभयात्मकम्। इयमेव सांख्यशास्त्रे सृष्टिप्रक्रियेति।

**सृष्टिप्रकरणे वाचस्पतिमिश्रस्याभिमतम्-**

आचार्यवाचस्पतिमिश्रेण तत्त्वकौमुद्यां सृष्टेः किञ्चित विशिष्टं व्याख्यानं विहितम्। यद्यपि आचार्यैः सांख्याभिमतसृष्टेः एव उपपादनं कृतम् तथापि अन्यैः टीकाकतृभिः अस्य वैशिष्ट्यं तु अस्ति एव। अतेव प्रतिपादितम्- यत् प्रकृतिपुरुषयोः संयोगाः सृष्टेः कारणम्। तथा हि उक्तम्- **"संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः"**[1] अस्य तात्पर्य इदमेव यत् महदादितत्त्वां सर्गरूपसाधनं बिना भोगसम्पादनाय कैवल्यसम्पादनाय च पुरुषः समर्थो न भवति। अतः भोगापवर्ग निष्पत्तये सृष्टिः साधनरूपेण परिकल्पिता। योगसूत्रकारोऽपि वदति- द्रष्ट्दृश्ययोः संयोगो हेयहेतुः इति। अर्थात् द्रष्टापुरुष दृश्यबुद्धिः अनयोः संयोगः एव संसारस्य कारणम्। अत एव वदति- प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण तदर्थम्" अतः आचार्यैः मिश्रपादैः उक्तं- "भोग्यता प्रधानस्य दर्शिता" अर्थात् सुखदु:खाद्यनुभवः भोगः तस्मातुभविता च भोक्ता प्रधानस्य प्रकृतेः सुखदु:खात्मकत्वात् भोग्यत्वं तु सिद्धमेव। यद्यपि प्रकृतेः भोग्यत्वं तावदेव सिद्ध्यति यावत् तस्याः कश्चित् भोक्ता स्यात्। अत एव अनयोः भोग्यत्व

---

[1] सां.त.कौ.

भोक्तृत्व सम्बन्धः संयोगः। तथाहि प्रतिपादयति– 'तत्संयोगात्', न च भिन्नयोः संयोगोऽपेक्षां विना, न चेयमुपकार्योप कारकभावं विनेत्यपेक्षाहेतुमुपकारमाह– पुरुषस्य इति। संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवगार्थं सर्गं करोतीत्यर्थ। अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमो–मोह–महामोह–तामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्च विपर्ययविशेषाः, विपर्ययप्रभवाणामप्यस्मितादीनां विपर्ययस्वभावत्वात्। भेदस्तमसोऽविद्याया अष्टविधः। "मोहस्य च" इति, अत्राप्यष्टविधोभेदश्चकारेणानुषज्यते। "दशविधोः महामोहः" इति। " "तामिस्रः" द्वेषः "अष्टादशधा" "तथा भवन्त्यन्धतामिस्रः"– अभिनिवेशोऽन्धतामिस्रः। तथेत्यनेनाष्टादशवेत्यनुषज्यते। तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति। सोऽयं पञ्चविधविकल्पो विपर्ययोऽवान्तरभेदाद् द्वाषष्टिरिति। तदेवं पञ्चविपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह– एकादशेति। इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, न त्वशक्तिभेदपूरणत्वेन। एकादशेन्द्रियवधाः–

**वाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।**

**मूकता कौण्यपङ्गुत्वे क्लैव्योदावर्त्तमन्दताः[1]॥**

[1] सां.त.कौ.पृ–158

यथासख्यं श्रोत्रादीनामिन्द्रियाणां वधाः। एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्। तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह- सहबुद्धिवधेरिति। कति बुद्धेः स्वरूपतो वधा? इत्यत आह- सप्तदश वधा बुद्धेः। कुतः? विपर्ययात्तुष्टिसिद्धीनाम्। तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति। एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवन्तीति। विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्त्रिः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतुहेतुमत्तया व्यवस्थिताः। तत्राऽऽद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव। मुख्यास्तु सिद्धयो हेतुमत्य एव मध्यमास्तु हेतुहेतुमत्यः। विधिवद् गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनम्- प्रथमा सिद्धिस्तारमुच्यते। तत्कार्यम्- "शब्दः" शब्द इति पदं शब्दजनितमर्थज्ञानमुपलक्षयति, कार्ये कारणोपचारात्। पाठार्थाभ्यां तदिदं द्विधा श्रवणम्। "ऊहः" तर्कः। आगमाविरोधिन्यायेनाऽऽगमार्थपरीक्षणम्। परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनम्। तदिदं मननमाचक्षते आगमिनः। स्वोत्प्रेक्षितं मननममननमेवासुहृत्सम्मतमितिं द्वितीयं मननमाह- 'सुहृत्प्राप्तिः"। अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः 'सुहृत्प्राप्तिः। "दानं" च

शुद्धिर्विवेकज्ञानस्य, **"दैप्- शोधने"**[1] इत्यस्माद्धातोर्दानपदव्युत्पत्तेः। यथाह भगवान् पतञ्जलिः- **"विवेकख्यातिरविप्लवा हानोपायः"**[2] इति। "अविप्लवः शुद्धिः, सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम्। सा च न विनाऽऽदरनैरन्तर्यदीर्घकालसेविताभ्यास परिपाकाद्भवतीति 'दानेन' विवेकख्यात्या कार्येण सोऽपि सङ्गृहीतः। सेयं पञ्चमी सिद्धिः 'सदामुदितम्' उच्यते। तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः। एवं क्रमेणाचार्यैः जगतसृष्टेः प्रतिपादनं कृतमिति।

## सारबोधिनीटीकाकारमतसमीक्षणम्

सत्त्वरजस्तमसां साम्यावस्थैव प्रकृतिः प्रोच्यते। यस्मात् पदार्थाः समुत्पद्यन्ते सा प्रकृतिः। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः [3] । महत्तत्त्वादहङ्कारो जायते। अहङ्कारात् पञ्चतन्मात्राणि, शब्दस्पर्शरूपरसगन्धाख्यानि सम्भूतानि। एवञ्च श्रोत्रं, त्वक्, जिह्वा, चक्षुः, घ्राणञ्चेतानि पञ्चज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्चकर्मेन्द्रियाणि तथा

---

[1] धातुपाठ 1.656

[2] यो.सू.2.26

[3] सां.सू.अ.प्र.सू.-6

च ह्येकादशतमं मनः समुत्पद्यन्ते, पञ्चतन्मात्रेभ्यः ह्याकाशः वायुः तेजः आपः, पृथ्वीश्चेतानि पञ्चमहाभूतानि समुद्भूतानि। प्रकृतिपुरुषयोः सम्बन्धो सृष्टिः उच्यते। भोगादीनां सम्पादनत्वात् प्रकृतिः रागनाम्ना व्यवह्रियते। एवञ्च प्रकृतिकृतभोगादिभ्यो तेषां वासनारहितत्वात् पुरुषो विरागनाम्ना स्वीक्रियते। एतयोः द्वयोः स्वस्वामिभावः, प्रेर्यप्रेरकभावश्च सम्बन्धः सृष्टेः हेतुत्वात् सृष्टिः कथ्यते। यथा प्रकृतिपुरुषयोः सम्बन्धोअनादिः वर्तते। इत्थमेव सृष्टेः प्रवाहोऽपि अनादिः। महदादिक्रमेण पञ्चभूतानां सृष्टिर्भवति। आकाशादिमहाभूतेभ्यः औपाधिकरूपेण दिक्कालयोरुत्पत्तिर्भवति। अत्र आदिपदेन पृथिव्यादिभूतानां ग्रहणम्। आब्रह्मस्तम्बपर्यन्ता सृष्टिः पुरुषार्थ एव भवति। यावत् विवेकज्ञानं नैव कुरूते। तावत् लिङ्गशरीरावच्छेदकत्वेन गमनाऽगमनं करोति। तत्सर्वमौपाधिकमेव। यतोऽत्र पारमार्थिकरूपेण पुरुषो निरवयवोऽस्तीति व्यापकश्चापीति स्थितः पुरुषः, तस्य गतिर्नैवभवितुमर्हति। सत्त्वात्मिका सृष्टिः उर्ध्वलोके वर्तते। तस्य तात्पर्यमिदमस्ति यत् सत्त्वगुणविशिष्टात्मकानां पुरुषाणां सृष्टिः उत्तमाऽस्ति। अर्थात् यस्या रजस्तमसो गुणौ न्यूनौ भवतोऽथ च सत्त्वगुणस्य च प्राबल्यं भवति। तर्हि सा सृष्टिः दैवीसृष्टिरिति नाम्ना व्यवह्रियते। सैवोत्तमा सृष्टिर्भवति। तमोगुण प्रबलात्मिका सृष्टिः भूर्लोकादधो वर्तते। रजोबहुलात्मिका सृष्टिः वर्तते। यस्यां सृष्टौ हिंसा, असत्यम्, क्रोधो चपलादयो धर्माः प्राप्यन्ते। सा सृष्टिः

राजससृष्टिर्भवति। इत्थं कपिलसाङ्ख्यानुसारेण सृष्टिः प्रतिपादिता। व्यक्तादिभ्यः अनुमायाः प्रकृतेरियमाकाङ्क्षा भवति यत्कश्चिद् मामवलोकयेत्, प्रकृतिर्दृश्या भोग्या च। दृश्यम्भोग्यं वस्तु कस्यचिद् द्रष्टुर्भोक्तुर्वा आवश्यकता भवति। स द्रष्टा पुरुषोऽस्ति। इत्थमेव पुरुषः स्वगतदुःखत्रयेणाभिमानी भवति। येन प्रकृत्या सह स्वत्वानुभूतिपारवश्यात् पीडितः सन् कैवल्यकामनाङ्करोति। कैवल्यप्राप्तिः प्रकृतिपुरुषयोर्भेदज्ञानं विना भवितुन्नार्हति। अतः पुरुषः प्रधानस्यापेक्षाङ्करोति। एतयोः संयोगः पङ्ग्वन्धवद् वर्तते। क्रियारहितः पुरुषः पङ्गुः अचेतनत्वाच्च प्रकृतिर्नेत्रविहीना। यथा स्वस्कन्धमारूह्य पङ्गुः स्वाभीष्टं स्थानमधिगच्छति, अन्धश्च पङ्गुनेत्रनिर्दिष्टपथा तेन सहैव स्वेष्टं स्थानम्। तथापि जिज्ञासेयम्भवति एतयोर्द्वयोः संयोगे सत्यपि महदादेः सृष्टिः कस्मात् कारणादभूत्? अस्योत्तरमिदं यत् सृष्टिः प्रकृतिपुरुषयोः संयोगाद् भवति। यतोहि उक्तसंयोग एव महदादेः सृष्टेः कारणम्।

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः"[1]॥

अयं संयोगो महदादि सृष्टिं विना पुरुषस्य भोगाय कैवल्याय च समर्थो भवितुन्नार्हति, अतः अनाद्यविद्याजन्यः प्रकृतिपुरुषयोः संयोग एव भोगापवर्गीयं सृष्टिङ्करोति। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः "प्रकाशक्रियास्थितिशीलं

[1] सां. का. 21

भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्"[1]। अर्थात् अत्र तन्मात्रेभ्य भूतानामुत्पत्ति क्रमे भिक्षुमिश्रमतयोर्विरोधः दृश्यते। मिश्रमते शब्दतन्मात्रात् आकाशस्य, स्पर्शात् वायोः रूपतन्मात्रात् तेजसः, रसतन्मात्रात् जलस्य, गन्ध तन्मात्रात् पृथिव्याः उत्पत्तिः भवति। भिक्षुमते तु प्रकृतेर्महान् महतोऽहङ्कारोऽहंकारात् पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि प्रादुर्भवन्ति। "शब्दतन्मात्रतश्शब्दगुणिनः आकाशस्योत्पत्तिः। शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायोरुत्पत्तिः। यस्य गुणशब्दस्स्पर्शश्चास्ति। रूपतन्मात्रतश्शब्दस्पर्शाभ्यां सहयोगेन तेजस उत्पत्तिर्भवति। यस्मिन् शब्दस्पर्शगुणाः विद्यन्ते। रसतन्मात्रतश्शब्दस्पर्शरूपतन्मात्राणां सहयोगेन जलमुत्पद्यते। यस्मिन् शब्दस्पर्शरूपरसगुणाः विद्यन्ते। गन्धतन्मात्रतश्शब्दस्पर्शरूपरसतन्मात्राणां सहयोगेन पृथिवी जायते। यस्यां शब्दस्पर्शरूपरसगन्धाः गुणाः विद्यमानाः। एतेषाम्पञ्चभूतानां शब्दस्पर्शरूपरसगन्धा एते क्रमेण पञ्चविशिष्टविषयाः। परं सदैव पूर्वभूतानाङ्गुणा अपि एतेषु समाविष्टाः"। तथा हि उक्तं ईश्वरकृष्णेन-

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।

तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि।।[2]

---

1 पा. यो. 2/18

2 सा.का. 22

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महातोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयोन्द्रियं , तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः।[1] तत्र टीकाकारेण कौमुदीकारोक्तस्याशयः प्रकाशितः। तथाहि– "यत्तु गणपर्वसूत्रे तन्मात्राणां महत्तत्त्वकार्यत्वमुक्तं तत्तु महत्तत्त्वावेशेनैवाहंकारस्य कार्योत्पादक्षमत्वाद् महत्तत्त्वमेवाहङ्कारद्वारा तन्मात्रकारणमित्यभिप्रायेण न तु साक्षादेव महत्तत्त्वं तन्मात्रकारणमिति मत्त्वा। तत्र पुनः 'षोडशकाद्' 'अपकृष्टेभ्यः' तस्य विवरणं कृतं 'षोडशकाद्' इत्यस्य 'पञ्चभ्यः' इत्यनेन सामानाधिकरण्येनान्वयासम्भवादपेक्षितं पदं पूरयति–अपकृष्टेभ्यः इति। अत्र 'एकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादय' इति। तत्र तन्मात्राणां द्रव्यत्वलाभाय लक्षणपदं तथा चोत्तरोत्तरतन्मात्रेषु पूर्वपूर्वतन्मात्राणां हेतुत्वाद् शब्दतन्मात्रं शब्दमात्रधर्मकं तत्कार्यतया स्पर्शतन्मात्रं शब्दस्पर्शोभयधर्मकं, एवं क्रमेण एकैकधर्मवृद्धिरित्यर्थः। यथा योगवार्तिक उक्तं मिश्रपादैः।"

सृष्टेः भेदप्रदर्शनम्

(1) लिङ्गशरीरम् – लिङ्गशरीरं सृष्टेः समारम्भकाल एवोत्पद्यते। इदं सूक्ष्मशरीरं प्रकृत्या प्रकृतिपुरुषमेकमेकं निर्मीयते तथेदमसक्तं शिलायामपि गमनशीलं नियतं सृष्टेरारभ्य महाप्रलयपर्यन्तं नैरन्तर्येण तिष्ठति। अस्य स्वरूपं महत्त्वमहङ्कारैकादशेन्द्रियाणि पञ्चतन्मात्राणि चेत्थमष्टादशावयवानां समुदाय एव

---

[1] सा.प्र.भा. –1/61

सूक्ष्मशरीरमिदम्। "बुद्ध्याहङ्कारमनांसि, पञ्चसूक्ष्मभूतानि, दश इन्द्रियाणि"[1] इदं भोगं नैव स्थूलशरीरे वसति, तथा धर्माधर्मज्ञानाज्ञान-वैराग्यावैराग्य-ऐश्वर्यानैश्वर्यन्नामष्टाभागसमन्वितम्भवति महाप्रलयसमये लयङ्गच्छत् शरीराच्छरीरम्प्रविशति। यत् सुखदुःखयोरनुभवस्स्थूलशरीरादेव भवितुमर्हति।

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।

संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्।[2]

सूक्ष्मशरीरमिदं विशेषं विना जन्ममृत्युमध्यकाले निराश्रयं न तिष्ठति। अत एव सूक्ष्मशरीरस्य स्वीकरणं सर्वथावश्यकम्। यदि सूक्ष्मशरीरमेव भोगाधिकरणम्पुरुषस्य तर्हि स्थूलशरीरस्य का आवश्यकता? अस्याः शंकायाः समाधानमस्ति सूक्ष्मशरीरं संसरणशीलमेतत् स्थूलशरीराणि मुहुर्मुहुर्विहाय स्वादृष्टानुसारमन्यानि नवानि स्थूलशरीराणि पुनः पुनः गृह्णाति परित्यजति च, एवं पुनः पुनः सूक्ष्मशरीराणां स्थूलशरीरेषु गमनागमनं भवति। अतः स्थूलशरीरस्य स्वीकरणन्नितान्तमावश्यकम्। तस्य स्वकारणे लयोऽवश्यम्भावीति व्याप्तिग्रहात्प्रधानकार्यस्य सर्वस्यापि साक्षात्परम्परया वा प्रधाने लयः, ततश्च सूक्ष्मशरीरस्यापि लयो महाप्रलये भवत्येव। सूक्ष्मशरीरं मुहुर्मुहुः स्थूलशरीरं गृह्णाति जहाति यतोहि धर्माधर्मजन्यफलोपभोगे समर्थमिदं सर्वथा निरुपभोगम्। स्थूलशरीरं

---

1 सा.बो.टी.पृ.-(394)

2 सां.का. - 40

विना सूक्ष्मशरीरं सुखदुःखान्यतरसाक्षात्कारात्मकोपभोक्तुं सर्वथा समर्थमित्थमेव सूक्ष्मशरीरं मुहुर्मुहुः स्थूलशरीरे संसरति। तथा हि उक्तं- "प्रधानपरिणामभेदेन जीवस्य दृश्यमानस्थूलशरीरकल्पनम् अनुपयोगि सूक्ष्मशरीरोत्पादनेनैव भोगनिर्वाहादिति भावः"[1]। चराचरोऽयं संसारो धर्माधर्मनिमित्तकः। अस्य सूक्ष्मशरीरस्य धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्ये नास्ति कोऽपि सम्बन्धः। एतैरष्टभावैरन्विता बुद्धिः तदन्वितं सूक्ष्मशरीरञ्च। इत्थम्बुद्ध्या परम्परया सूक्ष्मशरीरस्य धर्माधर्मभावैः सम्बन्धो भवति। यथा पुष्पगन्धेन वस्त्रे सुगन्धभानं भवति । तथैव, धर्माधर्माद्यष्टविधभावभूतैर्बुद्धिर्धर्मैरपि सर्वाणि सूक्ष्मशरीराणि संयुक्तानि भवन्ति। महाप्रलये यथा प्रकृतिरेव तिष्ठति, तथैव सूक्ष्मशरीरं कथन्न कारणे लयङ्गच्छति? अस्यां शङ्काजातायां समाधत्ते "यद् यज् जन्यभावात्मकम्, तत् तद् विनाशि" इति व्याप्तेः सूक्ष्मशरीरस्य परिणामविशेषत्वेन जन्यभावत्वावश्यकत्वाद् अवश्यं विनाशित्वमिति भावः"[2]।

पुनश्च सूक्ष्मशरीरे प्रमाणं प्रस्तौति "यदि सूक्ष्मभूतानां तन्मात्राणां संबन्धो नाङ्गीक्रियते तदा बुद्ध्यादीनां शरीरविशेषानाश्रयेण स्थित्यापत्तिरिति भावः"[3]। पुनश्च तत्र दृष्टान्तेन स्पष्टयति यथा"सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः

---

[1] सा.बो.टी. पृ.-395

[2] सा.बो.टी.पृ.- 397

[3] सा.बो.टी.पृ.- 399

कराः साभ्रे। वियति धनुःसंस्थानः दृश्यन्ते तदिन्द्रधनुः। इत्युक्तविविधवर्णरविकरजलधरादि समुदायात्मकशकायुधशरीरं सुसूक्ष्मसलिलकणमयजलधरेणैवारभ्यते, तमन्तरेण विविधवर्णानां रविकराणां शकायुधशरीरारम्भकत्वाभावेन अनाश्रितत्वम्, तद्वत् सूक्ष्मभूतानाम् अवयवत्वानङ्गीकारे सूक्ष्मशरीरास्तित्वमेव व्याहन्यते"[1] इदं लिङ्गशरीरं संसर्गेण पुरुषार्थवशेनैव भवति। इत्थं धर्माधर्माद्यष्टभावैः लिङ्गशरीरान्तरङ्गच्छति। पूर्वशरीरं विहाय भूयः शरीरान्तरं गृह्णाति। प्रकरणमेतद्विवेकख्यातिपर्यन्तं व्रजति। यथा नटः परशुरामवद् वीररूपे स्थितः परशुरामः, श्वः युधिष्ठिररूपे युधिष्ठिरनाम्ना व्यवह्रियते, स एव च परश्वः उदयनस्य वेषं धृत्वा तन्नाम्ना प्रोच्यते। तथैव "सूक्ष्मशरीरस्य संसरणे पुरुषार्थ एव उद्देश्यम्, धर्मादि च प्रवर्तकम्=कारणम्, स्थूलशरीरग्रहणं च धर्मादिकृतमव्यवहितं फलम्, धर्मादौ स्थूलशरीरग्रहणकारणप्रसङ्गेन स्थूलशरीरग्रहणम्, गृहीत्वा चेदृशं शरीरं पुनर्धर्मादौ प्रवृत्तिरिति संसरणानुपरम आविवेकात्, अन्योन्याश्रयदोषस्तु अनादित्वेन संसृतेर्बीजाङ्कुरवद् वारणीय इत्यभिप्रायः।[2] "वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुतः इति"[3]।

[1] सा.बो.टी.पृ.- 399

[2] सा.बो.टी.पृ.- 401

[3] वि.पु. (पुराणंतिहास सांख्ययोग..................)

## निमित्तनैमित्तिकञ्चेयं सृष्टिः –

इदानीन्निमित्तनैमित्तिकयोर्मध्ये किन्निमित्तकं नैमित्तिकमिति विभज्य तं दर्शयति। "कपिलमहर्षेः धर्मज्ञानवैराग्यैश्वर्यरूपाः चत्वारो भावाः स्वाभाविकत्वात् सांसिद्धिकाः। प्राचेतसादीनां धर्मादयः चत्वारो भावाः उपासनादिनिमित्तोत्पन्नतया नैमित्तिकत्वेन असांसिद्धिकाः। एवं सर्वेषामेव अधर्माज्ञानावैराग्यनैश्वर्यरूपाः चत्वारो भावाः ब्रह्महत्यादिनिमित्तोत्पन्नत्वेन नैमित्तिकतया असांसिद्धिका एव। तथा कार्याश्रयिणः=शरीरनिष्ठाः कलकाद्या अष्टौ भावाश्च सांसिद्धिकाः असांसिद्धिकाश्च दृष्टा इत्यन्वयः"[1] । अत्र कारिकायां निमित्तस्य धर्मादेः नैमित्तिकस्य शरीरावस्थाभेदस्य च सांसिद्धिकत्वाऽसांसिद्धिकत्वेन विभागो दर्शितः। भावानां विभागो निमित्तविभागः, शरीराणां विभागश्च नैमित्तिकविभाग इति। सृष्ट्यादौ आदिविद्वान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नो प्रादुर्बभूव इति श्रूयते। "धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि निमित्तरूपाः करणाश्रिता भावाः, तत्कृता संसृतिः। एतेन भावा द्विविधाः स्वभावसिद्धाः पुरुषप्रयत्नसाध्याश्च। स्वभावसिद्धाः प्राकृतिका उच्यन्ते, प्रयत्नसाध्याश्च वैकृतिका उच्यन्ते। प्राकृतिकानां धर्मादीनामुत्तमभावानामुदाहरणं- भगवान् कपिलः।

[1] सा.बो.टी.पृ.- 402

वैकृतिकानां च तेषामेवोदाहरणं भगवान् वाल्मीकिः। अधमानामधर्मादिभावानां चोभयविधीनां स्वाभाविकास्वाभाविकानामुदाहरणानि स्वयमूह्यानीति"[1]।

**प्रत्ययसर्गः** – सृष्टिप्रक्रियायां परस्परं तन्मात्रसर्गप्रत्ययसर्गयोर्द्वयोरावश्यकता वर्तते तन्मात्रसर्गस्य भोग्यतत्त्वं भोगाधिकरणत्वं च स्वरूपनिष्पत्तिः प्रत्ययसर्गं विना भवितुन्नार्हति, नापि च भवति। यतोहि बुद्धि स्वरूपकारणं विना शब्दस्पर्शादिषु कथं योग्यता गमिष्यति, धर्मादिस्वरूपकारणं विना च शब्दादीनां तथादेहेन्द्रियादीनां स्वरूपस्य निष्पत्तिरेव कालत्रयेऽपि भवितुन्न शक्यते, यतः कारणभावेऽपि यदि कारणं स्यात्तदा व्यतिरेकव्यभिचारः स्यात्। एवमेव प्रत्ययसर्गस्य तन्मात्रसर्गं विना भोगात्मकपुरुषार्थसाधनत्वं स्वरूपोत्पत्तिः। शब्दादि विषयं विना शरीरेन्द्रियादिकञ्च विना धर्माधर्मादयोऽपि नोत्पन्ना भवन्ति। एवं बुद्धेर्भोगसाधनत्वमपि नैव भवितुमर्हति अपि च परस्परसहयोगं विनाऽन्योन्यस्वरूपसिद्धिर्नैव भवितुं प्रभवति। अतः तन्मात्रसर्गस्य प्रत्ययसर्गस्य च द्वयोर्नितान्तमावश्यकता वर्तते।

"न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः।।"[2]

---

[1] सा.बां.टी.पृ.- 403
[2] सां. क ृा. 52

सांख्यदर्शने मुख्यत: महत्तत्त्वस्य द्विविध: सर्ग: भवति। "प्रत्यय सर्ग:, तन्मात्रसर्ग:" च इति।

**प्रत्यय सर्ग:** प्रत्ययसर्गं बुद्धिसर्ग: अथवा भावसर्ग: अपि कथ्यते।

- **तन्मात्र सर्ग:** तन्मात्र सर्गा: लिङ्गसर्ग: भूतसर्गो वेति।

**प्रत्यय सर्ग:-**

बुद्धेः सृष्टिः एव प्रत्ययसर्गाख्या। तत्र बुद्धेः धर्मज्ञानवैराग्यैश्वर्यम् अधर्माज्ञानवैराग्यनैश्वर्याणि ये अष्टौ भावा:भवन्ति। तेषां सर्ग: एव भावसर्ग:। टीकाकारेण एतेषां तत्त्वान्तरमपि निराकृतम्। तथाहि- "बुद्धेरेव अध्यवसायाख्यव्यापारेण निश्चयसाधनत्वादिति भाव:। "[1] अयं च भावसर्ग:- विपर्ययाशक्तितुष्टिसिद्धिः रूपेण बुद्धेः परिणामविशेष:। गुणानां वैशम्यात् (वैशम्यनिमित्तत्वात्) , तेषां चतुर्णां पञ्चाशत् भेदा: भवन्ति यथोक्तमपि-

**"एष प्रत्ययसर्गो विपर्ययाऽशक्तितुष्टिसिद्ध्याख्य:।**

**गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत्॥[2]**

सांख्यतत्त्वकौमुदीकारेण- "प्रतीयते अनेन इति प्रत्ययो बुद्धिः"[3] तस्य सर्ग: इति प्रत्ययसर्गस्य निर्वचनं कृतम्। तत्र टीकाकारः वदति बुद्धेरेव अध्यवसायाख्यव्यापारेण निश्चयसाधनत्वादिति भावः।[4] अपि च उच्यते- "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सृष्ट इत्यर्थ:। धर्मादीनां बुद्धेरेव परिणामविशेषरूपत्वादिति

---

[1] सा.बां.टी.पृ–413

[2] -सांख्यकारिका ४६।

[3] -सांख्यतत्त्वकौमुदी४६।

[4] सा.वां.टी.- 413

भावः। तथा च विपर्ययादीनां बुद्धिकार्यत्वेन बुद्धावन्तर्भावान्न तत्त्वान्तरत्त्वमिति भावः।

**विपर्ययस्वरूपम् –**

विपर्ययो अज्ञानं अविद्येति। सांख्यकारिकारेण विपर्ययस्य पञ्चभेदाः प्रतिपादिताः। यथा-"तम-मोह-महामोह- तामिस्त्रान्धतामिस्रत्वेन पञ्चधा" इति। "पञ्चविपर्ययविशेषा" इति। क्लेशशब्देन एते योगदर्शने उक्ता भगवता पतञ्जलिना- "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति[1]। "क्लेशाः पञ्च विपर्यया" इति च तत्र व्यासभाष्यम् "मिथ्याज्ञानम-तद्रूपप्रतिष्ठम्"इति। वस्तुनः अवस्तुत्वेनावधारणं अविद्यया, विद्यया तु वस्तुनोऽवधारणमिति सर्वेषां विदितमेव। अनात्मप्रतीतिषु बुद्ध्यादि प्रकृतिषु आत्मबुद्ध्या प्रवृत्तिः विपर्ययः इति उक्तं योगसूत्रकारेण। तथा हि टीकाकारः वदति –"अविद्या शब्देन अविद्यास्मितारागद्वेषाभिनिवेषाः गृह्यन्ते।[2] अविद्यापञ्चपर्वैषा प्रादुर्भूता महात्मनः। अस्य विपर्ययस्य पञ्चभेदाः प्रतिपादिताः यथा च- "अविद्यास्मितारागद्वेषाभिनिवेशः पञ्च क्लेशाः"[3] इति। क्लेशाः एव अविद्या मूलत्वात् अविद्या पदवाच्याः विपर्ययाः।

**विपर्ययभेदाः**

---

[1] योगसूत्रम् २/३।

[2] सा.बो.टी.- 413

[3] पातञ्जलयोगसूत्रम् २/३।

सांख्यशास्त्रे मिथ्याज्ञानरूप: विपर्यय:। स च पञ्चविध:। गुणानां वैशम्यात् विपर्ययस्य विभाग: अस्य भेदस्य हेतु: वर्तते, कारणगुणेषु दोष:। कारणदोषाच्च विपर्यय: पञ्चविध:। विपर्ययस्य पञ्चभेदा: भवन्ति "तम-मोह-महामोह-तामिस्रान्धतामिस्रसंज्ञका: पञ्चविपर्ययविशेषा:" इति। अत: "तम: मोह: महामोह: तामिस्र: अन्धतामिस्र:" विपर्ययस्य भेदा: सन्ति।

**भेदस्तमसोऽष्टविधो मोहस्य च, दशविधो महामोह:।**

**तामिस्रोऽटादशधा, तथा भवत्यन्धतामिस्र: ॥**[1] इति।

| **तम:** अविद्या | **मोह:** अस्मिता | **महामोह:** राग: | **तामिस्र:** द्वेष: | **अन्धतामिस्र:** अभिनिवेश: |
|---|---|---|---|---|
| अव्यक्तात्मा<br>महदात्मा<br>अहङ्कारात्मा<br>शब्दतन्मात्रात्मा<br>स्पर्शतन्मात्रात्मा<br>रूपतन्मात्रात्मा<br>रसतन्मात्रात्मा | अणिमा<br>महिमा<br>गरिमा<br>लघिमा<br>प्राप्ति:<br>प्राकाम्प्यम्<br>ईशित्वम् | शब्दविषयक:<br>स्पर्शविषयक:<br>रूपविषयक:<br>रसविषयक:<br>गन्धविषयक: | शब्दादि:<br>पञ्चानां<br>दिव्यम्+<br>अदिव्यम्=१०<br>भेदा:<br>+अणिमा<br>अष्टौ=१८ | शब्दादि:<br>पञ्चानां<br>दिव्य:+<br>अदिव्य:=१०<br>भेद:+ अणिमा<br>v"Vkn'k=<br>१८ |

[1] मांख्यकारिका- ४८

| | | | | |
|---|---|---|---|---|
| गन्धतन्मात्रात्मा | वशित्वम् | | भेदाः | भेदाः |

➢ तमः- तमः अष्टौ विधः भवति, इयमविद्या अवस्तूनि वस्तुप्रतीतिरूपा, तत्र आत्मा (पुरुषः) व्यतिरिक्तः प्रकृतिः, महत्, अहङ्कारः, तन्मात्रेषु आत्मबुद्धिः अविद्या तमः इति। तत्र "अनित्ये नित्यबुद्धिः, अशुचौ शुचित्वबुद्धिः, दुःखमये विषयभोगादौ सुखबुद्धिः, अनात्मनि बुद्ध्यादौ आत्मत्वबुद्धिरिति। एवं च विद्याविरोधि विपरीतज्ञानम् अविद्या इत्युक्तम्, यथार्थज्ञानं विद्या। ख्यातिः बुद्धिः ज्ञानमिति पर्यायाः"[1]

➢ मोहः बुद्धिः पुरुषश्च अत्यन्तं भिन्नं सदपि उभयोः अभेदज्ञानम् अहं चेतनोऽस्मि अहं कर्त्ताऽस्मि इत्याकारकं परस्परं भवति। अतः अस्मेर्भावः अस्मिता अज्ञानं मोहः। बुद्धिः पुरुषौ च इदं ज्ञानं मुह्यति। "अस्मितायामेव सत्त्यां पुरुषः अहमस्मि सुखी दुःखी कर्ता भोक्ता इति अभिमन्यन्ते"[2]।

➢ महामोहः

दिव्यादिव्यशब्दादिविषयकः रागः एव महामोहः। शब्दादि विषयाणां दिव्यादिव्यभेदेन दशविधत्वात् महामोहः दशविधः। यथा- सारबोधिनीकारेण रागस्य स्वरूपं प्रतिपादितम्- "सुखमनुशेते विषयीकरोति सुखज्ञानस्य सुखानुस्मृतिपूर्वकं सुखतत्साधनेषु तृष्णारूपो गर्द्धो रागसंज्ञकः क्लेश इति। यदा यस्य यादृशसुखानुभवो

1 सा.बो.टी.- 417
2 सा.बो.टी.-417

भवति तदा तच्चेतसि तादृशसुखसंस्कारः, तत्साधनसंस्कारश्चोदेति, ततः संस्कारात् तस्य सुखतत्साधनयोः स्मृतिर्भवति, पुनः स्मृत्या तादृशसुखस्य तत् साधनस्य च यो अभिलाषो जायते स एव राग इति"[1]।

तामिस्र:

दिव्यादिव्यभेदेन शब्दादय: विषया: दशविधा: सन्ति। एते विषया: स्वरूपत: रागोत्पादका: भवन्ति तथा च अणिमादया: अष्टौ ऐश्वर्याणि स्वरूपतस्तु रागोत्पादकानि न भवन्ति, किन्तु शब्दादिविषयाणां रागभूतानां भोगसाधनत्वेन परम्परया रञ्जनीयानि भवन्ति। यथा च उक्तं तत्त्वकौमुदीकारेण-"शब्दादयो दशविषया: रञ्जनीया: स्वरूपत:"[2]। अत्र टीकाकारः वदति- "दुःखाभिज्ञस्य दुःखतत्साधनयोः यः क्रोधः स द्वेष इति। यदा यस्य यादृशदुःखस्य अनुभवो भवति तदा तस्य चेतसि तादृशसुखसंस्कारः, rRlEcfU/ कारणस्य च संस्कार उदेति, ततः तस्मात् संस्कारात् तद् दुःखस्य तत्कारणस्य च स्मृतिर्जायते, तया स्मृत्या च तादृशदुःखविषयिका तत्कारणविषयिका च जिघांसा भवति स द्वेष इति"[3]।

➢ अन्धतामिस्र:

अन्धतामिस्र: अभिनिवेशसंज्ञक:। अभिनिवेश: अनिष्टभयबोधकत्वात् त्रासरूप:। अस्य त्रासरूपस्य अभिनिवेशात्मकस्य अन्धतामिस्रस्य

---

1 सा.बो.टी.-417

2 सांख्यकारिका 48

3 सा.बो.टी.- 418

दिव्यादिव्यशब्दादयः दशविषयाः सन्ति। अणिमादय'चाष्टौ विषयाः सन्ति। अतैव अन्धतामिस्रः अष्टादशधा भवत्यन्धतामिस्रः। तथा हि – "प्राक्तनानेकमरणदुखानां संस्कारात् जायमानो मूर्खाणामिव विदुषामपि प्रसिद्धो यो मरणत्रासः सो अभिनिवेशः" [1]।

अशक्तिस्वरूपम्

अशक्तिर्नाम असामर्थ्यम्। इयञ्च अशक्तिः अष्टाविंशतिविधाः सन्ति। अशक्तेर्लक्षणं प्रतिपादितम् "करणवैकल्यजन्याशक्तिः बुद्धिधर्मः" इति। विपर्ययविषये उक्तमाचार्यैः यद्यपि अविद्यायाः शुक्त्यादौ रजतत्वादिज्ञानप्रभृतयो बहवो विशेषाः संभवन्ति तथापि मुमुक्षूणां हेयोपादेयानामेव विपर्ययाणां प्रदर्शनीयत्वेन पञ्चधाविभागः उपपन्नः इति बोध्यम्।[2]

**अशक्तिभेदाः**

वाचस्पतिमिश्रेण अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्मः इति अशक्तेः लक्षणमुक्तम्। तत्र टीकाकारः स्पष्टयति अशक्तिः "असामर्थ्यम्, पदार्थनिश्चयजनने क्रियाजनने च अक्षमत्वमिति[3]। पुनश्च वाधिर्यमित्यनया कारिकया एकदशेन्द्रियवधाः निर्दिष्टाः आचार्यमिश्रैः "वाधिर्यमिति कारिकायां पूर्वार्धे ज्ञानेन्द्रियाणामपाटवम्, उत्तरार्धे च कर्मेन्द्रियाणामपाटवं निर्दिष्टं वर्तते। अर्थात् एकादशेन्द्रियाणां

---

[1] सा.बो.टी.-418

[2] सा.बो.टी.-418

[3] सा.बो.टी.-413

स्वस्वकर्मक्षमत्वरूपा धर्मभेदाः तद्धेतुकत्वात् बुद्धेः स्वविषयाग्रहणमिष्यते, अतो बुद्धेरशक्तिरेकादशविधैव। तथा हि श्रोत्रेन्द्रियस्य श्रवणसामर्थ्यनाशः शब्दग्रहणापाटवं श्रोत्रदोषः, "कुण्ठिता" त्वगिन्द्रियसामर्थ्यनाशः स्पर्शग्रहणापाटवं त्वगिन्द्रियदोषः- "अन्धत्व म्"। नेत्रशक्तेरभावः रूपग्रहणापाटवं नैत्रदोषः, "जाड्यम्" रसनाशक्तेरभावः रसग्रहणापाटवं रसनादोषः "अजिघ्रता" घ्राणेन्द्रियशक्तेरभावः अवघ्राणापाटवं घ्राणदोषः एतेषाम् पञ्चज्ञानेन्द्रियाणां वधाः ज्ञानेन्द्रियवधाः कर्मेन्द्रियवधाश्चात्र यथा- "मूकता" वाक् शक्तेरभावः वचनापाटवं वाग्दोषः, "कौण्यम्" पाणिन्द्रियाभ्यां वैकल्यं आदानापाटवं हस्तदोषः, "पङ्गुत्वम्" पादशक्तेरभावः गमनागमनापटवं पाददोषः "क्लैव्यम्" क्लीबत्वम्, मैथुनासामर्थ्यम्। उपस्थेन्द्रियदोषः। मलमूत्रवायुनिःसारणरोधकरोगविशेषः पायुदोषः कर्मेन्द्रियाणां वधः। उभयात्मकं मानसेन्द्रियं मनसः दोषः उच्यते-"मन्दता"। मनसः संकल्पशक्तेरभावः सुखादिविषयग्रहणासामर्थ्यमयं मनोदोषः। एतेषाम् एकादशेन्द्रियाणाम् असामर्थ्यात् बुद्धेः असामर्थ्यं भवति। अत एव बुद्धिगतअशक्तेः एकादशभेदाः भवन्ति। तथा च अष्टविधानां सिद्धिनां असामर्थ्यात् जायमानाः सप्तदशबुद्धिवधाः भवन्ति। इन्द्रियवधबुद्धिवधयोः युगपत् संख्या अष्टाविंशतिवधाः भवन्ति। अतः अशक्तिः अष्टाविंशतिधा भवन्ति। यथोक्तमपि- "करणवैकल्यात् अष्टाविंशति भेदाः अशक्तेः" "एकादशेन्द्रियवधाः **बाधिर्य** कुष्ठिताऽधत्वं जडताऽजिघ्रता तथा मूकता

कौण्यपङ्गुत्वे क्लैव्योदावर्त्तमन्दता:"[1] इति। वैक्ष्यमाणतुष्टिसिद्ध्यो: विपर्ययात् सप्तदशविधत्वात् तद्भेदवैपरीत्यमपि सप्तदशधा। एकादशेन्द्रियवधै: सह सप्तदशवधा: बुद्धि: मेलयित्वाऽशक्तिरष्टाविंशतिधा: भवन्ति।

**तुष्टिस्वरूपम्**

तुष्टिशब्दस्य अर्थ: वर्तते सन्तोष: अर्थात् अभीष्टात् न्यूनतायामपि सन्तोष: स्यात्। अधिकाधिककृतेऽपि प्रयत्नाभावश्च स्यात्। तात्पर्यं यत् आधानमात्रेण एव सन्तुष्टिभाव: तुष्टि:। यथा- "आधानमात्रसन्तोषस्तुष्टि:"। **सारबोधिनीकारेण** तुष्टिर्बुद्धिधर्मो बुद्धेर्वैकल्याभावे एव संभवति, वैकल्ये तु तद्व्यतिरेक इति भाव:[2]। नवविधतुष्टिप्रतिबन्धकतया तत्तन्निरूपितप्रतिबन्धकत्वेन बुद्धिदोषस्यापि नवविधत्वमिति। बाह्याभ्यान्तरभेदेन द्विविधा तुष्टि: **आभ्यन्तरिकी** तुष्टि: चतुर्विधा। बाह्यतुष्टयश्च विषयोपरमात् पञ्चविध:। अत: नवधा तुष्टय: भवन्ति।

अत्र टीकाकारेण तुष्टीनां भेदनिरूपणप्रसङ्गे तत्प्रतियोगिनामतुष्टीनां नवविधत्वं तेषां च प्रतिपादनं विहितं वर्तते। तथा हि निरूपिकाया: तुष्टिर्भेदे तत्प्रतियोगिका अतुष्टयोपि नवेत्यर्थ:। तथा हि – नास्ति प्रधानम् इति प्रतीति: असुवर्णानाम्नी अतुष्टि: प्रथमा, नास्ति **महत्तत्त्वम्** इति प्रतीति: अनिलनाम्नी अतुष्टि: द्वितीया, नास्त्यहंकार: इति प्रतीति: मनोज्ञा नाम्नी अतुष्टि: तृतीया, नैव सन्ति तन्मात्राणि

---

[1] सांख्यतत्त्वकौमुदी-पृ.158

[2] सा.बो.टी.- 425

भूताकाशादीनि च  इति प्रतीतिः अदृष्टिनाम्नी अतुष्टिः चतुर्थी, धनार्जने प्रवृत्तिः अपरानाम्नी पञ्चमी, रक्षणे प्रवृत्तिः सुपरानाम्नी प्रवृत्तिः षष्ठी, तत् क्षये दोषमपश्यतः प्रतिपत्तिः असुनेत्रानाम्नी सप्तमी, भोगासक्तिः वसुनाडिकानाम्नी अष्टमी, हिंसादिदोषमपश्यतो भोगे प्रवृत्तिः **अनुत्तमाम्भ** नाम्नी नवमी। इति[1]।

**तुष्टिभेदाः**

तुष्टिः द्विधा आध्यात्मिकी बाह्यश्च। आध्यात्मिकतुष्टिः- आध्यात्मिकी तुष्टिः यथा कारिकाकारेणोक्तम्-

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।**

**बाह्यविषयोपरमात् पञ्चनव तुष्टयोऽभिमताः॥**[2]

अत्र आचार्यवाचस्पतिमिश्रः तुष्टेः स्वातन्त्र्येण निर्वचनं नैव कृतवान्। तद् भेदानां व्याख्यानं कृतवान् इति। प्रकृत्युपादानका-लभाग्याख्याः चतस्रः आध्यात्मिक्यः, अर्जनरक्षणक्षयसंगत-हिंसादोषदर्शनात् शब्दादिविषयोपरमात् पञ्चनवतुष्टयोऽभिमताः। आत्मानमधिकृत्य जायमाना आभ्यन्तरा इति। प्रकृति व्यतिरिक्तत्वमित्यधिकृ-त्योत्पन्नाः आध्यात्मिक्यः तुष्टयः।तथा हि – यत इमाः तुष्टयः प्रकृतितो भिन्नम् आत्मानमादाय भवन्ति, अत इमा  आध्यात्मिक्य इत्युच्यन्ते[3]। "प्रकृतितः आत्मा भिन्नं वस्तु विद्यते" इति निश्चयं **चतस्त्र आध्यात्मिक्यस्तुष्टयः-**

---

[1] सा.बां.टी.-425

[2] सांख्यकारिका-कारिका-५०।

[3] सा.बां.टी.-427

कृत्वा ततः तस्य श्रवणमनननिदिध्यासनद्वारा विवेकसाक्षात्काराय असता उपदेशेन सन्तुष्टो भूत्वा यः पुरुषो यत्नं न करोति, तस्य इमाः चतस्रः आध्यात्मिक्यः तुष्टयो भवन्ति। यत् इमाः तुष्टयः प्रकृतितो भिन्नम् आत्मानमादाय भवन्ति, अत एव इमा आध्यात्मिक्य इत्युच्यन्ते[1]।

- **प्रकृत्याख्या तुष्टिः** "विवेकसाक्षात्कारः (प्रकृतिपुरुषयोर्भेदस्य स्वानुभवे आनयनम्) प्रकृतेरेव परिणामविशेषोऽस्ति, अतः तं प्रकृतिः स्वयमेव करिष्यति, तस्मात् त्वया ध्यानस्य अभ्यासो **त्विष्टः** इति। सेऽयं तस्य शिष्यस्य या प्रकृतिरिति अम्भ इति उच्यते[2]।

- **उपादानाख्या तुष्टिः** यद्यपि सा विवेकख्यातिः प्रकृतितो भवति, तथापि केवलायाः प्रक्रतित एव न, यतः यदि प्रकृतित एव विवेकख्यातिर्भवेत्, तदा तस्याः सर्वान् प्रति समानत्वात् सर्वेषां सर्वस्मिन् काले विवेकख्यातिः स्यात्। अतः हे वत्स! त्वं सन्न्यासं धारय। सन्यासेन तव सा विवेकख्यातिः प्राप्ता भविष्यति। इत्युपदेशेन या शिष्यस्य तुष्टिर्भवति सा उपादानमिति सलिलमिति चोच्यते[3]।

---

1 मारवोधनी पृ० मं०४३५।

2 सा.बो.टी.- 436

3 - सा.बो.टी., पृ० मं० ४३६।

- **कालाख्या तुष्टिः** यद्यपि सन्यासेन मुक्तिर्भवति किं तु तत्कालमात्रेण अर्थात् स एव सन्यासः तव कालेन सिद्धिं दास्यति अतः त्वं त्वराकारी मा भूः। इत्युपदेशेन या काले तुष्टिर्भवति सा काल मेघ इति **नाम्ना** चोच्यते[1]

- **भाग्याख्या तुष्टिः** विवेकख्यातिं न कालः कर्तुं शक्नोति नापि उपादानम्, किं तु सा भाग्येनैव भवति, अत एव मदालसायाः पुत्रा अतिबालका अपि मातुः उपदेशमात्रेणैव विवेकख्यातिं प्राप्ताः मुक्ताश्च। तत्र भाग्यमेव कारणमासीत्, नान्यत् किंचित्। इत्युपदेशेन या भाग्ये तुष्टिर्भवति सा भाग्यमिति वृष्टिरिति चोच्यते[2]।

**बाह्या तुष्टिः**

बाह्याविषयोपरमात् बाह्यतुष्टयः जायन्ते। आत्मभिन्नप्रकृत्यादि तत्त्वमात्मानं ज्ञात्वा बाह्यशब्दादिभ्यः विषयेभ्यः विरक्तिः जायते। विरक्ते सति बाह्यतुष्टयः भवन्ति। तत् च शब्दस्पर्शरूपरसगन्धादिभोग्यः विषयः पञ्च, तेभ्यः उपरतिः, उपरतित्वात् पञ्चविधाः बाह्यतुष्टयः। **तथाहि-**

याः तुष्टयः प्रकृतिमहत्तत्त्वाहङ्कारादीनि अनात्मवस्तूनि आत्मत्वेन ज्ञात्वा वैराग्येण भवन्ति, ताः सर्वाः बाह्यस्तुष्टयः, यतः आत्मज्ञानस्य अभवनावस्थायामेव ताः अनात्मबाह्यवस्तुनः अवलम्बनेन भवन्ति। आसां तुष्टीनां कारणं वैराग्यमस्ति, तच्च वैराग्यं पञ्चभिः करणैर्भवति, अतः तत् पञ्चविधं जायते। तत् एव च ततो (वैराग्यात्)

---

1 - सा.बो.टी., पृ० सं० ४३६।

2 - सा.बो.टी., पृ० सं० ४३६।

जायमानाः तुष्टयोऽपि पञ्चैव मन्यन्ते। अर्थात् भोग्या विषयाः शब्दादयः पञ्च सन्ति तेषामोपरमात् वैराग्याणि अपि पञ्च सन्ति। तथा विषयसंख्यावत् अस्य वैरागयस्य कारणानि अपि अर्जनरक्षणक्षयभोगहिंसेति पञ्च सन्ति, अतोऽपि वैराग्याणि पञ्च सन्ति।

- **पाराख्या तुष्टिः** अर्जनम् धनार्जनस्य सेवा प्रभृतयः उपायाः सन्ति, ये सेवकादीनां सन्ति दुःखकारकाः। यतः सेवायां क्रोधिस्वामिनः कदाचित् चपेटाप्रहारोऽपि सहनीयो भवति। सुतराम् एषां दुःखानामनुभवकर्तारो बुद्धिमन्तः तन्त्र सेवायां प्रवृत्ता न भवन्ति। एवमेव अन्येष्वपि धनोपार्जनोपायेषु दोषाः सन्ति। इत्थं या विषयात् उपरमे तुष्टिर्भवति सा "पारम्" इत्युच्यते।

- **सुपाराख्या तुष्टिः**

रक्षणं धनं येन केनोपायेन कथंचित् एकत्र जातमपि संगृहीतमपि तस्य राजचोरवह्निजलप्रवाहादिना नाशस्य संभावना अस्ति, अतः तस्य रक्षायां महदुःखमस्ति, ईदृग्भावनावतः या विषयात् उपरमे तुष्टिर्भवति सा द्वितीया "सुपारम्" इत्युच्यते।

- **परापाराख्या तुष्टिः**

क्षयः एवमेव महता परिश्रमेण संगृहीतं धनं भोगेन क्षीणं भवति, इत्थं तदीयक्षयभावनावतः या विषयात् उपरमे तुष्टिर्भवति सा तृतीया "पारापारम्" इत्युच्यते।

- **अनुत्तमाम्भाख्या तुष्टि:**

भोग: एवं शब्दादिविषयाणां भोगाभ्यासेन कामा: मनोरथा: वर्द्धन्ते, ते च विषयस्य अप्राप्तौ सत्यां कामिनं पुरुषं दु:खितं कुर्वन्ति, एवं भोगदोषज्ञातु: या विषयात् उपरमे तुष्टिर्भवति सा चतुर्थी "अनुत्तमाम्भ:" इत्युच्यते।

- **उत्तमाम्भाख्या तुष्टि:**

हिंसा एवं द्वितीयानां प्राणिनां हानिकरणं विना विषयाणाम् उपभोगो न भवितुमर्हति, इत्थं हिंसादोषं दृष्टk विषयाद् या उपरमे तुष्टिर्भवति सा पञ्चमी उत्तमाम्भ इत्युच्यते।

**सिद्धिस्वरूपम्**

सिद्धिशब्दस्य अर्थ: वर्तते पुरुषार्थनिष्पत्ति:। कारिकाकारेण सिद्धे: अष्टौ भेदा: प्रतिपादिता:। सांख्यतत्त्वकौमुदीकार: गौणमुख्यभेदेन सिद्धिं प्रतिपादितवान्। सांख्यकारिकाकारेण अष्टौ सिद्धय: प्रतिपादिता: तद्यथा-

**ऊह: शब्दोऽध्ययनं दु:खविघातास्त्रय: सुहृत्प्राप्तिरू ।**

**दानं च सिद्धयोऽष्टौ, सिद्धे: पूर्वोऽङ्कुशस्त्रिविध:॥**[1]

तत्र **तत्त्वकौमीदीकारै:** त्रिविधा: एव मुख्या: सिद्धय: प्रतिपादिता: अन्याश्च **गौण्य:** सिद्धय: यथा उक्तम्- "उह:" इति। विहन्यमानस्य दु:खस्य त्रित्वात्तद्विघातास्त्रय इतीमा: मुख्यास्तिस्र: सिद्धय: तदुपायतया त्वितरा गौण्य:। पञ्च सिद्धय: ता अपि हेतुहेतुमत्त्या व्यवस्थिता:। तत्राद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव। मुख्यास्तु सिद्धयो

1 -सांख्यतत्त्वकौमुदी, पृ० सं० २५९

हेतुमत्य एव। मध्यमास्तु हेतुहेतुमत्य:। तथाहि उक्तं शास्त्रिणा "ऊहादेः साधनरूपतया साध्यरूपमुख्यसिद्धिमपहाय प्रथमं तद्व्याख्यानमनुचितमिति पाठक्रममनादृत्य कारिकां व्युत्क्रमेण"[1] अत्र किमर्थं पाठक्रममनादृतं इत्यत्र स्पष्टयति आचार्य:-"ध्वंसरूपस्य विघातस्य अविशेषात् तत्प्रतियोगिविशेषमादाय तस्य त्रिविधत्वमिति।[2]। अपि च "प्रतियोगिनस्त्रित्वात् विघातस्यापि त्रित्वमिति भाव:"[3] पुनश्च एतेषां सिद्धीनां हेतुहेतुमत्वं प्रतिपादयति- "कारणमात्रत्वेन कार्यमात्रत्वेन कार्यकारणोभयरूपत्वेन च वयवस्थिता इत्यर्थ:"[4]। सिद्धीनांमूलमध्ययनम् अत: उच्यते- "अध्ययनविध्यनतिक्रमेणेत्यर्थ:। अक्षरेति। क्षयरहितानां शाश्वतानां वर्णानां स्वरूपम्=पारायणमिति यावत्, तस्य ग्रहणमित्यर्थ:। यद्यपि "स्वाध्यायोऽध्येतव्य:" इति श्रुतौ गुरुमुखात् स्वरविशेषवद् अक्षरग्रहणपूर्वकाऽर्थग्रहणस्यैव अध्ययनपदार्थत्वं सिद्धान्तितं मीमांसाभाष्यकारादिभि:, तथापि अत्र अध्ययनशब्दयो: पृथक्त्वेन अभिधानाद् अध्ययनपदम् अक्षरग्रहणपरं, शब्दपदं, च अर्थज्ञानपरम् इत्याशय:"[5]। शब्द सिद्धि:- "शब्दपदस्य यथाश्रुतार्थत्वे अध्ययनकार्यत्वानुपपत्ति:, शब्दस्य

---

[1] -सा.वो.टी.पृ-438

[2] सा.बो.टी.पृ-438

[3] सा.बो.टी.पृ-438

[4] सा.बो.टी.पृ-438

[5] सा.बो.टी.पृ.438-439

अध्ययनकार्यत्वाभावादिति शब्दपदं शब्दजन्यार्थज्ञानलक्षकमित्याह-शब्द इति पदमिति। शब्दजनितमिति। तथा च शब्दपदं शाब्दबोधलाक्षणिकमित्यर्थ:। सम्बन्धमाह-कार्ये इति। तथा च अर्थज्ञानस्य शब्दजन्यत्वेन शब्दत्वेन उपचारात् शक्यसंबन्धः कार्यत्वरूप इति भाव:"[1] । ऊह:- "ऊह वितर्के" इति धात्वनुसारादिति भाव:। तर्कपदार्थव्याचष्टे-आगमेति। आगमस्य=शास्त्रान्तरस्य, अविरोधी यो न्याय=युक्तिः, तेन शास्त्रार्थपरीक्षणमित्यर्थ:"[२] । "शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः" इत्युक्तेः सब्रह्मचारिभिः सह तर्कितार्थाऽऽलोचनमपि मननप्रकारान्तरम्, तदेव "सुहृत्प्राप्तिः" शब्देन अभिहितमिति प्रतिपादयति- स्वोत्प्रेक्षितमिति। स्वकृतमित्यर्थ:। असुहृत्सम्मतमिति। यतः सुहृदाम असम्मतम्, अतः अमननमेव=तात्त्विकमननत्वेन अनिश्चितमित्यर्थ:"[३] । "दानं व्याचष्टे-शुद्धिरिति। विवेकज्ञानस्य शुद्धिर्दानमित्यन्वय:। विवेकज्ञानस्य=प्रकृतिपुरुषयोर्विभिन्नत्त्वेन ज्ञानस्य"[४] "विवेकज्ञानशुद्धिस्तु सुहृत्प्राप्तिजन्या, तामन्तरेण तदसम्भवात्। विशुद्धिविवेकख्यातिजन्यन्तु

---

[1] सा.बां.टी.पृ-439

[2] सा.बां.टी.पृ-439-440

[3] सा.बां.टी.पृ-440

[4] सा.बां.टी.पृ-441

**दु:खविघातत्रयम्, अन्तरा सिद्ध्यन्तरविरहात्**"[१]। "विवेकख्यातेरविपल्वत्वं तस्या नैर्मल्यमित्यर्थ:। अत एव तत्सूत्रभाष्ये–"विवेकप्रत्ययप्रवाहो निर्मलो भवति, सा विवकेख्यातिरविपल्व:" इत्युक्तं व्यासदेवै:। मलं च संशयविपर्यासज्ञानतद्वासनाभिर्विवेकसाक्षात्कारस्य अन्तरान्तरा विच्छेदाद् अप्रवाहेण अवस्थानम्। संशयादिपरिहानौ तु अविच्छेदेन अवस्थानाद् विवेकसाक्षात्कारस्य नैर्मल्यं स्यादित्याह– सा चेति। सा=शुद्धि:। सवासनेति। वासना=संस्कार:। प्रकृतिपुरुषयोरन्यताज्ञाने सकृज्जातेऽपि अनिर्व्यूढतया "पुरुष: प्रकृतेरभिन्नो न वा" इति संशयदशायां, "प्रकृतिपुरुषावभिन्नावेव, "अहं सुखी" इत्यादिव्यवहारात्" इति विपर्यासदशायां वा विवेकसाक्षात्कारस्य तावद्विच्छेदो भवत्येव। गुरुणा तर्कद्वारा संशयविपर्यासयोरपनयने कृतेऽपि, यावत् तत्संस्कारो नापगच्छति, तावदपि संस्कारवशात् कचित् कचिदेकत्वस्मृत्या विवेकसाक्षात्कारस्य विच्छेदो जायते, इति सवासनेति विशेषणम्। तथा च "वासनया सह संशयविपर्यासानां परिहारेण" इत्युक्त्या संशयविपर्यासानां तद्वासनानां च परिहारो दर्शित:। ततश्च विवेकसाक्षात्कारस्य क्षणमपि विच्छेदासम्भवात् सुतरां स्वच्छप्रवाहेऽवस्थानं सुघटम्"[2]। "सवासनसंशयादिपरिहानौ विवेकसाक्षात्कारस्य निर्मलप्रवाहावस्थाशुद्धि:" इति शुद्धिस्वरूपम् अवगतम्, सा पुन: कथं भवति,

---

[1] सा.बो.टी.पृ-44।

[2] सा.बो.टी.पृ-44।-442

संस्कारपर्यन्तापनयनस्य गुरोरशक्यत्वादि" [1] "तथाविधाऽभ्यासपरिपाकादेव शुद्धिर्भवतीति भावः। अदीर्घकालसेवने, दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने च, नैरन्तर्येऽपि श्रद्धातिशयाभावे च, सङ्गदोषात् विजातीयप्रत्ययप्रावल्येन अदृढभूमिरभ्यासः फलाय न प्रभवेत्, प्रत्युत विपरीतभावनातः स्वरूपात् प्रच्यवेत, अतो विशेषणत्रयविशिष्टोऽभ्यासः सम्पादनीयः, एतादृशाच्च भावनामयात् अभ्यासात् नूनं परमा शुद्धिर्जायत इति तत्त्वम् एतेन "स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" इति पातञ्जलसूत्रार्थो वर्णित इति ज्ञेयम्। तथा च स्वप्ने भुजगकृतपादवेष्टनम् उपलभ्य भीत्या प्रबुद्धः पुमान् पादौ पश्यन् "स्वाप्नमिदं भुजकृतपादवेष्टनम् मिथ्या" इति निश्चिन्वानोऽपि अचिरप्रबोधदशायां तत्संस्कारवशात् क्षणे क्षणे सर्पमिवानुभवति, गात्रकम्पनादिना भीतिमपि अनुभावयति, मिथ्यात्वज्ञानस्य पौनःपुन्येन दृढीभावे तु सर्पसंस्कारापगमात् स्वस्थः स्यात्, तथा तादृशाभ्यासपरिपाकात् शुद्धिरपि अवश्यम्भाविनीति निष्कर्षः" [2]। "व्याख्याता अपि दुःखविघातरूपमुख्यसिद्धीः संज्ञाविशेषकथनाय पुनराह– तिस्रश्चेति। आधिभौतिकाध्यात्मिकाधिदैविकाख्यदुःखत्रयविघातरूपा इत्यर्थः। प्रमोदेति। आध्यात्मिकदुःखविघातः प्रमोदसंज्ञः, आधिदैविकदुःखविघातः मुदितसंज्ञः, आधिभौतिकदुःखविघातश्च मोदमानसंज्ञ इत्यर्थः। तत्र प्रकर्षेण मोदो

---

[1] सा.बो.टी.पृ–442

[2] सा.बो.टी.पृ–442

यत्र स प्रमोदः, आध्यात्मिकदुःखविघातस्य सर्वोत्कर्षेण इष्टत्वात् तथा- त्वम्, आधिभौतिकदुःखविघातस्य मुदितत्वं तु मोदाधारत्वादवसेयम्, आधिदैविकदुःखविघातस्य मोदमानत्वं मोदस्य मानम्=मानं यत्रेति व्युत्पत्त्यावधेयम्"[1]। आचार्य- शिवनारायणशास्त्रिणः अन्ये तु इत्यनेन शास्त्रेण प्राचीनानां मतमुपस्थापयन्ति- अत्र यैः आचार्याः पाठक्रमेणैव सिद्धीनां स्वरूपं प्रकाशयन्ति ते अत्र प्राचीनपदवाच्याः। अत्र यद्यपि टीकाकर्तुः अभिमतः न प्रतीयते यतो हि तैः उक्तं- एतद् व्याख्यानस्य बहुदोष दृष्टतया अयुक्ततया। किमर्थं च परवर्तिभिः आचार्यैः पाठक्रमः आदृतः एतद्विषये सूचयति- "शिष्य सुगमत्वात् तद्दोषोद्भावनात् इति तत्र प्राचीनानां मते- **"अध्ययनपदं गुर्वधीनवेदाध्ययने प्रसिद्धम्, 'अधीत्य स्नायात्" इति स्मृते र्न तु ज्ञाने। ऊहस्तर्कपर्यायो मननं तु अश्रुतस्य स्वयमूहे न शक्तिरस्तीत्यादि, इति दिक्"** [२] इति। शब्दपदस्य व्याख्याने उक्तं आचार्यैः- **"अन्यदीयसांख्यशास्त्रपाठाकर्णनमात्रेण तत्त्वज्ञानं भवेत्, तदा स्वयं पाठेनापि तत्त्वज्ञानावश्यम्भावात् तस्यापि सिद्ध्यन्तरत्वापत्त्या अष्टसंख्याव्याघात आपद्येत"**[३] सुहृत्प्राप्तिः- सुहृतप्राप्तेः वैशिष्ट्यं बोधयति- **"तथाविधसुहृदोऽपि**

[1] सा.बां.टी.पृ-443

[2] सा.बां.टी.पृ-444

[3] सा.बां.टी.पृ-444

उपदेशकतया गुरुत्वात् उपदेश्यस्य च शिष्यत्वाद् अध्ययनत्वाविशेषेण पौनरुक्ततापत्तिः"[1]। अस्मिन् क्रमे आचार्यैः गुरोः वैशिष्ट्यं इत्थं प्रकाशितम्- "संस्कृतैः प्राकृतैर्वापि यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत्स गुरुः स्मृतः"। इति इत्येवं तद् व्याख्यानस्य अयुक्तताबीजभूता दोषा उद्भावनीयाः[2]" एवं क्रमेण आचार्यैः सिद्धेः द्विविधं व्याख्यानं उपस्थापितम् अनेन अस्य टीकाग्रन्थस्य वैशिष्ट्यं द्योतयति इति।

(4) भूतसृष्टिः

पूर्वं प्रत्ययसृष्टेः निरूपणङ्कृतमिदानीं भूतादिसृष्टिः निरूप्यते। "ब्राह्मप्राजापत्यैन्द्रपैत्र्यगान्धर्वयक्षराक्षसपैशाचाः इत्यष्टविधो दैवः सर्गः।"[3] अष्टधा विकृतिषु सर्गेषु ब्राह्मः प्रथमः सर्गः। सर्गोऽयं ब्राह्मसत्यतपोजननामकेषु सम्प्रवर्तते। सर्वलोकोपरि सत्यलोकस्सन्तिष्ठमानः। तत्र गताऽऽत्मानस्ततो न पुनरार्वतन्ते। प्राणवायूपासकाः परमहंसाः यावत्सर्गायुषोच्युताः सन्तः शुद्धनिवासाः तिष्ठन्ति। तपोलोकस्सत्य लोकतोऽधस्ताद्वर्तते। तत्राऽहङ्कारवशिनस्त्रिविधाः देवनिकायाः सन्तिष्ठमानाः सन्ति। तेऽभास्वराः महाभास्वराः सत्यमहाभास्वराश्च। एवञ्चजनलोकस्तपोलोकतोऽधावस्ति। तत्र भूतेन्द्रियवशिनो ब्राह्मपुरोहिताः

---

[1] सा.बां.टी.पृ-445

[2] सा.बां.टी.पृ-445

[3] सां.प्र.भा. -125

ब्राह्मकायिकाः ब्राह्ममहाकायिकाः इतीमे चतुर्विधाः द्विगुणद्विगुणोत्तरोत्तरायुषो निवसन्ति। भूतसृष्टिविषये सारबोधिनीकारः स्वमतं उपस्थापयति- "ब्रह्मादीनां पिशाचपर्यन्तानां देवयोनिविशेषत्वाद् दैवत्वम्। सामान्यधर्मस्तु मनुष्याद्यपेक्षया शक्त्यतिशयशालित्वम्। अत्र च सरीसृपेषु कीटादीनां, निर्जीवानां घटादीनां च स्थावरेषु अन्तर्भाव इति ज्ञेयम्"[1]। इत्थमाचार्यैः न केवलं प्राणीनां लोकानामपि विशदंविवेचनं प्रस्तुतम्- प्राजापात्यलोको महर्लोकस्तत्र प्रजापतिसम्बन्धिनो देवसमूहाः कुमुदाः ऋभवाः, प्रतर्दनाः, अजनाभाः, अमिताभाः, इमे पञ्चविधाः कल्पसहस्रायुषो निवसन्ति। पितृलोके जायमानस्सर्गः पैत्रः। पितृलोकश्चन्द्रलोकोऽपि शास्त्रविद्भिः कथ्यते। मेरुपर्वतस्य पृष्ठभागे गन्धर्वाः निवसन्ति, अतो अयं गान्धर्वलोकः। मेरोः पृष्ठभागपर्यन्तञ्जम्बूप्लक्षशल्मलिकुशक्रौञ्चशाकपुष्पकराख्यैः भूलोकः सप्तद्वीपैर्युक्तः। अपि चास्य पर्वतस्य दक्षिणदिशि निषधहेमकूटहिमशैलास्त्रयः पर्वताः। निषधनामके पर्वते सर्पनागगन्धर्वप्रभृतयो जीवाः सशरीराः निवसन्ति। वरुणलोके जायमाना सृष्टिर्याक्षसृष्टिः। तत्र गन्धमादने पर्वते सानुगो यक्षराजो निवसति। स प्रत्यहं सुरलनाभिस्सह नृत्यगानादिना स्वीयं समयं सानन्दङ्गमयति। एवञ्चानन्दविषयिणीमनुभूतिं सदा करोति। अतलनामकमधोलोकमारभ्य पातालालोकपर्यन्तञ्जायमानस्सर्ग एव राक्षससर्गः। एते चऽतलादिपातालान्तलोकः

[1] सा.बो.टी.पृ-452

भूमेरधस्तात् सन्तिष्ठमानाः विविधदुःखमया इति श्रूयते। अतैव दैत्यदानवनिवातकवचप्रभृतयो वसन्ति। तक्षकप्रभृतयोऽप्यत्रैव वसन्ति। तथा च मयो मायावी तदनुगाश्चाप्यत्रैव। एतेष्वेव लोकेषु उपर्युक्तेषु जायमानस्सर्गः। अत्र पिशाचाद्यवच्छिन्नजीवात्मानः श्राद्धतर्पणाद्यभावे महादेव दुःखमनुभवन्ति। एवन्नानाविधयातनाभिर्यात्यमाना हाहेति रुदन्तो निवसन्ति।

**पञ्चविधास्तिर्यग्योनिसर्गः**

अष्टविधदैवसर्गन्निरूप्येदानीं पञ्चविधस्तिर्यग्योनिसर्गः प्रतिपाद्यतोलोमलाङ्गूलवन्तो ग्रामनगरादिषु निवासशालिनोगवाश्वादयः। पशुयोनिसर्गोऽयम्। हरिणप्रभृतयः, पशवश्चतुष्पदा, आरण्यका, मृगसर्गः। सरीसृपा हृदयानि सरन्तः सन्तो गच्छन्ति। ते सन्ति सर्प-कीट-मत्स्य-वृश्चिकादयः। स्थावराः प्रत्यक्षचेष्टाशून्या वृक्षादयो घटादयो वा सर्वथा चेष्टाशून्या ग्राह्याः। इत्थं सर्वेषाञ्जीवानां सृष्टिरेव तिर्यग्योनिसर्गः "तैर्यग्योनश्च पञ्चधा भवति, पशुमृगपक्षिसंरीसृपस्थावरा" इति। "ननु मृगाणामपि पश्चन्तर्भावात् पञ्चविधत्वानुपपत्तिरिति चेत्। न पशुपदेन अनुक्तप्राणिमात्रपरिग्रहात् पञ्चविधत्वोपपत्तेः। अत एव शब्दरत्नावल्यादिषु कोषेषु प्राणिमात्रेऽपि पशुपदं सङ्केतितम् एवं च वनमानुषजलमानुषादीनामपि तैर्यग्योनत्वम्। अन्यथा तदसंग्रहापत्तेः। ततश्च मृगपदं लोमवल्लाङ्गूलवत्प्राणिपरम्। पक्षिपदं

**पतङ्गादीनामपि परिग्रहार्थम्। सरीसृपपदं च भुजङ्गवत् कीटमीनादीनामपि परिग्रहार्थम्, पदपक्षव्यतिरेकेण मुहुः सर्पणशीलत्वात्**"[1] "मानुषकश्चैकविधः" इति। ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया, संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्, इति। अत्र वदति टीकाकारः- **"यथा पशूनाम् अवान्तरभेदो न विवक्षितस्तथेति भावः। निर्जीवशरीरं तु सर्वस्यापि मूर्तपदार्थस्यास्त्येव, प्रायः शरीरशब्देन जीवच्छरीरस्यैव बोधो लोके प्रसिध्यतीत्यभिप्रायः"**[2]। "समासतः" सङ्क्षेपतः। भौतिकः सर्गः"। घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति।[3]

यद्यपि मानुषसर्गो ब्राह्मणक्षत्रियवैश्यशूद्रभेदेन भिन्नः तथापि ब्राह्मणत्व-क्षत्रियत्व-प्रभृतिनां अवान्तरजातिभेदानां विवक्षा न विधेया। बाह्मणक्षत्रियादिचतुर्षु वर्णेष्वेव मुखहस्तपादादिरूपाऽवयवाऽऽकृति संस्थानस्य समानत्वात् नैकविधत्वेऽप्येकविधत्वमेव। साङ्क्षिप्तेयम्भौतिकी सृष्टिः। वाचस्पतिमिश्रः "ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्गेष्वविशेषात्"[4] इति यदुक्तवान्, तस्य विशिष्टं व्याख्यानं कृतं टीकाकारेण 'निर्जीवशरीरं तु सर्वस्यापि मूर्तपदार्थस्यास्त्येव' प्रायः शरीरशब्देन जीवच्छरीरस्यैव

---

[1] सा.बां.टी.पृ. 452-453

[2] सा.बां.टी.पृ-453

[3] सां.त.कौ. 53 पृ. 170

[4] सां.त.कौ. का.- 53

बोधो लोके प्रसिध्यतीत्यभिप्रायः, शीर्यमाणतारूपो व्युत्पत्तिलभ्यस्त्वर्थो मूर्तपदार्थमात्रमान्तर्भावयति।[1]

(6) भौतिकसर्गः

जीवात्मन उत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यलोकेषु च जन्मास्तित्वम्। तेन भौतिकसर्गस्त्रिविधो निगद्यते। भुवःस्वर्महर्जनस्तपः सत्यलोकः सत्वगुणप्रचुरात् रजस्तमसोस्तत्र विद्यमानत्वेऽपि सत्वगुणस्यैव तत्राधिक्यम्। पातालादिलोकेषु दैत्यराक्षसादिसर्गस्तमो प्रधानः। मानवेभ्यो उपकृष्टाः पशुप्रभृतयः, तेभ्यश्च पक्षिणो उपकृष्टाः, पक्षिभ्यश्च वृक्षादयस्ततोऽपि लतावृणादयः। अनेन क्रमेण पशुपक्षिमृगसरीसृपवृक्षलतादिस्थावरान्तः तैर्यग् योनिस्सर्गस्तमः प्रधानो वर्तते। भूर्लोके सप्तद्वीपा जम्बू-शाक-कुश-क्रौञ्च-शाल्मल-प्लक्ष-पुष्कराख्याः, सप्तसमुद्राः लवण-इक्षु-सुरा-सर्पि- दधि-मण्ड-क्षीर-स्वादकूधः, एतेषां सन्निवेशो मध्यलोकरजोगुणप्रचुरो भवति। अयम्भूलोकः पुण्य पापकर्मानुष्ठानत्वाद् दुःखबहुला रजोगुणः प्रधानो वर्तते। यथा च आचार्य शिवनारायणशास्त्रिणा उक्तं भूर्लोके तमसः क्रमादुत्कर्षो भवति। पश्वादिषु पशुमृगपक्षिसरीसृपस्थावरसहितेषु, भूर्लोक एव मनुष्येषु क्रमाद्रजस उत्कर्षः ब्रह्मक्षत्रविट्शूद्रेषु रजसो हि कार्यं धर्माधर्मादिकं दुःखबाहुल्यं चोपलभ्यते मध्यमणिन्यायेन। पुनश्चाग्रे वदति

---

[1] सा.बो.टी.-453

"भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशः" इत्यंशस्य "अस्ति" इति शेषेण सार्थकस्योभयसंबंधः [1] सांख्यकारिकायामागतस्य स्तम्बशब्दस्यार्थोऽस्ति, ब्रह्म–देव–मानव–दानव–पशु–नाग–वृक्षलतादि–स्वरूपः स्तम्बो गुच्छस्तृणादिनः। तत्त्वकौमुदीकारः अस्मिन् सन्दर्भे इत्थं प्रवदति–द्युप्रभृति सत्यानृतलोकः सत्त्वबहुलः, पश्वादि स्थावरान्तः, सोऽयं मोहमयत्वात् तमोबहुलः, तत्र टीकाकारः व्याख्यानं करोति–भूर्लोको योऽस्ति तत्रैव मूलतः अधोऽधः पश्वादिसर्गो मध्ये च मानवसर्गः, "अधस्तनत्वं च न दिगपेक्षं किंतु तमोऽपेक्षम् एवं मध्यमत्वमपि रजोऽपेक्षं रजसः सत्त्वतमसोर्मध्ये स्थितत्वात्।" [2] एवञ्च पुराणोक्तत्रिविधं सर्वं विवेचयति–

"संसारे प्रायेणैव निरवच्छिन्नदुःखानि, कदापि यदि किञ्चिदपि सुखं स्यात्, तदपि दुःखमिश्रितमेव, तथा च सांख्यसूत्रे –कुत्रापि कोऽपि सुखीति 6–7 । तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः 6–8 । इति पाजञ्जलसूत्रं च– परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः 2–15 इति। मुक्तिवादे गदाधरभट्टाचार्यश्च– अस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि, कियती वा सुखखद्योतिका इत्यादि।। गीतास्वपि– "ये हि संसर्गजा भोगा दुःखयोनय एव ते। आद्यन्तवन्तः कौन्तेय! न तेषु रमते बुधः"

---

[1] सा.बो.टी.–455

[2] सा.बो.टी.–455

विष्णुपुराणेऽपि- "यावतः कुरुते जन्तुः संबन्धान् प्रियान्। तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः" इत्यास्तां विस्तारः।। 2. स्तम्बः=सूक्ष्मवीरुधादिः। "स्तम्बो गुच्छस्तृणादिनः" इत्यमरः।

1. ऊर्ध्वसर्गः- प्रथम ऊर्ध्वसर्गोऽस्ति, यस्य गणनायाम् "भुवः स्वर्महर्जनस्तपःसत्यम्" इति षड् लोकाः समागता भवन्ति। अत्र च सत्त्वगुणस्य प्रधानता तिष्ठति, रजस्तमसी च गुणभावेन तिष्ठतः।

2. मध्यसर्गः- अस्मिन् सर्गे रजोगुणस्य प्रधानता तिष्ठति, सत्त्वतमसी च गुणभावेन तिष्ठतः। अत एवायं दुःखबहुलोऽस्ति। अस्य गणनायां सम्पूर्णो भूलोकोऽस्ति, यत्र सप्तद्वीपाः सप्त समुद्राश्च समागता भवन्ति।

3. मूलसर्गः- तृतीयमूलसर्गो (जीवस्य नीचगतेः सर्गः) अस्ति। अस्मिन् तमोगुणस्य प्रधानता तिष्ठति, सत्त्वरजसी गुणभावेन तिष्ठतः। अत एवायं मोहमयो भवति। अस्य गणना पशुतः वृक्षपर्यन्तम् असित। तदित्थं भौतिकः सर्गः चैतन्योत्कर्षनिकर्षतारतम्याभ्याम् ऊर्ध्वादिभावेन त्रिविधः संजायते।[1]

### (7) प्रधानसृष्टिः

सृष्टिकारणानां विषये अनेके मतभेदाः। महदादि विशेषभूतानि यानि सन्ति स्थूलभूतानि तत्पर्यन्तस्सर्गः प्रकृत्यैव कृतः। नेश्वरेण, न ब्रह्मोपादानः, नाप्यकारणः। प्रकृतिर्नित्या यदि प्रकृतिमात्रेणैव संसारो भविष्यति तर्हि सदैव

---

[1] सा.बां.टी.पृ-455

भवितव्यम्। प्रलयः कदापि न भवितव्यः। प्रकृते प्रवृत्तिः पुरुषस्यमोक्षाय एव। अतः इयम्परार्था भवति। अयमारम्भस्स्वार्थेनापि वक्तुं शक्यते। यतोहि यत्र पुरुषः प्रकृतेः प्रवृत्तिस्स्थापना स्वार्थवदस्ति। प्रकृत्या पुरुषस्य मुक्तिरेव स्वार्थः। स्वार्थः चेतनशीले पदार्थे भवति। तथापि पुरुषं प्रति स्वाभाविकीप्रवृतिः प्रकृतिमालोक्यात्र प्रकृतिस्वार्थम् इति कथ्यते-

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः।

प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः।।[1]

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य।[2]

प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत।[3]

तथापि पुरुषार्थतां विना स्वार्थताऽपि न सिद्ध्यति। पुरुषादात्मविमोक्षणमिति।[4]

प्रलयावस्थायां प्रकृतिः साम्यावस्थाया तिष्ठति। तत्र त्रयो गुणाः समभावेन तिष्ठन्ति। प्रकृतेः पुरुषेण सह संयोगे एतेषु गणेषु क्षोभो जायते। क्षोभात् अस्थिरता भवति। प्रत्येकः गुणः भिन्नान् गुणानामाक्रान्तुं वशीकर्तुं व्याकुलो भवति। यद्वयमेव सबलाः स्याम् अन्यगुणांश्च वशीकुर्याम्। एवम्भूते सति गुणाः भिन्नभिन्नानुपातेषु परस्परं मिलित्वा तिष्ठन्ति, तदैव सृष्टिः समारभ्यते। "साम्यवैषम्याभ्यां

---

1 सां.का. -56

2 सां. सू. 2/1

3 सां.सू. 3/58

4 सां.प्र.भा.- पृ. 128

कार्यद्वयम्"[1], "सत्त्वादिगुणत्रयं प्रधानम्। तेषाञ्च वैषम्ययं न्यूनातिरिक्तभावेन संह्ननम्। तदभावः साम्यम्। ताभ्यां हेतुभ्यामेकस्मादेव सृष्टिप्रलयरूपं विरुद्धकार्यद्वयं भवतीत्यर्थः"[2]। सर्गक्रमनिरूपणावसरे सारबोधिनीकारः प्रकृतिपदस्य इत्थं प्रतिपादितं प्रकृतिपदं अव्यक्तमिति। सर्वकारणं प्रधानमस्ति। अतएव तस्याः मूलप्रकृतिः कथयति। प्रकृतेः महत्वं जायते ततः अहंकारोत्पन्नं भवति तस्मात् षोडशकः गणः इत्यस्मिन् पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि उभयात्मकं मनः अयमेव एकादशेन्द्रियाणि, पञ्चतन्मात्राणि सन्ति। टीकाकारः वदति "संख्याया अतिशदन्तायाः कन्" इति प्रस्तावे तदस्य परिमाणम्" इति कन् प्रत्यये "षोडशकः" इति सांख्येति। टकाकारोऽपि वाचस्पतिमिश्रानुसारेण गुणक्रमानुसारेण तन्मात्राभिः भूतसृष्टिः वर्णनं क्रियते। पञ्चमहाभूतवर्णने टीकाकारः योगसूत्रस्य भाष्यकारस्य च योगवार्त्तिककारस्योऽपि उल्लेखं कृतवान्। प्रधान सृष्टेः सविस्तरेण विवेचनं तत्त्वानां स्वरूपनिरूपणावसरे विहितत्वात् अत्र नोपस्थाप्यते इति।

**इति चतुर्थोऽध्यायः**

---

1 सां.सू. 6/42

2 सां.प्र.भा. 6/42

# पञ्चमोऽध्यायः

मोक्षप्रकरणम्

वैदिकदर्शने मोक्षस्वरूपम्

सांख्याभिमतमोक्षस्वरूपम्

वाचस्पतिमिश्रमतोपस्थापनम्

सारबोधिनीटीकाकारमतसमीक्षणम्



# पञ्चमोऽध्यायः

भारतीयदर्शनेषु मुक्तेः तन्मार्गस्य च व्याख्या पृथक् पृथगुपलभ्यते। इदमेव कारणं तत्र ज्ञायते यत्स्वसिद्धान्तपोषणाभिप्रायेण स्वसिद्धान्तसमर्थकैराचार्यैः विहितमेव मुक्तेः मुक्तिमार्गस्य च विवेचनम्। सिद्धान्तवैषम्याल्लक्ष्यते तत्रापि वैषम्यमिति। तत्र किं सत्यं किम्वाऽसत्यमिति निर्णयाभिप्रायेण प्रमुखानामेव तद्विषयकोल्लेखो विधीयतेऽत्र समासतः।

## अवैदिकदर्शने मोक्षस्वरूपम्

दुःखानामात्यन्तिकविनाशो मोक्ष इति सर्वेषां मतं वर्तते किन्तु चार्वाकास्तु नैवं स्वीकुर्वन्ति। तन्मतानुसारमात्मसत्तैवासंभवोऽत आत्मनः शरीरादिकबन्धेभ्यो दुःखादिभ्यश्च मोचनं निरर्थकं काल्पनिकञ्च। चैतन्यविशिष्टो देह एवात्मा तस्य पुनर्भूतचतुष्टये विलयनमेव मरणम्। तदेव स्वीकृतोऽपवर्गोऽत्रार्थात् सुखशान्तिस्वभावानन्दावस्था मोक्षाभिधेया तैः नैवाभिमता। "न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः"[1] इत्यनेन स्पष्टमेव यन्मुक्तेः किमपि स्थानं नास्त्यस्मिन् चार्वाकमते। साध्यस्यनास्तित्वे साधनं किं स्यादितिवन्मोक्षाभावे मोक्षमार्गोऽपि

[1] स.द.सं. पृ. 22

व्यर्थः एव। क्षणिकवादिनो बौद्धाः वस्तुतो नात्मनोऽस्तित्वं स्वीकुर्वन्ति। तथापि तेन रूपवेदनाविज्ञानसंज्ञासंस्कारादीनां पञ्चस्कन्धानां समाहारः संघो वाऽत्मा कल्पितः प्रज्ञप्तिमात्र एव। तस्यैव तृष्णाक्लेशदुःखपुनर्जन्मरणादयो जायन्ते ये तेषामेव निरोधो निर्वाणमिति। तच्च पञ्चस्कन्धानां रूपवेदनाविज्ञानसंज्ञासंस्कारादीनां स्वीयमूलतत्त्वे विलयनमेव [1]। नार्गाजुनानुसारं निर्वाणस्य स्वरूपमप्यवलोकनीयमत्र यथा –

अप्रहाणमसम्प्राप्तमनुच्छिन्नमशाश्वतम्।

अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते।।

बौद्धानुसारं निर्वाणस्य तात्पर्यं "शान्तं निर्वापितं वा प्रदीपनिर्वाणकल्पमात्मनिर्वाणमिति" [2] प्रतिपादनात्। यथा तैलादिसंस्काराभावान्निर्वापितं ज्योतिः प्रदीपाभावं साधयति तथैव वासनादिसंस्काराभावान्निर्वापितं कल्पितमात्मास्तित्वं कथन्नात्माभावं प्रसाधयेत्। बौद्धधर्मावलम्बी पटुश्च महाकविरश्वघोषोऽपि स्वकीये महाकाव्ये सौन्दरानन्देऽमुमेव तथ्यं पुष्णाति तदनुसारम् –

"दीपो यथा निर्वृत्तिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।

दिशं न काञ्चिद्विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम्।।

---

[1] भा.सा.नि. पृ. – 282

[2] स.सि. उत्थानिका पृ. – 2

तथाकृता निर्वृत्तिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद्विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति-शान्तिम्।।"

चतुरार्यसत्यपरिज्ञानेन सदाचरणानुष्ठानेन वा भिक्षुः क्लेशेभ्यो निवर्ततेऽर्थाद्रागस्य प्रहाणेन निर्वाणं लभते। चतुर्थार्यसत्यरूपेण भगवता बुद्धेन दुःख-निरोधाय निर्वाणोपलब्धये वाऽष्टाङ्गिकमार्गो विनिर्दिष्टः सम्यग्दृष्टि-संकल्प-वाक्-कर्मान्त-आजीविका-व्यायाम-स्मृति -समाधिसंयुतः" सन्ति। तस्य त्रीणि प्रमुखाङ्गानि शीलसमाधिप्रज्ञारूपाणि। शीलप्रज्ञे मिथः पूरकत्वेन स्वीकृते। प्रज्ञातः कामासवस्य भवासवस्याविद्यासवस्य चाभावो भवत्येव। जैनदार्शनिकानुसारं परिपूर्णतया दुःखनिवृत्तिः मुक्तिरभिमता। यावच्च जीवः परद्रव्यादिभ्यो ममत्वं विहाय स्वस्वरूप एव निमज्जत्यर्थात् सर्वपरपदार्थान् विस्मृत्य स्वस्वभावमेव संस्मृत्य स्वाश्रिततयैव निजात्मानं जानाति श्रद्दधाति चरति च तस्मिन्नेव तावदेव सर्वेभ्यः कर्मभ्यो विमुक्तं सन्नानन्दञ्चानुभूय मोक्षं लभते। मोक्षो मुक्तिः निःश्रेयसंनिर्वाणमिति नामान्तरम्। स्वरूपञ्चेत्थम् - "आत्यन्तिकसर्वकर्मनिक्षेपो मोक्षः" [1] "सर्वकर्मविप्रमोक्षो मोक्षो" [2] वा "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षो"[3] वेति।

## वैदिकदर्शने मोक्षस्वरूपम्

---

[1] त.रा.वा. - 1/1/39

[2] स.सि. - 1/1

[3] त.सू. - 10/1

भारतीयदर्शनानि दुःखस्याधारशिलायां प्रतिष्ठितानि सन्ति, प्रायः सर्वाणि दर्शनानि दुःखनिवृत्तेरुपायान्वेषणे सन्ति संलग्नानि। त्रिविधदुःखसन्तप्तानां प्राणिनां दुःखविनाशाय सुखसाधनाय च भवति स्वाभाविकी प्रवृतिः। सांसारिकदुःखानामात्यन्तिकनिवृत्तिपूर्वकं शाश्वतसुखप्राप्तेरूपायप्रदर्शनमेवास्ति दर्शनानां प्रधानं लक्ष्यम्। दार्शनिकसिद्धान्ते सांसारिकसुखं बन्धनं तन्निवृत्तिश्च मोक्ष उच्यते। इदमेव बन्धनं मोक्षश्च भारतीयदर्शनानां मुख्योऽस्ति विषयः। प्रधानं लक्ष्यमपि मोक्ष एव। अयं परमपुरुषार्थः मोक्षः, निःश्रेयसं, कैवल्यम्, अपवर्गो, निर्वाणं, मुक्तिश्चोच्यते। धर्मार्थकाममोक्षेषु चतुर्षुपुरुषार्थेषु मोक्ष एव मुख्यो नित्यो निरतिशयश्चास्ति। अत एव श्रेयोऽभिलाषिणो योगिनो धर्मार्थकामान् त्रीन् परिहाय अस्य मोक्षस्य प्राप्तये प्रयतन्ते। कर्मणो जगतश्च भयङ्करतामालोक्य तत्त्वविदो मुमुक्षवो भवन्ति। मोक्षविषये दार्शनिकानां विभिन्नमतमस्ति।

**न्यायवैशेषिकदर्शने मोक्षस्वरूपम्**

अपवर्गः तदुपलब्धिविधिश्चन्यायसूत्रानुसारं **'तदत्यन्तविमोक्षोऽपवर्गः'** [1] बन्धनस्य परिपूर्णतया निरोधो मोक्षो भवति, बन्धनन्तु जीवात्मनां शरीरमनः पञ्चज्ञानेन्द्रियतद्विषयज्ञानसुखदुःखादेकविंशतिकारणैः सञ्जायते। धर्मग्रन्थेष्वयमपवर्गः अभयमजरं मृत्युपदमित्यादिना लक्ष्यते। न्यायवैशेषिकमतावलम्बिनो दृढं मन्यन्ते यत्खलु मुक्तावस्थायां जीवात्मा नितान्तः जड़स्वभावः सुखदुः,खानुभवविहीनो वेति मुक्तावपि जड़त्वप्रतिपादनादानन्दादिविरहाच्च न्यायवैशेषिकमुक्तिः हास्यास्पदैव

---

[1] न्याय सू. 1/1/22

प्रतिभाति। किञ्च, एवम्भूतां मुक्तिमभिलक्ष्यैव जनाः मुक्तिं प्रतिप्रयत्नतो विरमन्तीति कृत्वाऽद्वैतवेदान्तस्य प्रकाण्डाचार्यशङ्करेण जड़वन्मुक्तिप्रतिपादकाः वैशेषिकार्धवैनाशिकाः प्रोक्ताः। नैषधे तु श्रीहर्षेण शिलावन्मुक्तिप्रतिपादनं मूढानामेव कर्मेत्युक्तम्। तदनुसारेण 'गौतमः' इत्यत्रातिशये तमप् प्रत्ययमादाय वृषभोत्तम इत्यर्थ प्रकटितो भवति। यथा–

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गौतमं तमवेक्ष्यैव यथा वित्थ तथैव सः।।[1]

अपि च, वैष्णवा अपीमां जडवतीमानन्दशून्यां मुक्तिमभिलक्ष्याक्षेपं कुर्वन्त्येव–

वरं वृन्दावने रम्ये श्रृगालत्वं वृणोम्यहम्।
वैशेषिकोक्तमोक्षात् तु सुखलेशविवर्जितात्।।[2]

सर्वथा सर्वदैव प्रत्येकमपि जीवस्य प्रबलेच्छानन्दावाप्तिभूतैव प्रतीयते। तदापूर्तय एव जीवात्मनां मुक्त्यर्थं प्रयत्नो भवतीति लोकानुभवः। किन्तु नैयायिकवैशेषिकास्तु मुक्तावपि साधयन् एवानन्दाभावमतः किं महत्वं तन्मुक्तेरिति विचारणीयास्ते।

एतद्दर्शनानुसारेण तत्त्वज्ञानमेवापवर्गसाधनम्। तत्त्वज्ञानाय च तदभिमतषोडशपदार्थानां सम्यक्परिज्ञानमावश्यकम्। प्रत्येकमपि जीवात्मा तत्त्वज्ञानपूर्वकं योगाभ्यासेन प्राक्संचितानि कर्माणि परिज्ञाय कायव्यूहेन

---

[1] नै.च. – 17/75

[2] स.सि.सं. पृ. 28

तद्भोग्यशरीराणि संरच्य तान्येव क्षिप्रमुपभुज्य सर्वकर्मविगलनात्पुनर्जन्मनिरोधाच्च धृतशरीरस्य विनाशे सति मुक्तिं लभते।

**मीमांसाभिमते निःश्रेयसम्–**

'स्वर्गकामो यजेत' इत्यनेन ज्ञायते यदस्मिन्मते सर्वधर्मानुष्ठानानां चरमं ध्येयं स्वर्गप्राप्तिवर्तते। सैव मुक्तिरिति मन्वते स्म मीमांसकाः। कालान्तरे च तैः दर्शनेतरप्रभावेन प्रभावितैः सद्भिः सांसारिकबन्धनेभ्यो मोचनं मुक्तिर्वा निःश्रेयसत्वेन स्वीकृता। तदनुसारं प्रपञ्चसम्बन्धविलयो मोक्षः। त्रेधा हि प्रपञ्चः पुरुषं बध्नाति। तत्र तावत्प्रपञ्चस्य त्रिविधत्वं– (1) भोगायतनं शरीरम् (2) भोगसाधनानीन्द्रियाणि (3) भोग्याश्च विषयाः शब्दादयः। तदस्य त्रिविधस्य बन्धस्यात्यन्तिको विलयो मोक्षः इति भाट्टवेदान्तमतयोर्मोक्षविषयको भेदः सुस्पष्टः। तथाहि–प्रपञ्चविलयो मोक्ष इति वेदान्त–मान्यतानुसारं जगतोऽवभासोऽ विद्याप्रभावादेव भवति ब्रह्मज्ञाने सति त्वविद्यालयाज्जगतः सत्ताऽपि न प्रतीयते। मीमांसकाः खलु जगतः सत्तां स्वीकृत्य 'जगदात्मनः सम्बन्ध एव विगलति' इति मन्यन्ते।

प्रभाकरमते नियोगसिद्धिः अर्थात् लोक–परलोकफलाभिलाषां बिना कर्तव्यबुद्ध्यैव नित्यकर्मानुष्ठानं मोक्ष इति। मोक्षदशायामात्मा नैवानन्दमनुभवति चिदभावात्। शरीरेन्द्रियविगलनाच्चैतन्याभावोऽतो न तत्र सुखदुःखानुभूतिः। न्यायवैशेषिकवन्मुक्तिरियमानन्दानुभूतिशून्यैव कल्पनीया। मीमांसकानुसारेण काम्यानि निषिद्धानि च कर्माणि यथा बन्धजनितानि सन्ति न तथा नित्य–नैमित्तिकानि। अतः उभयविधानि काम्यनिषिद्धकर्माणि वर्जनीयानि बन्धमुक्ताभिलाषिभिः।

नित्यनैमित्तिककर्माणि च सम्यग्प्रीत्यैवानुष्ठेयानि। तत्रापि नोपेक्षणीयमात्मज्ञानं सहकारिकारणत्वात्। नित्यनैमित्तिककर्माणि मुक्तेर्प्रधानकारणानि सहकारि चात्मज्ञानमिति।

**अद्वैतवेदान्ते मुक्तिः**

'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन' इति ब्रह्माद्वैतधारायामपि मुक्तेर्व्यवस्था विहितैव वेदान्तमहर्षिभिः। आचार्यशङ्करेण स्वीये शारीरिकभाष्ये लिखितमेव मुक्तेः स्वरूपं यदिदन्तु पारमार्थिकं, कूटस्थं, नित्यं, व्योमवत्, सर्वव्यापि, नित्यतृप्तं, निरवयवं, स्वयंज्योतिर्स्वभावं यत्र धर्माधर्मौ सह कार्येण कालत्रयञ्च नोपावर्तते तदशरीरं मोक्षाख्यम्। अद्वैतानुसारेणात्मा ब्रह्म मोक्षश्चैक एव। नित्यमुक्तोऽयमात्मा ब्रह्मवेति। मोक्षस्य तात्पर्यमपि नानात्वभावनोन्मूलनं मिथ्याज्ञाननिर्वृत्तिमात्रञ्च। मायाभिभूतोऽयं कर्मबन्धनः संसारी जीवात्मा यदा साधनचतुष्टयाश्रित्यनित्यानित्यवस्तुविवेकइहाश्रुत्रार्थभोगविरागः शमदमादिसाधनसम्पन्नो मुमुक्षुश्च भवति। तदैवास्ति स वेदान्तश्रवणाधिकारिः। तस्यैव कृते विधीयते वेदान्ताचार्यैः श्रवणमनननिदिध्यासनादिविधानम्। तदनुसारं जिज्ञासुः सः परमगुरुणा यदुपदिष्टं तदेव श्रद्धया श्रृणुयात्तदनन्तरं शिष्यस्य मिथ्यासंस्कारापगमे शान्तोदान्तो निःस्वार्थ-दयासिन्धुः ब्रह्मवेत्ता गुरुः 'तत्त्वमसि' इति ब्रह्मणो निष्प्रपञ्चं स्वरूपमुपदिशति। तत् श्रुत्वा सः जिज्ञासुशिष्यः स्वमनस्येव विचारयति यत्कथमहं ब्रह्मास्मि कथञ्च गुरुणोपदिष्टमिदम्। इत्थञ्च भृशं विचारयन् स मुर्हुमुहुः तदेव तत्त्वं निदिध्यासते। परिणामतः स ह्यनुभवति-"अहं ब्रह्मास्मि" इति। अयमेवानुभवो

वेदान्तिभिर्ब्रह्मज्ञानमिति मतम्। ब्रह्मात्मैकत्वविज्ञानं मोक्षत्वेन स्वीकरणीयं न खलु तत्काल्पनिकमध्यासरूपं वा। अद्वैतधारया न ज्ञानान्मुक्तिरपितु ज्ञानमेव मुक्तिरिति। ब्रह्मविद् ब्रह्मैव भवति। ब्रह्मैव खलु मुक्त्यवस्था। सा च नात्र सांख्यादिवदानन्दशून्याऽपितु मुक्तावपि भवत्यविच्छिन्नतयाऽनन्दावाप्तिः मुक्तजीवानाम्। ननु मुक्तावप्यानन्दनुभूतिश्चेतर्हि केनोपभुज्यते सा? ब्रह्मणा मुक्तजीवेन वा? न तावन्मुक्तजीवः तदुपभोक्तुमर्हति तदैव तस्य ब्रह्मरूपत्वात् तस्मिन्नेव तस्य विलय इति। न खलु ब्रह्मणा तदनुभूतिर्विधीयते तस्य नित्यकूटस्थपूर्णस्वभावत्वात्। प्रागेव परिपूर्णेऽस्मिन् ब्रह्मणि मुक्तिजीवस्य प्रयत्नेनैव जायमानायाः आनन्दानुभूतेः कियन्मूल्यमिति विचारणीयमेतत्। रामानुजाचार्यस्य विशिष्टाद्वैतानुसारेण मुक्तिः भक्तेः चरणपरिणतिरेव। न च तत्र ब्रह्मसदृशाः भवन्ति। ईश्वरस्य मुक्तजीवानाञ्च मिथो भिन्न-भिन्नसम्बन्धाधारेण मुक्तिः चतुर्विधा प्रपञ्चिता। (1) सान्निध्यमुक्तिः (2) सालोक्यमुक्तिः (3) सायुज्यमुक्तिः (4) सारूप्यमुक्तिः

तत्र सान्निध्यमुक्तौ जीवात्मा केवलमीश्वरस्य सन्निधिमवाप्नोति, सालोक्ये तु निवसतीश्वरलोके, सायुज्यमुक्तौ द्वयोरात्मेश्वरयोः संयोगः सञ्जातः सारूप्ये चात्माऽपि दिव्यतां संधार्य ब्रह्मसदृशो भवति। भगवत्कृपां विना मुक्तिप्रापणमसम्भाव्यमेवेत्येषां दृढमतमतो भगवद्भक्तिरेव मुक्तिसाधनं भक्तिप्रपत्योरेव मुक्तिसाधनत्वस्वीकारात्। प्रपत्तिस्तु शरणागतिः। साधकस्य भक्तिप्रपत्तिभ्यां संतुष्यैवेश्वरो मुक्तिं प्रददाति।

### साङ्ख्याभिमतमोक्षस्वरूपम्

वस्तुतस्तु साङ्ख्यदर्शनस्य मुख्योद्देश्यं कारिकायाः प्रथमश्लोक एव सुस्पष्टीकृतम्। तच्च दुःखत्रयाभिघातादिति। प्रकृतिपुरुषयोः परस्परं विविक्तयोर्जडचेतनयोः सक्रियनिष्क्रिययोः, सगुणनिर्गुणयोर्नैसर्गिकसम्मेलनेन तद्विवेकज्ञानच्च्युतो जीवः प्रकृतिधर्मान् स्वधर्मानिति विभाव्य दुःखितो जायते। प्रकृतिपुरुषज्ञानराहित्यमेव दुःखत्रयहेतुः, तद्बोध एव मोक्षोऽपवर्गो वा कथ्यते। अत्र त्रिविधदुःखात्यन्तनिवृत्तित्यन्तपुरुषार्थः।[1] एतदवबोधनाय प्रकृतिपुरुषयोर्वोधोऽनिवार्यः। अतोऽत्र तन्निरूप्यते-

अनादिकालिप्रवाहकारणात् प्रकृतिपुरुषयोः साम्याध्यासः जायते। परिणामतः प्रकृतौ जायमानाः सत्त्वरजस्तमोगुणात्मका धर्माः पुरुषेणनुभूयन्ते। एतदेवास्ति दुःखकारणं बन्धनहेतुर्वा साङ्ख्यनये। वस्तुतस्तु यावत्पुरुषस्य प्रकृतिबोधो न जायते तावदेवैते सुखदुःखमोहादयः पुरुषमाक्रमन्ते। यदा पुरुषः सर्वद्वन्द्वमूलभूतां प्रकृतिं पश्यति तदा सा झटित्येवादृश्यतां गच्छति।

तद्यथोक्तम् -

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य।।[2]

ज्ञानसमकालमेव प्रकृतिलोपा जायत इति भावः। अत एतयोः साम्याद्बन्धः पार्थक्यबोधाच्च मोक्ष इति सुस्थितम्।

---

[1] सां.सू. 1.1

[2] सां.का. 21

पुरुष सर्वावस्थायां निर्लेपः सुखदुःखादिभिर्भावैर्हीनस्थिष्ठति। सर्वाणि बन्धमोक्षादीनि कार्याण्यपि प्रकृतेरेव जायन्त इति स्पष्टतया प्रतिपादयति साङ्ख्यदर्शन्

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**

**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।**

अस्यायं भावं–यतः पुरुषः अगुणः अपरिणामी चास्ति, तस्माद् असौ न बध्यते। न संसरति संसारं न लभते, नापि मुच्यते मुक्तोऽपि न भवति, अपि तु नानाश्रया अनेके पुरुषाः आश्रयाः आलम्बनानि यस्या एवं भूता प्रकृतिरेव बध्यते बद्धा भवति। संसरति संसारं लभते, मुक्ता च भवति। पुरुषस्तु सर्वदा सर्वथा च निर्लेपस्तिष्ठति। इदमेवास्ति साङ्ख्यदर्शनदिशा मोक्षस्वरूपम्। प्रकृतिपुरुषयोः पृथक्त्वज्ञानं विवेकख्यात्या जीवः स्वकीयं यथार्थस्वरूपमभिजानाति बुद्ध्यहंकारादिभ्यश्चाप्रभावितो भवन् मुक्तिमवाप्नोति। नाहमनात्मा, नास्ति मम किञ्चित्, अहंकारोऽप्यसदिति तत्त्वज्ञानदृष्ट्या सततत्त्वचिन्तनाभ्यासेनात्मा शुद्धो विपर्ययहीनो निरपेक्षश्च संभूय मुक्तो भवति। तात्पर्यमिदं यत्तत्त्वज्ञानेनैवापवर्गः संभवति जीवानाम्। प्रोक्तञ्चापि–

एवं तत्त्वाभ्यासान्नास्मि न मे नाऽहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुपपद्यते ज्ञानम्।।[1]

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः।।[1]

[1] सां.का. –64

साङ्ख्ययोगयोः नास्ति किमपि वैषम्यं मुक्तिविषयकम्। तत्र योगः तत्त्वज्ञानार्थमेव व्यावहारिकरूपेण यमनियमासनप्रत्याहारप्राणायामधारणाध्यानसमाधिभिः साधनापथमाश्रयते। तत्र सांख्यसिद्धान्ते असङ्गनिर्विकारपुरुषस्य कस्यापि कर्मणः कर्तृत्वाभावात् पुरुषे धर्माधर्मयोरुत्पत्तिर्न संभवति, कर्मणः कर्तरि एव विहितनिषिद्धकर्मजन्यधर्माधर्मयोरुत्पत्तेः, धर्माधर्मावेव च स्वाधिकरणे सुखदुःखे उत्पादयतः, पुरुषस्याकर्तृत्वे पुरुषस्य दुःखध्वंसरूपो मोक्षो न स्यात्, पुरुषेऽकर्तृत्वेन धर्माधर्माद्यनुत्पत्त्या दुःखादेरनुत्पादादिति शङ्काग्रन्थार्थः। ततश्च धर्माधर्मयोरभावेन पुरुषे सुखदुःखयोरपि उत्पत्तिर्न स्यात्, दुःखानुत्पत्तौ च दुःखसंबन्धरूपबन्धस्य दुःखध्वंसरूपमोक्षस्य च पुरुषे नास्ति संभवः। **"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते"** इत्यादिशास्त्रवचनैश्च जीवात्मैव बन्धमोक्षभागी प्रतिपाद्यते। सांख्यनयेऽपि पुरुषस्य भोगमोक्षार्थमेव प्रधानस्य प्रवृत्तिरङ्गीक्रियते। तत्र प्रधानस्य विषयाकारपरिणामे पुरुषस्य भोगः, बुद्ध्या विवेकरूपे परिणामे च पुरुषस्य मोक्षः। तत्र "बुद्धिः आत्मनो भिन्ना" इति भेदज्ञानं विवेकः। तदिदं सर्वमसङ्गतं स्यादिति चेत् अत्राहुः यद्यपि शास्त्रे जीवात्मनो बन्धमोक्षभागित्वमुक्तम्, तथापि वस्तुतो बन्धमोक्षौ महत्तत्त्वनामिकायां बुद्धावेव भवतः, पुरुषस्य पुष्करपलाशवन्निर्लेपत्वात्। पुरुषे तु विद्यमानायां बुद्धौ बद्धत्वम्, अविद्यमानायां च तस्यां मुक्तत्वमुपचर्यते। तथाहि बुद्धौ विद्यमानायामेव

[1] सां.का. -44

चक्षुरादीन्द्रियद्वारा बाह्यघटादिप्रदेशे प्राप्ताया बुद्धेः "अयं घटः, अयं पटः" इत्यादिरूपो घटादिविषयाकारः परिणाम उत्पद्यते। स बुद्धिपरिणाम एव घटादिविषयकवृत्तिज्ञानमुच्यते। तेन वृत्तिज्ञानेन सह संबन्धे सति घटादयो विषयाः "स्वाकारज्ञानपरिणामिबुद्धावगृहीतभेदकत्वरूपपरम्परासंबन्धेन पुरुषाः उपचारिता भवन्ति। तस्मात् घटादयो विषयो एव पुरुषस्य असङ्गनिर्विकारस्वरूपं तिरोधार्य्य संसारसंवादका भवन्ति। अयमेव पुरुषस्य बन्धः। अत्र 'स्व' शब्देन घटादिविषयाणां ग्रहणं तेषाम् आकारः "अयं घटः" इत्यादिरूपं वृत्तिज्ञानम्, तस्य परिणामी उपादानकारणं बुद्धिः, तया सह अत्यन्तसान्निध्यरूपदोषेण न गृहीतो भेदो यस्य पुरुषस्य सोऽगृहीतभेदकस्तस्य भावस्तत्त्वम्। ईदृशबुद्धिघटितपरम्परासंबन्धेन बाह्य घटादयो विषयाः पुरुषे तिष्ठन्तीत्यर्थः। विवेकेन बुद्धिनाशे 'अयं घटः" इत्यादिरूपो घटादिविषयाकारवृत्तिज्ञानरूपपरिणामो नश्यति, वृत्तिज्ञानाभावे बाह्यघटादिविषयाणां पुरुषेऽसंबन्ध इति कैवल्यरूपेण पुरुषस्थितिः। अयमेव पुरुषस्य मोक्षः। इमावेव आरोपितौ बन्धमोक्षावादाय शास्त्रेषु जीवात्मनो बन्धमोक्षभागित्वमुक्तमिति। बुद्धिसत्त्वे इन्द्रियद्वारा बहिर्निर्गताया बुद्धेर्घटादिदेशप्राप्तौ घटाद्याकारेण परिणतिर्जायते, सैव ज्ञानमित्युच्यते, तादृशज्ञानेन संबद्धो घटादिर्विषयः, स्वाकारज्ञानकारणबुद्ध्या अगृहीतभेदकत्वसंबन्धेन पुरुषनिष्ठः सन् पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारापादको भवति। बुद्धिनाशे तु तत्परिणामस्य

घटाद्याकारस्याभावेन विषयसंबन्धभानाभावात् पुरुषे बद्ध इति व्यवहारो न वास्तविकः, दुःखसंबन्धस्य बुद्धावेव सत्त्वात्, भेदग्रहे बुद्धिनिवृत्तौ तु पुरुषस्य मोक्षः सिद्ध एव। तथा च पुरुषे बद्धमुक्तव्यवहारः, औपचारिक एव, दुःखसंबन्धतद्ध्वंसरूपबन्धमोक्षयोर्बुद्धावेव सत्त्वात्। तथा चोक्तम् - **"बध्यते मुच्यते च नानाश्रया प्रकृतिः"** [1] इति। बुद्धौ भेदाग्रहश्च बुद्धिसानिध्यरूपदोषादेवेति।

सांख्यसिद्धान्ते असङ्गनिर्विकारपुरुषस्य कस्यापि कर्मणः कर्तृत्वाभावात् पुरुषे धर्माधर्मयोरुत्पत्तिर्न संभवति, कर्मणः कर्तरि एव विहितनिषिद्धकर्मजन्यधर्माधर्मयोरुत्पत्तेः, धर्माधर्मावेव च स्वाधिकरणे सुखदुःखे उत्पादयतः, पुरुषस्याकर्तृत्वे पुरुषस्य दुःखध्वंसरूपो मोक्षो न स्यात्, पुरुषेऽकर्तृत्वेन धर्माधर्माद्यनुत्पत्त्या दुःखादेनरनुत्पादादिति शङ्काग्रन्थार्थः। ततश्च धर्माधर्मयोरभावेन पुरुषे सुखदुःखयोरपि उत्पत्तिर्न स्यात्, दुःखानुत्पत्तौ च दुःखसंबन्धरूपबन्धस्य दुःखध्वंसरूपमोक्षस्य च पुरुषे नास्ति संभवः। **"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते"** इत्यादिशास्त्रवचनैश्च जीवात्मैव बन्धमोक्षभागी प्रतिपाद्यते। सांख्यनयेऽपि पुरुषस्य भोगमोक्षार्थमेव प्रधानस्य प्रवृत्तिरङ्गीक्रियते। तत्र प्रधानस्य विषयाकारपरिणामे पुरुषस्य भोगः, बुद्ध्या विवेकरूपे परिणामे च "बुद्धिः आत्मनो भिन्ना" इति भेदज्ञानं विवेकः। तदिदं पुरुषस्य मोक्षः। तत्र

---

[1] सां.का. - 62

सर्वमसङ्गतं स्यादिति चेत् अत्राहुः यद्यपि शास्त्रे जीवात्मनो बन्धमोक्षभागित्वमुक्तम्, तथापि वस्तुतो बन्धमोक्षौ महत्तत्त्वनामिकायां बुद्धावेव भवतः, पुरुषस्य पुष्करपलाशवन्निर्लेपत्वात्। पुरुषे तु विद्यमानायां बुद्धौ बद्धत्वम्, अविद्यमानायां च तस्यां मुक्तत्वमुपचर्यते। तथाहि बुद्धौ विद्यमानायामेव चक्षुरादीन्द्रियद्वारा बाह्यघटादिप्रदेशे प्राप्तायाः बुद्धेः "अयं घटः, अयं पटः" इत्यादिरूपो घटादिविषयाकारः परिणाम उत्पद्यते। स बुद्धिपरिणाम एव घटादिविषयकवृत्तिज्ञानमुच्यते। तेन वृत्तिज्ञानेन सह संबन्धे सति घटादयो विषयाः "स्वाकारज्ञानपरिणामिबुद्धावगृहीतभेदकत्वरूपपरम्परासंबन्धेन पुरुषाः उपचारिता भवन्ति। तस्मात् घटादयो विषयो एव पुरुषस्य असङ्गनिर्विकारस्वरूपं तिरोधार्य्य संसारसंवादका भवन्ति। अयमेव पुरुषस्य बन्धः। अत्र 'स्व' शब्देन घटादिविषयाणां ग्रहणं तेषाम् आकारः "अयं घटः" इत्यादिरूपं वृत्तिज्ञानम्, तस्य परिणामी उपादानकारणं बुद्धिः, तया सह अत्यन्तसान्निध्यरूपदोषेण न गृहीतो भेदो यस्य पुरुषस्य सोऽगृहीतभेदकस्तस्य भावस्तत्त्वम्। ईदृशबुद्धिघटितपरम्परासंबन्धेन बाह्यघटादयो विषयाः पुरुषे तिष्ठन्तीत्यर्थः। विवेकेन बुद्धिनाशे 'अयं घटः" इत्यादिरूपो घटादिविषयाकारवृत्तिज्ञानरूपपरिणामो नश्यति, वृत्तिज्ञानाभावे बाह्यघटादिविषयाणां पुरुषेऽसंबन्ध इति कैवल्यरूपेण पुरुषस्थितिः। अयमेव पुरुषस्य मोक्षः। इमावेव आरोपितौ बन्धमोक्षावादाय शास्त्रेषु जीवात्मनो बन्धमोक्षभागित्वमुक्तमिति।

बुद्धिसत्त्वे इन्द्रियद्वारा बहिर्निर्गताया बुद्धेर्घटादिदेशप्राप्तौ घटाद्याकारेण परिणतिर्जायते, सैव ज्ञानमित्युच्यते, तादृशज्ञानेन संबद्धो घटादिर्विषयः, स्वाकारज्ञानकारणबुद्ध्या अगृहीतभेदकत्वसंबन्धेन पुरुषनिष्ठः सन् पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारापादको भवति। बुद्धिनाशे तु तत्परिणामस्य घटाद्याकारस्याभावेन विषयसंबन्धभानाभावात् पुरुषे बद्ध इति व्यवहारो न वास्तविकः, दुःखसंबन्धस्य बुद्धावेव सत्त्वात्, भेदग्रहे बुद्धिनिवृत्तौ तु पुरुषस्य मोक्षः सिद्ध एव। तथा च पुरुषे बद्धमुक्तव्यवहारः, औपचारिक एव, दुःखसंबन्धतद्ध्वंसरूपबन्धमोक्षयोर्बुद्धावेव सत्त्वात्। तथा चोक्तम् - "बध्यते मुच्यते च नानाश्रया प्रकृतिः"[1] इति। बुद्धौ भेदाग्रहश्च बुद्धिसानिध्यरूपदोषादेवेति।

अत्र टीकाकारः वदति "यत्ने कृतेऽपि बाधो नैव भवति, बुद्धिर्हि तत्त्वपक्षपातिनी विपर्ययाननादृत्य तत्त्वमेवावलम्बते"[2], अर्थात् निरूपद्रवज्ञाने जाते आत्मनः निष्क्रियत्वं कर्तृत्वम् अहम् इति प्रतियते भवति। तदा अकर्तृत्वाभावे पुरुषस्य ओदासीन्यमपि सिद्ध्यति, अत एव टीकाकारः वदति "कर्तृत्वाभावे च स्वामित्वाभावो न ह्यलसमनुद्योगपरमत्यन्तोदासीनं कश्चित्स्वामिनं मन्यते,

[1] सां.का. 62

[2] सां.त.कौ. 220

स्वोद्योगार्जितं च धनं समर्पयतीति पुरुषो न मे किञ्चिदिति तात्त्विकं स्वस्य स्वामित्वाभावं गृह्णाति विवेकख्यात्यनन्तरम्"[1]।

सांख्यशास्त्रे बन्धः अज्ञानजन्यः मोक्षस्य सिद्ध वस्तुः एव सिद्ध वस्तुनः मोक्षस्य प्रतिबन्धकः अज्ञानं, तस्य अज्ञानस्य निवृत्तिः विवेकज्ञाननेव संभवति। अत एव अत्र वाचस्पतिमिश्रः इत्थं जिज्ञासायां उपस्थापयति – **"एतावत्सु ज्ञातेष्वपि कश्चित्कदाचिदज्ञातो विषयोऽस्ति, तज्ज्ञानं च जन्तूबन्धयिष्यतीति"**[2], तस्य समाधानं दीयते नास्ति कञ्चिद् परिशिष्टं ज्ञातव्यं अत एवोक्तम् 'अज्ञानहेतुको बन्धः' अपवर्गस्तु सिद्धावेव अज्ञाननिवृत्तौ सति विवेकज्ञानं तेन च मोक्षः सम्भवति तर्हि कथम् अज्ञाननिवृत्तिः किं च तस्य स्वरूपमप्यत्र वदति कारिकाकारः–

"तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्"[3]।

अर्थात् धर्माधर्मादि सप्त भावानां ज्ञानविरोधिनां निवृत्तिः ज्ञाननेव (प्रकृति पुरुषः ज्ञानमेव) भवति। धर्मादयः सप्तभावाः बुद्धिगताः एता एव बन्धहेतुकाः, बन्धहेतुकानामेतेषां निवृत्तौ मोक्षः सिद्धयति, परञ्च धर्मादिभिः सात्त्विकभावेहि (धर्मवैराग्येश्वर्यम्) अपि यद्यपि प्रकृत्यादि तुष्टयाः जायन्ते तास्तु अज्ञानपूर्विका

---

[1] सां.त.कौ. 221

[2] सां.त.कौ. 221

[3] सां.का. 65

एव, अत एव टीकाकारः वदति – "ततः प्रकृतिदर्शने संवृत्ते तु सात्त्विक्या बुद्धेरपि न स्थितिः"[1]। विवेकख्यातिरपि बुद्धेः एव कार्यं तेन एव पुरुषस्य कथम् अपवर्गः सिद्धि इत्यत्र टीकाकारेणोक्तम् – "विवेकख्यात्यनन्तरं तु संसारोद्भवमारभ्य विवेकख्यात्यवधिकं सकलं प्रकृतिकार्यं नात्मीयत्वेनोदासीनः पुरुषो निश्चिनोतीति"[2]। अत्र कारिकाकारेण – "ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति"[3]। इत्यत्र यद् उभयं पदं प्रयुक्तं तस्य व्याख्यानं कृतं "ऐकान्तिकम् – अवश्यम्भावि, 'आत्यन्तिकम्' अविनाशीति–'उभयं कैवल्यं'। तस्य व्याख्याने टीकाकारेणोक्तं 'ज्ञानाग्निमानारब्धानां सर्वेषां कर्मणां दग्धत्वादुपभोगेन चारब्धकर्मणां क्षयादपवर्गसिद्धौ भविष्यद्भोगस्यासंभवाद्भोगापवर्गमात्रफलायास्तत्फलद्वये प्रसूतेऽनवशिष्ट-प्रयोजनान्तरायाः प्रकृतेर्विनिवृत्तौ परमपुरुषार्थं पुरुषः प्राप्नोति, एवं प्राप्तस्य कैवल्यस्यावश्यभाव्यत्वं ज्ञानिनो, न च तस्य पुनरावृत्तिः"[4] इति।

**वाचस्पतिमिश्रमतोपस्थापनम्**

अत्र विवेकख्यात्यनन्तरं मोक्षः सम्भवति, मोक्षः तु देहस्य नाशः देहनाशस्यापि कथं चेतनः पुरुषः प्रकृतिं द्रष्टुं शक्यते, एतेन मतमुपस्थापयति

---

[1] सां.त.कौ. 222

[2] सां.त.कौ. 222-23

[3] सां.का. 68

[4] सां.त.कौ. 225

आचार्यमिश्रः तत्त्वज्ञाने ज्ञातेपि पुरुषस्य मोक्षो न सम्भवति, प्रारब्धकर्मणां क्षयाभावात्, तर्हि इयं शंका जायते यत् प्रारब्धकर्मणां नाशः कथं स्यात्। प्रारब्धकर्मणां भोगानां क्षयः क्रियते चेत् तर्हि तु कर्मणामेव क्षयः मोक्षकारणं स्यात् किं तत्त्वज्ञानं मोक्षं प्रतिहेतुः इति जिज्ञासायां कारिकाकारः इत्थं वदति -

"सम्यग् ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ।

तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः।।"[1]

एतद् विषये कौमुदीकारेणोक्तं- "तत्त्वसाक्षात्कारोदयादेवानादिरप्य-नियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते"[2]। अत्र तत्त्वकौमुदीकारेण 'स्याद एतद्' इति। शास्त्रेण कथं अपरिणामी पुरुषस्य मोक्षः इति, जिज्ञासामुथाप्य पुरुषविमोक्षार्थमिति 'रिक्तं' वचः इत्युक्तम्। पुनश्च अग्रे इत्थं प्रतिपादितं "बन्धमोक्षसंसाराः पुरुष उपचर्यन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते - तदाश्रयेण भृत्यानां तद्भागित्वात्, तत्फलस्य च शोकलाभादेः स्वामिसंबन्धात्"[3]। विपर्ययरहितेन एतादृशः संशयविपर्ययरहितेन अभ्यासेन तत्त्वज्ञानमुदेति इति ग्रन्थकर्तुः आशयः, तादृशस्य संशयविपर्ययरहितभ्यासजन्यस्य ज्ञानस्य स्वरूपं किमिति जिज्ञासायां

---

[1] सां.का. 67

[2] सां.त.कौ. 223

[3] सां.त.कौ. 219

कारिकाकारेणेवमुक्तं "नास्मि न मे नाहमिति"[1], अर्थात् कौमुदीकारेण अत्र निरुपद्रवभूतार्थस्वभावस्य इत्यनेन संकेतितं यत् तादृशं तत्वज्ञानं निरुपद्रवं भवति। 'निरुपद्रवः संशयाद्युपद्रवरहितः' इत्यर्थः।

## सारबोधिनीटीकाकारमतविश्लेषणं समीक्षणञ्च

साङ्ख्यानुसारं त्रिविधानि दुःखानि सन्ति। तत्राध्यात्मकानि शरीरमनोगतरोगक्रोधसंतापक्षुधादीनि; आधिभौतिकानि विषकण्टकशस्त्रसर्पदंशादीनि; आधिदैविकानि नक्षत्रभूतप्रेतादिजनितानि। तेभ्यः सर्वेभ्योदुःखेभ्य आत्यन्तिकीनिवृत्तिः मोक्षोऽपवर्गो वा स्वीक्रियते पुरुषस्य प्रकृतिविकृतिभ्यो वियोगश्चापि।[2] साङ्ख्यमते पुरुषः शुद्धचैतन्यस्वरूपो निष्क्रियो निर्गुणो देशकालधर्माधर्मबन्धमोक्षातीतः। वस्तुतः संसारबन्धमोक्षादयः प्रकृतावेव सन्ति न प्रकृतिविकृतिविहीनस्य पुरुषस्य। उक्तञ्चापि-

तस्मान्न बध्यते नाऽपि मुच्यते नाऽपि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।[3]

तथाप्युचारतो बन्धमोक्षौ कल्पितौ पुरुषे। यथा योद्धृषु वर्तमानावपि जयपराजयौ राजन्युपचर्येते तस्य फलभोक्तृत्वात्तथैव बन्धमोक्षौ बुद्धावेव प्रतिबिम्बतौ सन्तौ पुरुषे व्यपदिश्येते। पुरुष एव प्रतिबिम्बत्वेन बन्धमोक्षयोर्भोक्तेति। तथाहि उक्तं

1 सां.त.कौ. 220
2 व.द.सं. पृ-153
3 सां.का. -62

टीकाकारेण अत्रायं निष्कर्षः– "पुरुषस्तावच्चैतन्यमात्रवपुः कूटस्थो नित्यमुक्तः, सांसारिकंसुखदुःखानुभवरूपो भोगः परिणामिन्या बुद्धेर्धर्मः, पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तदर्शनमात्रं भोगः। तेन तस्य विवेकाग्रहादाध्यासिकं भोक्तृत्वम्। विवेकख्यात्या भोक्तृत्वाध्यासमात्रनिर्वृत्तिर्मोक्षः[1]। "धर्मादीनां बुद्धेरेव परिणामविशेषरूपत्वादिति भावः। तथा च विपर्ययादीनां बुद्धिकार्यत्वेन बुद्धावन्तर्भावान्न तत्त्वान्तरत्त्वमिति भावः"[2]। पुनश्च धर्मादि अष्टभावानां फलनिरूपणावसरे किञ्चित् विशिष्टं व्याख्यानं प्रदर्शितं टीकाकारेण– "पुरुषापवर्गौ हि मुख्यप्रयोजनतया प्रकृतेः अवश्यकर्तव्यः, स चेन्निष्पादितः तदा तं प्रति प्रवृत्तिरनर्थिकेति भावः। विवेकख्यातिं प्रति शनैः शनैः प्रकृतिः स्वयं प्रवर्तते, तदेव हि तस्या अन्तिमम् उद्देश्यम्, तं साधयित्वा साध्यान्तराभावाद् यस्य पुरुषस्य अपवर्गो जातः ततो निवर्तते इति तत्त्वम्"[3] इति।

एतद्विपरीतं ये अतत्त्वज्ञाः भवन्ति ते प्रकृतिलयं गच्छन्तीति अर्थात् प्रकृतावात्मत्वेन अभिमतायां विपर्ययबद्धा इति ज्ञेयम्। ये खलु स्थूलभूतादीन् उपासते ते वैकृतिकाः, ये विकारानेव पुरुषबुद्ध्या उपासते तेषां वैकारिको बन्धः। एतेषां कृते सांख्याचार्यैः इयं व्यवस्था प्रतिपादिता। तथा हि -

आत्मबुद्ध्या इन्द्रियोपासकाः — एक मन्वन्तरं

आत्मबुद्ध्या भूतोपासकाः — शतं मन्वन्तरं

---

[1] सा.बो.टी. पृ-413

[2] सा.बो.टी. पृ-413

[3] सा.बो.टी. पृ-406

**आत्मबुद्ध्या अहंकारोपासकाः** **सहस्रं मन्वन्तरं**

**आत्मबुद्ध्या बुद्ध्योपासकाः** **दससहस्राणि मन्वन्तरं**

तथा हि उक्तं पूर्णं शतं सहस्रं तु तिष्ठन्त्यव्यक्तचिंतकाः[1]। एवमेव ये दाक्षणिकाः सन्ति तेषां दाक्षणिकः बन्धः भवतीति। दाक्षणिकस्य लक्षणं कृतं टीकाकारेण –

"अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते।
वापीकूपतडागादि देवतायतनानि च।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते।" इति।

इष्टं च पूर्वः च अनयोः समाहारः इष्टापूर्तं तेन। समाहारद्वन्द्वे पूर्वपदस्य दीर्घः। दाक्षणिकः= दक्षिणमार्गेण धूमादिना चन्द्रलोकादिप्राप्तत्वरूपो बन्धः इत्यर्थः। ननु "तद्विपर्ययाद्बन्धः" इत्यनेन "आत्मतत्त्वज्ञानाभाववतामेव बन्धः इत्युक्तम्"[2]। श्रुतिरपि वदति "यद्वा– दक्षिणमार्गेण चन्द्रलोकाभिगामी दाक्षिणकः, "अथ यं इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति"[3] इति श्रुत्या इष्टादिकारिणां धूमादिदक्षिणमार्गगामित्वप्रतिपादनादिति द्विधा दाक्षिणकशब्दाभिधेय ऊह्यः"[4]।

एवञ्च ये विरक्ताः सन्ति किन्तु तेषामात्मज्ञानं नहि जातम्, ते प्रकृतौ लयाः भवन्ति। "तथा ते प्रकृतौ तत्कार्येषु महत्तत्त्वादिष्वेव वा आत्मबुद्ध्या तेषाम्

---

[1] सा.बां.टी. पृ- 407

[2] सा.बां.टी. पृ-407-408

[3] छा. 5/10/3

[4] सा.बां.टी. पृ-408

उपासनां कुर्वन्ति, तेषां तत्तदुपासनानुसारेण प्रकृत्यादिषु लयो भवति, भूयश्च संसारे आगमनं भवतीति सरलार्थः"[1]। सांसारिकविषयेषु रागात् नरकः, यागाद्यनुष्ठानेन च स्वर्गः विहितः वर्तते। तथाहि "शास्त्रनिषिद्धविषयकरागात्प्रवृत्तिद्वारा नरकः, एवं यागादिरागात् स्वर्गादिः। सांख्यादिगोचराच्छास्त्रविहितकर्मकरणेनेहलोकभोगपुरःसरपरलोकप्राप्तिरिति बोध्यम्"[2]।

| बन्धः | अधिकारिः | फलम् | कालः | व्यवस्था |
|---|---|---|---|---|
| प्राकृतः | प्रकृतेरुपासकः | प्रकृतिलयः | एकलक्षम् | प्रकृतेः आत्मबुद्ध्या उपासनाकारी |
| वैकृतः | इन्द्रियेषुआत्मबुद्ध्याचिन्तकः– आत्मबुद्ध्या बुद्धेरुपासकः आत्मबुद्ध्या अहङ्कारोपासकः पृथिव्यादिभूतेषु आत्मबुद्ध्या उपासकः | विगतज्वरता बुद्धौ लयः अहंङ्कारेलयः भूतेषु लयः | दशमन्वन्तरम् दशसहस्त्रम् एकसहस्त्रम् शतम् | |
| दाक्षिणकः | इष्टापूर्तकारी (यज्ञानुष्ठानकारी) ईश्वरार्पणबुद्ध्या इष्टापूर्तकारी | स्वर्गः क्रममुक्तिः | विधौ कथितः कालः | क्रमश्चायमस्ति–प्राक् निष्कामकर्मानुष्ठानम्, ततः तेन अन्तःकरणशुद्धिः, ततः तत्त्वज्ञानम्, ततो |

[1] सा.बो.टी. पृ–409

[2] सा.बो.टी. पृ–410

| | | | | |
|---|---|---|---|---|
| | | | | मोक्ष इति। |

वस्तुतः पुरुषो न बद्धो नापि मोक्ष्यत इति"[1]। अपि च "अविद्याधीनप्रकृतिसंयोगो हि अतात्त्विकः पुरुषस्य बन्धः, तन्मूलक एव प्रेत्यभावनामकः संसारः, वैराग्येण तत्त्वसाक्षात्कारात् ततो मोक्षः" इत्येवम् एषां क्रमिकत्वमिति द्रष्टव्यम्"[2]। पुनरत्रोक्तं यत् यो हि शास्त्रे बन्धमोक्षव्यवस्था व्यवस्थापितः तस्याः व्यवस्थायाः आश्रयः कः इति जिज्ञासायां उच्यते – नानापुरुषस्याश्रया प्रकृतिरेवेति। यदा प्रकृतिपुरुषयोरभेदप्रतीतिः जायते तदैव बन्धः भवतीति। तथा हि उक्तं "भेदप्रतीतिरोधानेन प्रकृतिगता बन्धादयः पुरुषगतत्वेन प्रतीयन्ते इति यावत्। तथा च बन्धादिकं बुद्धिनिष्ठमेव पुरुषे तत्सम्पर्कात् तद्गतमारोप्यत एव केवलं, न तु तदप्यस्तीति भावः"[३]। पुरुषस्य बिम्बं बुद्धौ प्रतिफलति तेन सह–बुद्ध्यहंकारमनोरूपतया पुरुषस्य स्वरूपावबोधनमेव बन्धः। अत्र पुनः जिज्ञासा जायते यत् पुरुषः भिन्नः प्रकृतिः भिन्ना तर्हि प्रकृतिपुरुषयोः सम्बन्धित्वेन यो हि उपचारः कथं भवतीति, तर्हि उच्यते "तथा च प्रकृतिपुरुषयोः एकत्वज्ञानं न सौसादृश्यात्, किं तु विविक्तया ग्रहाभावस्य अनादित्वादेव, अतः प्रकृतिसंबद्धभोगापवर्गयोः पुरुषसंबन्धित्वेन प्रतीतिरुपपन्नेति भावः"[4]। 'टीकाकारः अत्र बन्धमोक्षयोर्हेतुं

---

[1] सा.बां.टी. पृ–473

[2] सा.बां.टी. पृ–473

[3] सा.बां.टी. पृ–473

[4] सा.बां.टी. पृ–474–475

प्रदर्शयति "धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि अष्टभावाः पूर्वमुक्ताः, तत्र ज्ञानं वर्जयित्वा अन्यानि सप्त प्रकृतिरूपाणि बन्धहेतवः, ज्ञानाख्यं तु तद्रूपं बन्धविमोचकम्"[1]। अर्थात् आत्मनात्मनोरभेदज्ञानं बन्धनं तयोरेव च भेदज्ञानं मोक्षः। अत्र इदमवधेयं यत् बुद्धौ यो हि अष्टौ भावाः सन्ति तेषु सप्तभिरेवतु बध्नाति अर्थात् तत्त्वज्ञानवर्जं ये सप्तभावाः धर्मादयः सन्ति ते बन्धहेतवः ज्ञानं तु मोक्षे हेतुरिति। तथा वदति टीकाकारः – "धर्मादिरूपबन्धहेतुभावसप्तकभिन्नेन निजस्वरूपेणेत्यर्थः। अष्टसु भावेषु मध्ये तत्त्वज्ञानेतरसप्तानां बन्धकत्वाभिधानात् तत्त्वज्ञानस्यैकस्यैव पारिशेष्यादिति भावः" [2] । अत्राचार्यः चन्द्रिकाकाराणां मतमुपस्थापयति "एतेन निदिध्यासनसहकृतेन मनसैव आत्मगोचरनिर्विकल्पकसाक्षात्कारो भवति, न श्रुतानुमानाभ्याम्, तयोस्तत्रासामर्थ्यात्, इति बोधितम्। यथाह समानतन्त्रे भगवान् पतञ्जलिः-"ऋतम्भरा तत्र प्रज्ञा श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्" 'यज् ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्यमवशिष्यते' इति तत्त्वम्। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्[3] कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति([4]) इत्यादिश्रुतेः"। [5] इति। स च मोक्षः सुखदुःखादिरहितः। अतोऽत्र प्रतिभाति यदभावात्मके मोक्षेऽस्मिन् आनन्दादेः

---

[1] सा.वां.टी. पृ-475

[2] सा.वां.टी. पृ-476

[3] (छा. 6/1/3)

[4] मु. 1/1/3

[5] सा.वां.टी. पृ-477

स्थितिर्नास्ति सत्त्वगुणपरिणामत्वात्। तस्मादेवास्य सांख्योपदिष्टमोक्षस्य सुखाभिलाषिणां कृते किमुपयोगः? एतन्मतानुसारं द्विविधा मुक्तिः जीवनमुक्तिः विदेहमुक्तिश्च।

इति पंचमोऽध्यायः

# उपसंहारः

समेषां दर्शनानां मुख्यं लक्ष्यं निःश्रेयसम्। तच्च निःश्रेयसं कथं सम्भवति इत्यत्र विद्यते दार्शनिकानां विप्रतिपत्तिः। परन्तु आत्मसाक्षात्कारेणैव मोक्षस्यावाप्ति इति वैदिकदार्शनिकानामभिमतम्। तत्र आत्ममननाय मन्दाधिकारिणां कृते च वेदान्तशास्त्रमिति विवेकः। "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[1]। इति श्रुतिवाक्याद् ज्ञायते यत् श्रवणं मननं निदिध्यासनं च आत्मसाक्षात्कारे साधनम्। तत्र कल्याणं मे भूयाद् इति प्रेप्सया सच्छास्त्रश्रवणम्। श्रुतस्य अर्थस्य युक्तिभिः विचारो मननम्। चित्तस्य तैलधारावत् निरवच्छिन्नप्रवाहीकरणं निदिध्यासनमिति विवेकः। तच्चात्र मननांशे कनिष्ठमध्यमोत्तमाधिकारिभेदेन पञ्चदर्शनानि समागतानि भवन्ति। न्यायवैशेषिकाभ्यां देहेन्द्रियाद्यनात्मवस्तुभ्य आत्मभावं व्यावर्त्य तद्भिन्ने विभुरूपे नित्यात्मनि जिज्ञासूनां बुद्धिः स्थिरीकृता, परं सुखदुःखेच्छाबुद्धिकामक्रोधलोभमोहमदमात्सर्यकर्तृत्वभोक्तृत्वादयो नानाधर्माः पामरैर्यथा ज्ञायेरन् तथैव तेषां बुद्ध्यनुसारं तस्मिन् स्वीकृताः। मननद्वारा सुखादिधर्मेभ्यः पृथक्कृत्य नित्यशुद्धबुद्धविभुस्वरूपस्यात्मन उपदेशो न कृतः।

---

[1] बृहदारण्यकोपनिषद- 2/4/5

सांख्येन तु सुखादिधर्मरहितस्य निर्लेपस्य पलाशपुष्पस्वरूपस्य पुरुषस्योपदेशः कृतः।

एतेन सिद्ध्यति यत् उत्तमाधिकारिणां मध्यमाधिकारिणां च कृते सांख्यशास्त्रम्, किञ्च सर्वपदार्थानुपदिशतापि कणादेन गौतमेन च प्रकृतिमहत्तत्त्वाहंकाराणामुपदेशो नाकारि। किन्तु अहंकारोत्पन्नानि यानि पञ्चतन्मात्राणि तानि कणादेन गौतमेन च परमाणुनाम्ना व्यवह्रियन्ते। सांख्येन तु परमाणुमुपेक्ष्य तानि सूक्ष्माहंकारमहत्तत्वप्रकृतीनां वर्णनमकारीति न्यायवैशेषिकापेक्षया सांख्यस्य वैशिष्ट्यम्।

तदिदं सांख्यशास्त्रं भगवता कपिलेन षट्स्वध्यायेषूपनिबद्धम्। अत्र वदन्ति सम्प्रति प्रचलितानां सांख्यसूत्राणां न कपिलप्रणीतम्- "अविवेकनिमित्तो वा पञ्चशिखः" (सा.सू.6/68) इत्यादौ कपिलादर्वाचीनानां प्राकृताचार्याणामपि नाम उपलम्भात्, किन्तु तानि तु सूत्राणि विज्ञानभिक्षुकृतानीति बहूनां प्रवादः। अत एव शारीरिकभाष्यादौ शङ्कराचार्यादिभिः सांख्यकारिका एव प्रमाणत्वेनोपन्यस्ता न सूत्राणीति। बहोः कालात्कपिलसूत्राणां विनाशत्वमनुमीयत इत्यहो दौर्भाग्यं भारतीयानाम्। महामुनिः कपिलदेवश्च भगवतः चतुर्विंशत्यवतारेष्वन्यतमो अवतारोऽस्ति,

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।

प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्"[1]।

इति श्रीमद्भागवते व्यासदेववचनात्। अत्र "विप्लुतम्" इति पदेन कपिलात् प्रागपि सांख्यशास्त्रमासीत्, किं तु तत् कालेन विलुप्तं बभूव, भगवता कपिलेन च पुनस्तदुद्धारः कृत इति प्रतीयते। भगवान् कपिलः स्वयंभुवमनोर्दौहित्रः कर्दममहर्षेश्च पुत्रः आसीत्। स्वायंभुवमनुश्च चतुर्दशमनुष्वादिमनुरासीत्।

"स्वयंभुवो मनुर्नाम मननीयो मनीषिणाम्।

आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव"[2] इति

तत्र एतेषां दार्शनिकानां मुख्यं लक्ष्यं भवति आत्मसाक्षात्कारः। तद् विषयकं चिन्तनं यद्दर्शनशास्त्रे विद्यते, तद् विषयकम् अन्वेषणमेवानु- सन्धानस्योद्देश्यम्।

सारबोधिनीटीका आचार्यवाचस्पतिमिश्रकृतसांख्यतत्त्वकौमुद्याः टीका विद्यते, तस्याः टीकाकारः पं.शिवनारायणशास्त्री विद्यते, तत्र टीकाकारैः किं मुख्यतत्त्वं प्रतिपादितं चिन्तितञ्च एतत्सर्वमभिलक्ष्य अयं विषयः मया अनुसंधानार्थमुररीकृतः। साङ्ख्यशास्त्रस्य वैशिष्ट्यमभिलक्ष्य तत्र च आचार्यवाचस्पतिमिश्रस्य सांख्यकारिकोपरि तत्त्वकौमुद्याख्या टीका विद्यते, तस्याः अद्यतनसमाजे महद्वैलक्षण्यं विलसति, तत्र तस्य महत्वमभिलक्ष्य तस्योपरि च पं. शिवनारायणशास्त्रिकृतसारबोधिनीटीकायाः सारगर्भितं चिन्तनं च अभिलक्ष्य, अस्मिन् शोधकर्मणि मया प्रवृत्ता। अत्र इदमपि ध्यातव्यं यत् पं बालरामउदासीनेन

---

[1] श्री मद्भागवत्- 1/3/10

[2] रघुवंशमहाकाव्यम्

सांख्यतत्त्वकौमुद्याः या टीका कृता सा अपूर्णा। अत एव तस्य पूर्णत्वं अथ च सांख्यशास्त्रीयतत्त्वानां रहस्योद्घाटनमेव अस्य टीकाग्रन्थस्य प्रणयनस्य प्रयोजनमिति टीकाकारः स्वयमेव उक्तवान्।

अत्र शोधप्रबन्धे षडाध्यायाः सन्ति, षष्ठाध्यायः उपसंहारात्मकः। तत्रादौ भूमिकाभागः वर्तते, अत्र भूमिकायां मया सांख्यशास्त्रस्यैतिह्यं टीकाकर्तुः परिचयः प्रदत्तः। प्रथमाध्याये तावत् दार्शनिकानां प्रमाणस्वरूपं विविच्य सांख्याभिमतं प्रमाणतत्त्वं विवेचितम्। तत्रापि वाचस्पतिमिश्राणां यन्मतं तं पुरस्कृत्य सारबोधिनीटीकाकाराणामभिमतमत्र समीक्षितम् तथाहि- "लक्षणविषये दार्शनिकानां वैमत्याभावेऽपि प्रमाणतत्त्वं प्रमातत्त्वाधीनं भवतीति आदौ प्रमातत्त्वमत्र उपस्थाप्यते। तत्र "मानाधीना मेयसिद्धिः" इति वचसा ज्ञायते यत् प्रमाणमन्तरम्प्रमेयस्य सिद्धिर्नभवतीति आदौ प्रमाणस्य लक्षणं स्वरूपं वक्तव्यम्, तत्रापि प्रमाकरणं प्रमाणमिति प्रमाणः- "असंदिग्धाविपरीतानधिगतविषया चित्तवृत्तिः, बोधश्च पौरुषेयः फलं प्रमा"[1] इति प्रमालक्षणमुक्तं वाचस्पतिमिश्रैः। तत्र व्याख्याने शास्त्रिपादैः यादृशं विशदं विवेचनं विहितं तथा व्याख्यानमन्यत्र व्याख्याग्रन्थेषु न दृश्यते यथा- असंदिग्धः=किंस्विदिति वितर्कात्मकानवधारणज्ञानविषयः 'इदमिदं न वा' इति संशयविषयः इति यावत् संदिग्धः स न भवतीति असंदिग्धः निश्चितः। अविपरीतः स्वरूपाप्रतिष्ठितो मिथ्याज्ञानात्मकविपर्ययज्ञानविषयो,

[1] सां.त.कौ.- 4

विकल्पात्मकज्ञानविषयश्च विपरीतः "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"[1] इति लक्षितविकल्पात्मकज्ञानस्यापि विपर्ययविशेषत्वेन तद्विषयोऽपि विपरीतः इत्यनेन संगृहीतं, शब्दश्च ज्ञानञ्च शब्दज्ञाने, ते अनुपातिनी जनके यस्य स शब्दज्ञानानुपाती श्रोतुः=श्रूयमाणशब्दहेतुकः प्रयोक्तुः पदार्थोपस्थितिहेतुको, बाधनिश्चयेपि कलहादौ नरश्रृंगादिप्रयोगे, उत्प्रेक्षादौ च सर्वानुभवसिद्धः वस्तुशून्यः=बाधितविषयप्रत्ययः नर विषाणं, खपुष्पं चैतन्यं पुरुषस्य स्वरूपम्, इत्याद्याकारा विकल्पाख्या वृत्तिरिति तत्सूत्रार्थाद् इति ध्येयम्) स न भवतीति अविपरीतः। अनधिगतः पूर्वानुभवजन्यसंस्कारमात्रोपस्थापितोऽधिगतः निश्चयात्मकज्ञानविषय इति यावत्, स न भवतीति अनधिगतः=अननुभूतः एवम्भूतः पदार्थो विषयो यस्याः निश्चित्तवृत्तेः सा असंदिग्धा विपरीता नाधिगतविषया चित्तवृत्तिः=इदमेव इत्येवं प्रकारा बुद्धेरध्यवसायाख्या वृत्तिः। "प्रमा" इत्यग्रिमेण संबंधः। "संशय-विपर्यय-विकल्प-स्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सा प्रमा "इत्यर्थः"। इत्यत्र यत् प्रमायाः द्वैविध्यं व्याख्याकर्त्रा प्रतिपादितं, तत्तु सांख्यशास्त्राभिमतमेव, किन्त्वत्र आचार्यैः यादृशः विचारः उपस्थापितः, सः अस्य व्याख्यानस्य वैशिष्ट्यमेव सूचयति।

द्वितीयाध्याये प्रमेयतत्त्वस्य विचारः विद्यते। प्रमेयतत्त्वस्य विवेचनावसरे सांख्याभिमतप्रमेयतत्त्वं परिगणय्य मिश्राणां तट्टीकाकाराणां यन्मतं विद्यते तस्य

[1] यो.सू.- 1/9

समीक्षा अस्मिन् अध्याये कृता। तथाहि सांख्य प्रतिपादित पञ्चविंशतितत्त्वानां प्रतिपादनं व्यक्ताव्यक्त- स्वरूपविचारः, पुरुषस्वरूपविचारः, पुरुषबहुत्वे युक्तिः प्रदर्शनं, तत्त्वानां साधर्म्यं वैधर्म्यं प्रदर्शनं तत्र च मिश्राणां सारबोधिनीकाराणां च मतसमीक्षणम् उपस्थापितम्। तत्र सांख्यतत्त्वप्रतिपादनावसरे कारिकाकारैः पञ्चविंशतितत्त्वानाम् उल्लेखः यथा कृतः तथैव उपस्थाप्यते। तथाहि-

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तः

षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः।।"[1]

अस्या कारिकायाः व्याख्यानावसरे मिश्रपादैः "शास्त्रार्थस्य चतस्रो विधाः कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित् प्रकृतिविकृतिः, कश्चित् अनुभयरूपः"[2], एतत्सर्वं मिश्रस्य मतं विद्यते तम् अभ्युपगत्य सारबोधिनीकारैः एकं महत्वपूर्णव्याख्यानं प्रदर्शितम्। तथा चोच्यते "प्रधानकारणत्वेनाभिमतं यत् तत्त्वान्तरं तस्मिन् प्रधानापेक्षया कश्चिद् अतिशयविशेषोऽभ्युपेयते न वा, नाऽभ्युपेयतेति चेद् न तस्य कारणभावोऽतिशयाभावाद्, नह्यतिशयमन्तरेण कार्यकारणभावः कुत्रापि दृष्टचरः, अभ्युपेयतेऽतिशय इति चेत्, किं रूपोऽसाविति कथनीयः, निर्गुणत्वचेतनत्वापरिणामित्वरूपोऽसाविति चेत्, तथापि न कारणत्वम्, अपरिणामिनः कार्यजनकत्वस्यादृष्टत्वात्, शक्तिरूपोऽतिशय इति चेत्, सापि

[1] सां.का. - 3

[2] सां.त.कौ. - 46

जन्याऽजन्या वा, जन्येति चेत् तदवस्थानावस्था, अजन्येति चेत् सैव शक्तिः प्रकृतिरजोविद्याप्रधानमिति नाममात्रे विवादः"[1]।

"व्यक्ताव्यक्तज्ञविज्ञानात्"[2] इति वाक्यं स्वीकृत्य व्यक्तं चाव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विवेकज्ञानम् इत्यादि मिश्रव्याख्यानम् अभ्युपगत्य शास्त्रिपादैः एकं प्रश्नमुखेन स्वचिन्तनम् उपस्थापितं तथा हि "ननु ज्ञस्य चेतनत्वेनाभ्यर्हितत्वादल्पाच्तरत्वाच्च 'ज्ञाव्यक्तव्यक्तविज्ञानाद्' इति क्रमेण प्रयोक्तव्ये कथं व्यक्ताव्यक्तज्ञविज्ञानादिति विपरीतक्रमः आश्रित इत्याशङ्क्य मननोपयोग्यनुष्ठानक्रममादाय पूर्वनिपातविपरीतक्रमाश्रयणमित्याशयेनाह – 'व्यक्तज्ञानपूर्वकम्' इति, 'स्थूलात्पञ्चतन्मात्रस्य' 'बाह्याभ्यन्तराभ्यां तैश्चाहंकारस्य' 'तेनान्तःकरणस्य' 'ततः प्रकृतेः' इति साङ्ख्यसूत्रोक्त-प्रकारेणोत्तरकार्येण पूर्वपूर्वकारणानुमानं, तयोश्च व्यक्ताव्यक्तयोः 'संहतपरार्थत्वात्पुरुषस्य' इति सूत्राभिहितपारार्थ्यहेतुनाऽसंहत-पुरुषार्थत्वाज्ञानादात्मज्ञानमित्यर्थः"। अनेन क्रमेण पुरुषबहुत्वं सिद्धमिति। तथा च प्राह–

"जन्ममरणकरणानां प्रतिनियमाद्, अयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव"[3]॥

---

[1] सारबांधिनी 46

[2] सां.का. 2

[3] सां.का. 18

पुरुषबहुत्वसाधनावसरे मिश्रपादैः यत् व्याख्यानं प्रदर्शितं तत्र आत्मैक्ये स्वीकारे व्यवस्थायाम् अनुपपत्तिः तद्वारणाय इत्थं प्रतिपादितं यत्- "आत्मैक्ये जननिधनव्यवस्थानुपपत्तिमभिधाय करणव्यवस्थानुपपत्तिमाह 'अन्धादौ च' इति, दर्शनशक्तिविहीनत्वम्, आदिना बाधिर्यादिकं ग्राह्यं, यद्यप्येतदिन्द्रियधर्मः तथापि करणाश्रयसङ्घाताभिमानिने पुरुष उपचर्यत इति ज्ञेयम्"[1] इति यत् प्रस्तुतं तत् सर्वदा नवीनतमं भवति। अन्यच्च अस्य प्रसङ्गस्य बहुचर्चा मया शोधप्रबन्धे उपस्थापिता।

तृतीयाध्याये न्यायप्रतिपादित वादजल्पवितण्डेति कथात्रयेषु वादकथायाः महत्त्वं परिलक्ष्य सांख्यसिद्धान्तानुमतं सत्कार्यवादस्य स्थापनं मया कृतम्। तत्रापि वाचस्पतिमिश्राणां यद्स्वारस्यं तत्र च सारबोधिनीटीकाकाराणां यदभिनवमतं विद्यते तस्य समीक्षणं कृतम्। तथाहि- वादतत्त्वविचारावसरे न्यायाभिमतस्य असत्कार्यवादस्य खण्डनं, सांख्यभिमतसत्कार्यवादस्य स्थापनम्, सत्कार्यवादस्थापने मिश्रमतं विविच्य पं.शिवनारायणशास्त्रीमतचिन्तनाऽस्मिन् प्रबन्धे उपस्थापितम्। तत्र इदं बोध्यं तत्त्ववुभुत्सो कथा वादः इति न्यायमतं अनुसृत्य तद् तद् दार्शनिकाः वादतत्त्वे प्रवर्तिताः सन्ति। यथा कारणतावादः, परमाणुकारणवादः, सत्कार्यवादः, असत्कार्यवादः विर्वतवादः, मायावादः, परिणामवादः, इति इत्यादयः वादाः विद्यन्ते खलु दर्शनशास्त्रे परन्तु तेषां वादतत्त्वानां यथा सामर्थ्यं शोधप्रबन्धे यत्

---

[1] सा.वां.162

किञ्चित् उपस्थाप्य कारणे कार्यस्य सत्त्वं नास्ति अर्थात् कारणेन भिन्नजातीयस्य कार्यस्य उत्पत्तिः भवति इति असत्कार्यवादम् अभ्युपगन्तृणां नैयायिकानां मतं पूर्वपक्षरूपेणोपस्थाप्य सांख्याभिमतः –

"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।

शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्"।[1] इति

सत्कार्यवादः शोधप्रबन्धे मया स्थापितः। तत्र च कारिकायाः व्याख्यानावसरे मिश्रपादैः यत् व्याख्यानं प्रदर्शितं तस्य सारल्येन स्थलविशेष च स्वकीयं चिन्तनं सारबोधिनीकारैः यद् उपस्थापितं तस्योल्लेखः यथामति विहितः मया, तथा हि – "शक्तं कारणं शक्तिसंबद्धमेव शक्यं करोति नासंबद्धम् इति अतः शोभनमभिहितं कारिकाकृता 'शक्तस्य शक्यकरणाद्' इतीत्यर्थः, कारणे तदात्मना वर्तमाना कार्यस्याव्याकृतावस्थारूपाऽनागतावस्थैव कार्यनियामिका शक्तिः, तया संबद्धं कार्यं च शक्यमित्यनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्यासत्त्वमिति तत्त्वम्"।

चतुर्थाऽध्याये तावत् परमाणुतः सृष्टिः, पृथिव्यादितः सृष्टिः, ब्रह्मणः सृष्टिः इत्यादि मतमुपस्थाप्य तत्र सांख्यस्य या दृष्टिः वाचस्पतिमिश्रस्य यत् चिन्तनं सारबोधिनीटीकाकारस्य च यद् वैशिष्ट्यम् एतत्सर्वं विषयं स्वीकृत्य शोधप्रबन्धे मया विचारः कृतः। सृष्टिविषये न्यायवैशेषिकयोः

[1] सां.का. – 9

परमाणुद्व्यणुकादिक्रमेण या स्रष्टिप्रक्रिया विद्यते, तस्य स्वरूपनिर्वचनान्तरं सांख्यकारिकाकारैः

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।

पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।"[1] इति

यद् भाषितं तस्य स्वरूपनिर्वचनपूर्वकं "प्रधानस्य इति कर्मणि षष्ठी, प्रधानस्य सर्वकारणस्य यद् दर्शनं पुरुषेण तदर्थं, तदनेन भोग्यता प्रधानस्य दर्शिता, ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न संभवतीति युक्ताऽस्य भोक्त्रपेक्षा"[2] इति मिश्रपादैः यद् भाषितं तत्र तमेव अर्थं स्वीकृत्य शास्त्रिपादैः टीकायां मूलापेक्षाया 'पद' प्रयोजन पूर्वकं व्याख्यानमुपस्थापितं तथा हि- "कर्तृकर्मणोः सत्त्व एव कर्माणि षष्ठीप्रवृत्तेः कर्तृपदमध्याहरमाणः केन दर्शनमित्याकाङ्क्षितं पूरयति 'पुरुषेण' इति, तदर्थं स्वानुभवार्थं प्रधानेन पुरुषोऽपेक्ष्यत इत्यर्थः, तदेवाह 'तदनेन' इति, तेनानेन पुरुषकर्तृकदर्शन- कर्मविषयत्वकथनेनेत्यर्थः, अस्य प्रधानस्य भोक्त्रपेक्षायुक्तेति सुखाद्यनुभवो हि भोगः, न च सुखाद्यात्मकं प्रधानं स्वमनुभवितुमलं स्वात्मनि क्रियाविरोधादचेतनत्वाच्चातः स्वानुभवार्थं युक्तास्य चेतनापेक्षा 'चिदवसानो भोगः' इति सूत्रादित्यर्थः 'पुरुषस्यापेक्षाम्' पुरुषेण किमर्थं प्रधानमपेक्ष्यत इत्याकाङ्क्षायां पुरुषस्य प्रधानापेक्षां दर्शयतीत्यर्थः"[3]।

---

[1] सां.का. - 21

[2] सां.त.कौ.70

[3] सा. वां. 70

अस्य ग्रन्थस्य इदमपि वैशिष्ट्यं वर्तते यत्

एतेन ज्ञायते यद्यपि पं.शिवनारायणशास्त्रीणाः मिश्रमतम् अभ्युपगतं तथापि प्रधानस्य इत्यत्र कर्तृकर्मणोः सत्त्व एव कर्मणि षष्ठीप्रवृत्तेः कर्तृपदमध्याहृत सन् तत्र केन दर्शनमित्याकाङ्क्षायाः निवारणाय पुरुषेण इति पदप्रयोजनं सारबोधिनीकारैः उपपादितं तत्सर्वथा नूतनम् इति। एवञ्च भोक्त्रपेक्षायुक्तेति मिश्रवाक्यस्य विवेचनावसरे भोग्यस्य किं स्वरूपमिति जिज्ञासायां 'चिदवसानो भोग' इति सूत्रं संगृह्य भोग्यस्य यथार्थस्वरूपं प्रतिपादितम् इदम् अपि एतेषां पं. शिवनारायणशास्त्रीणां नवीनं चिन्तनमिति निश्चप्रचं वक्तुं शक्यते। अनेन क्रमेण सांख्योक्तः यो हि सर्गक्रमः-

"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।

तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि।।"[1] इति

तस्य स्वरूपमपि यथायथम् आचार्यैः उपपादितम्। पञ्चमोऽध्यायः दर्शनान्तरेषु प्रतिपादितं बन्धमोक्षस्वरूपं, तेषां कारणस्वरूपं, तत्र मिश्रपादानां या सम्मतिः टीकाकाराणां या चिन्तनपरम्परा विद्यते, एतत्सर्वं मया शोधप्रबन्धे उपस्थापितम्। मोक्षविषये आत्यान्तिकदुःखनिवृत्तिः मोक्षः इति, अत्र दार्शनिकानां मतविरोधाभावेपि स च दुःखनिवृत्तिः एवञ्च दुःखं तस्य स्वरूपञ्च कथं सम्भवति इत्यत्र अस्ति महान् मतभेदः, न्यायमते एकविंशतिः (षड्ज्ञानं, षड्

---

[1] सां.का. - 22

इन्द्रियं, षड् विषयः, सुखदुःखशरीराणि) दुःखध्वंसात् मोक्षः भवति। मीमांसामते च नित्यसुखाभिमुक्तिः, वेदान्तमते च अज्ञाननाशात् मुक्तिः इति यद् दार्शनिकैः मुक्तिविषये यन्मतम् उपस्थापितं तदतिरिक्तं तत्त्वं सांख्यैः स्वीकृतम्। सांख्यसूत्रकारैः कपिलाचार्यैः "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"[1] एवञ्च "निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम्"[2]। इति आदौ मोक्षविषयं चिन्तनम् उपस्थापितं, तमेव तत्त्वं स्वीकृत्य कारिकाकारैः कारिकारूपेण प्रतिपादितं यत्–

"तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।"[3]

अस्याः कारिकायाः व्याख्यानावसरे मिश्रपादैः इत्थं व्याख्यातम् - "अद्धा 'न' कश्चित्पुरुषो 'बध्यते' 'न' कश्चित् 'संसरति' 'न' कश्चित् 'मुच्यते' इति 'प्रकृतिः' एव तु 'नानाश्रया' इति 'बध्यते' च, 'संसरति' च 'मुच्यते' च"[4]। एवञ्च वस्तुतः टीकाकारैः तत्त्वज्ञानेन विवेकख्यात्यपरपर्यायेण धर्मादिरूपबन्धहेतुभावसप्तकभिन्नेन निजस्वरूपेणावस्थितः मोक्षः इति उद्घोषितः, एतेन ज्ञायते स्थलस्थलविशेषे पं.शिवनारायणशास्त्रीणां नवीनचिन्तनप्रकारं

---

1 सां.सू. 1/1
2 सां.द. 1/86
3 सां.का. 62
4 सां.त.कौ. 219

नवीनव्याख्याकौशलं च दृश्यते, अन्यत् च सर्वं मया शोधप्रबन्धे विचारपूर्वकमुपस्थापनं कृतमित्यलम्।

**इति उपसंहारः**

# संदर्भ-ग्रन्थसूची


1) **अमरकोशः**- अमरसिंह/पं विश्वनाथ, मोतीलाल बनारसीदास दिल्ली, २००७

2) **अष्टाध्यायी**—पाणिनि, मोतीलाल बनारसीदास, दिल्ली, १९६२

3) **ईशादिदशोपनिषद् शङ्करभाष्ययुता**—पं. लक्ष्मणशास्त्री गोविन्दशास्त्री, वाणीविलाससंस्कृतपुस्तकालय, काशी

4) **उपनिषद् १०८ (ज्ञानखण्डः)**—पं. श्रीरामशर्माआचार्यः, संस्कृतसंस्थान-ख्वाजाकुतुब वेदनगरम् बरेली उ.प्र, १९७६, द्वितीय सं.

5) **ऋग्वेदः**—विश्वबन्धु, होशियारपुर विश्वेश्वरानन्द वैदिकशोध संस्थान, १९६५

6) **कठोपनिषद्**—गीताप्रेस, गोरखपुर, सोलहवॉ सं. २०४७

7) **कूर्ममहापुराणम् कृष्णद्वैपायनव्यासविचरितं**—कन्हैयालाल जोशी, परिमल पब्लिकेशन्स, दिल्ली, २००३, प्रथम सं.

8) **गीता**—महर्षिवेदव्यास प्रणीत, गीताप्रेस, गोरखपुर, संवत् २०६६

9) **गौड़पाददर्शन एक आलोचनात्मक अध्ययन**—श्रीमती डा. ज्ञान्तीदेवीसिंहः, विवेकघिल्ड़ियालबन्धुसोनियासिगरा वाराणसी, १९९६

10) **छान्दोग्योपनिषद्भाष्यम्**—शङ्कराचार्यः, गीताप्रेस, गोरखपुर, १९७५

11) **जैमिनीयसूत्रम्**—_श्रीमाध्वाचार्येण,_चौखम्बा_संस्कृत_प्रतिष्ठान,_दिल्ली,_२००५_

12) **तर्कभाषा**—_केशवमिश्रः,_दि.आर._भण्डारकरः,_मुंबई,_१९३७_

13) **तर्कभाषा**- केशवमिश्र/डा॰ श्रीनिवासशास्त्री, साहित्यभण्डार, मेरठ प्रथम सं._१९७२, चतुर्दश संस्करण २०१४

14) **तर्कसंग्रहः**_ (भाष्करोदया)—अन्नभट्ट,_ श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्,_२००१_

15) _**तत्त्वचिन्तामणिः**_ **गङ्गेशनिबद्धः**—नगीनशाह_ मोतीलालबनारसीदास,_ दिल्ली,_ २००५,_प्रथम_सं._

16) **तत्त्वार्थराजवार्तिकम्**—प्रो._ महेन्द्रकुमारजैन_ भारतीय_ज्ञानपीठ,_१९५७,_ द्वितीय_ सं._

17) **तत्त्वार्थसूत्रम्**—गणेशदिगम्बर_वर्णि,_शोध_संस्थान,_वाराणसी_

18) **तत्त्वार्थश्लोकवार्तिकम्**—पं._मनोहरलाल,_सरस्वती_पुस्तक_भंडार,_अहमदाबाद,_ १९१८,_प्रथम_सं._

19) **तन्त्ररहस्यम्**—के.एस.रामास्वामिशास्त्री,_बरोडा,_१९५६_

20) **तन्त्रसिद्धान्तरत्नावली**—पि.एन.पट्टाभिरामशास्त्री,_बनारस,_१९४४_

21) तात्पर्यटीका—अनन्तलालठक्कुरः, दरभङ्गा, १९६७

22) **दर्शन की मूल धारायें**- डा॰ अर्जुन मिश्र, मध्यप्रदेश हिन्दीग्रन्थअकादमी भोपाल, १९९७

23) **नयविवकाः**—एस.के.रामनाथशास्त्री, मद्रास, १९३७

24) **नियमासारप्राभृतः**—दिगम्बरजैन,_त्रिलोकशोधसंस्थान,_हस्तिनापुर,_मेरठ_(उ.प्र),_१९८५,_प्रथम_सं._

25) **नैषधचरितम्**—श्रीहर्षः,_चौखम्बा_सुरभारती,_वाराणसी,_

26) **न्यायकुसुमाञ्जलिः**- उदयनाचार्य, महिला रिसर्च इन्स्टीट्यूट, दरभंगा, १९७२

27) **न्यायदर्शनम्_ (वात्स्यायनभाष्यसहितम्)**—पद्मप्रसादशास्त्री,_ हरिरामशुक्लः,_चौखम्बा_संस्कृत_संस्थानम्,_वाराणसी,_वि.सं._२०४७,_चतुर्थ_सं._

28) **न्यायभाष्यम्**—श्रीनारायणमिश्र,_चौखम्बा_संस्कृत_सीरीज,_वाराणसी,_१९७०_

29) **न्यायमञ्जरी**—सूर्यनारायणशुक्लः,_चौखम्बा_संस्कृत_सीरीज,_बनारस,_१९३४_

30) **न्यायवार्तिकम्**—अनन्तलाल,_दरभंगा,_१९६७_

31) **न्यायसिद्धान्तमुक्तावली**—ज्वाला_प्रसादगौड,_चौखम्बा_प्रकाशन,_वाराणसी_

32) **न्यायसूत्रम्**—महर्षिगौतमः,_चौखम्बा_संस्कृत_संस्थान,_वाराणसी,_२००५_

33) **पातञ्जलयोगदर्शनम्**—स्वामी_हरिहरानन्दआरण्यः,_डा._रामशंकर_भट्टाचार्य,_मो. ला.ब.,_प्रथम_सं._

34) **पातञ्जलयोगदर्शनम्**- व्यासभाष्य-संवलितम्, सुरेशचन्द्र श्रीवास्तव, चौखम्बा सुरभारती प्रकाशन वाराणसी, २००८

35) **पातञ्जलयोगसूत्रम्**- डा॰ रामशंकरभट्टाचार्यः भारतीयविद्याप्रकाशन वाराणसी, १९७९ द्वि.सं.

36) **पुराणोतिहासयो:_ सांख्ययोगदर्शनविमर्श:_** —_ डा._ श्रीकृष्णमणित्रिपाठी,_ सम्पूर्णनन्दसंस्कृतविश्वविद्यालय:,_१९७९,_प्रथम_

37) **प्रकरणपञ्चिका**—शंकराचार्य_अच्युत_ग्रन्थमाला,_कार्यालय,_वि.सं.,_१९९०_

38) **प्रमेयपारिजात:**—म.म._गिरिधरशर्मा_चतुर्वेदी,_ला.ब.शा.रा.सं.वि.क.स.,_२००५,_ द्वितीय_

39) **बुद्धचरितम्**—महन्त_ श्रीरामचन्द्रदासशास्त्री,_ चौखम्बा_ विद्याभवन,_ वाराणसी,_ प्रथम_सं.,_२०१९_

40) **बृहती**—एस.के._रामनाथशास्त्री,_मद्रास,_१९३४_

41) **बृहदारण्यकोपनिषद्**—श्रीमान्_महादेव_चिमणाजी_आप्टे,_आनन्दाश्रम_मुद्रणालये,_ १९५३_

42) **बृहदारण्यकवार्तिकसार:**—श्रीहरिहरकृपालुद्विवेदीविरचितेन_ अच्युतग्रन्थमाला_ कार्यालय,_काशी,_प्रथम_सं._

43) **ब्रह्मवैवर्तपुराणम्**—विनायकगणेशआपटे,_आनन्दाश्रम,_मुद्रणालये,_प्रथम,_१९३५_

44) **ब्रह्मसूत्रम्**—पि.बि._अण्णङ्गराचार्य:,_काञ्ची,_१९३९_

45) **ब्रह्मसूत्रशाङ्करभाष्यम्**- पणशीकरोपाह्वो वासुदेवशर्मा, चौखम्बा विघा भवन वाराणसी, २००८_

46) **भाट्टचितामणि:**—सूर्यनारायणशुक्ल, वनारस, १९३४_

47) **भामती**—अनन्तकृष्णशास्त्री,_मुंबई, १९१७

48) **भारतीय-तत्त्वमीमांसा-** डा॰ हरिप्रसादअधिकारी, नवशक्तिप्रकाशन वाराणसी, २००७

49) **भारतीयदर्शन**—आचार्यबलदेवउपाध्याय:,_ चौ._ आरियन्टालिया_ वाराणसी,_ १९८४,_तृतीय_सं._

50) **भारतीयदर्शन**—बद्रीनाथसिंह:,_वाराणसी,_

51) **भारतीयदर्शनम्**—एस.एन.दासगुप्ता,_मोतीलाल_बनारसीदास,_वाराणसी,_१९९७_

52) **भारतीयदर्शन**—वाचस्पति_गैरोला,_इलाहाबाद,_तृतीय_सं._

53) **भारतीयदर्शन-** डा॰ जगदीशचन्द्र मिश्र, चौखम्भासुरभारती प्रकाशन वाराणसी,_२०१३

54) **भारतीयदर्शन-** डा॰ राधाकृष्ण, राजपाल एण्ड सन्ज दिल्ली, १९६१

55) **भारतीयदर्शनम्-** डा॰ श्रीकान्तपाण्डेय, साहित्यभण्डार मेरठ,_२००८

56) **भारतीयदर्शनस्य_ परिशीलनम्**—डा._ रमाशंकरत्रिपाठी_ भा._ विद्या_ संस्थान_ वाराणसी,_वि.स._ २०५७_प्रथम_सं._

57) **भारतस्य_सांस्कृतिकनिधि:**—संस्कृत_परिषद्_विश्वविद्यालय,_वि.सं._२०२८_

58) **मत्स्यपुराणम्**—रामप्रतापत्रिपाठीशास्त्री,_ पं._ तारिणीश_ झा,_ हिन्दी_ साहित्य_ सम्मेलन,_अलीगढ़,_द्वि.सं._१९८८_

59) **मनुस्मृति:_ (मनु)**—हरगोविन्द_ शास्त्री,_ चौखम्बा_ संस्कृत_ सीरीज,_ ऑफिस,_ वाराणसी,_१९७९_

60) **महाभारतम्**—डा._ श्रीमद्दामोदर_ सातवलेकर_ भरतमुद्रणालय_ जि._ बलसाड,_ १९७१,_प्रथम_सं._

61) **मानमेयोदय:**—सि.कुन्हनराज,_मद्रास,_१९३३_

62) **मानमेयरहस्यश्लोकवार्तिकम्**—एल.श्री_निवासाचार्य:,_मैसूर,_१९२५_

63) **मानवश्रौत्रसूत्रम्**—डां._प्रमोदबालामिश्रा,_नाग_पब्लिशर्स,_२००३_प्रथम_सं._

64) **मीमांसादर्शनम्**—आचार्य:_ श्रीट्टाभिरामशास्त्री,_ श्री_ ला.ब.शा._ केन्द्रिय_ संस्कृत_ विद्यापीठ,_१९८३,_प्रथम_सं._

65) **मीमांसादर्शनम्**- महर्षि जैमिनी/आचार्य श्रीबदरीनाथशुक्ल, तारा प्रिंटिंग वर्क्स वाराणसी २०५३_तमो विक्रमाब्द:_

66) **मीमांसापरिभाषा**—गङ्गाधरमिश्र:_ 'मैथिल'_ चौखम्भा_ ओरियन्टालिया,_ १९८८,_ द्वितीय_सं._

67) **मुण्डक्योपनिषद्**—शंकराचार्य:,_गोरखपुर_गीताप्रेस,_वि.सं._२०३२_

68) **रघुवंशम्**- कालिदास/डा॰ कृष्णमणि त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०१२_

69) **लघुसिद्धान्तकौमुदी**—डॉ_सत्यपाल_सिंह,_शिवालिक_प्रकाशन,_दिल्ली,_२००८,_ प्रथम_सं._

70) **लघुसिद्धान्तकौमुदी**- श्रीधरानन्दशास्त्री, मोतीलाल बनारसीदास दिल्ली, २००३

71) **वायुपुराणम्**—रामप्रतापत्रिपाठी,_ हिन्दी_ साहित्य_ सम्मेलन,_ प्रयाग,_ १९८७,_ द्वितीय_सं._

72) **विद्वत्तोषिणीटीका**—स्वामिश्री_ १०८_ बालरामोदासीन_ भारतीय_ विद्या_ संस्थान_ जगतगंज,_वाराणसी,_१९९१_

73) **विष्णुपुराण**—पं._ थानेशचन्द्र_ उप्रैति,_ परिमल_ पब्लिकेशन,_ दिल्ली,_ २००३,_ द्वितीय_सं._

74) **वेदान्तपरिभाषा**—धर्मराजाध्वरीन्द्रप्रणीत,_ चौखम्बा_ विद्याभवन,_ वाराणसी,_ १९८३,_तृतीय_सं._

75) **वेदान्तप्रबोधः_ जगदगुरुश्रीशङ्कराचार्यः**—स्वमीपरमानन्दभारती,_ वेद._ समिति,_ करनाल,_हरियाणा,_२००६,_द्वितीय_सं._

76) **वेदान्तसारः**—सदानन्दयोगी,_मोतीलाल_बनारसीदासः,_वाराणसी,_१९८२_

77) **वेदान्तसारः**—पं.श्री_ रामगोविन्दशुक्लः,_ भा.वि.प्र.,_ वाराणसी,_ दिल्ली,_ १९९९,_ द्वितीय_सं._

78) **वेदान्तसारः**— सदानन्दयोगीन्द्र/_ डा॰_ सन्तनारायणश्रीवारत्तव्य,_ सुदर्शनप्रकाशन_ गाजियाबाद, २००५

79) **वैशेषिकदर्शन**—_ महर्षिकणाद/प्रेमशंकरआर्यः,_ प्रेमपुस्तकभण्डार_ बिहारीपुर,_ बरेली_१९५९_

80) **शाबरभाष्यम्**—युधिष्ठरो_ मीमांसकः,_ रामकिशनसरोहा,_ बहालगढः,_ हरियाणा,_ १९९०, प्रथम सं._

81) **शास्त्रदीपिका**—धर्मदत्तसूरिः, मुंबई, १९९५_

82) **शांकरवेदान्ते_ ज्ञानमीमांसा**–डा.कालीप्रसादसिंह:,_ बाराणसेय_ संस्कृतसंस्थानम्_ वाराणसी,_१९८३_

83) **श्वेताश्वतरोपनिषद्**–शङ्करभाष्यसहितम्,_गीताप्रेस,_गोरखपुर,_११वॉ_सं._

84) **षड्दर्शनम्**–_स्वामी_जगदीश्वरानन्दसरस्वती,_विजयकुमारगोविन्दराम_हासानन्द:_ नईसडक_दिल्ली–११०००६,२०१०_

85) **षड्दर्शनसमुच्चय:**–डॉ._ महेन्द्रकुमारजैन:,_ भारतीय_ ज्ञानपीठम्,_ २००६,_ ६वॉ_ सं._

86) **षड्दर्शनसूत्रासंग्रह**–_ जे.एल.गुप्त_ चैतन्य,_ चौखम्बासंस्कृतप्रतिष्ठान_ दिल्ली_ २००४_

87) **स्कन्दमहापुराण**–_नागशरणसिंह,_नाग_पब्लिशर्स_जवाहर_नगरदिल्ली,_२अवस,_ १९८२_

88) **स्याद्वादमञ्जरी**–_डा॰_ जगदीशचन्द्र_ जैन,_श्रीपरमश्रुत_प्रभावक_मण्डल,_श्रीमद्_ रामचन्द्र_आश्रम,_अगास_;गुजरातद्ध_१९७९_

89) **सर्वदर्शनसंग्रह:**–उमाशंकरशर्मा,_ चौ._ विद्याभवन,_ वाराणसी,_ १९८४,_ तृतीय_ सं._

90) **सर्वार्थसि(:**–पं._ मूलचन्द्रशास्त्रो,_ भारतीय ज्ञानपीठ,_१९९१,_पॉचवा_सं._

91) **सांख्यकारिका**–ईश्वरकृष्ण:,_ चौखम्भासिरीज, २००४_

92) **सांख्यकारिका**–ब्रजमोहनचतुर्वेदी, नेशनल_पब्लिकेशन हाउस, १९७९, तृतीय सं._

93) **सांख्यकारिका**–डा._रमाशंकरत्रिपाठी,_भदैनी_वाराणसी,_१९७०,_प्रथम_सं._

94) **सांख्यकारिका**–डा.अनिरु(कु._ )जुविमलाकर्णाटका,_ चौ._ ओरियन्टालिया_ वाराणसी,_दिल्ली,_१९८४,_द्वितीय_सं._

95) **सांख्यकारिका**–अशोकदा–संस्कृतव्याख्योपेता,_ डा._ प्रमोद_ कुमार_ शर्मा,_ २००७_

96) **सांख्यकारिका_ गौडपादभाष्यसमन्विता**–म.म._ गुरुप्रसादशास्त्री,_ आचार्य_ सीतारामशास्त्री,_चौखम्बा_सुरभारती_प्रकाशनम्,_वाराणसी,_२००९,_प्रथम ।

97) **सांख्यकारिकामाठरवृत्ति,_ जयमंगलाटीका**–पं._ विष्णुप्रसाद_ शर्मा,_ १९७०,_ द्वितीय_सं._

98) **सांख्यकारिकाटीकानामालोनात्मकमध्ययनम्**–लक्ष्मी_ चन्द्रशास्त्री_ विद्यानिधि_ प्रकाशन,_दिल्ली,_१९९४,_प्रथम_

99) **सांख्यकारिकातत्त्वप्रभाख्या_ युक्तिदीपिका**–डा._ रामशङ्करत्रिपाठी,_ कृष्णदास_ अकादमी,_वाराणसी,_वि.सं._२०३९,_द्वितीय_

100) **सांख्यकारिका**–_ गौडपादभाष्यसमन्विता_ 'अभिनव_ राजलक्ष्मी_ टीका,_ म.म.श्री_ गुरुप्रसादशास्त्री,_ आचार्य_ श्रीसीतारामशास्त्री,_ प्रो._ बालशास्त्री,_ चौखम्बा_ सुरभारती_प्रकाशन,_वाराणसी २००९_

101) **सांख्यकारिका**–_ डा._ सुधंशु_ कुमार_ पड़षङ्गी,_ चौखम्बा_ सुरभारती_ प्रकाशन_ वाराणसी,_ २०१३_

102) **सांख्यतत्त्वकौमुदी**–रामशंकरभट्टाचार्य:, मोतीलाल बनारसीदास दिल्ली, वाराणसी, पटना, बंगलौर, मद्रास, १९६७ प्रथम सं.

103) **सांख्यतत्त्वकौमुदी**—पं. ज्वालाप्रसादगौड:, चौ. सुरभारती वाराणसी, १९९२, प्रथम सं.

104) **सांख्यतत्त्वकौमुदी**— डा॰ ओमप्रकाश पाण्डेय, चौखम्बा सरस्वती भवन, वाराणसी, १९८१

105) **सांख्यतत्त्वकौमुदी**— डा॰ गजाननशास्त्री मुसलगाँवकर, चौखम्बा संसकृत संस्थान वाराणसी, २००८

106) **सांख्यतत्त्वकौमुदीविभूषिता विद्वत्तोषणीव्याख्यातत्कृतटिप्पणीभ्यां समलङ्कृतया**— श्रीबालरामोदसीन:, श्रीराममुद्रण्यन्त्रालये मुद्रयित्वा प्रकाशिता सं. १९८७, शक १८५२

107) **सांख्यतत्त्वमनोरमा**—डा. दीनानाथपाण्डेय:, मनोरमा प्रकाशन, के. ५५/९५ राजापुरा वाराणसी, १९९१ प्रथम सं.

108) **सांख्यदर्शनम्**—खेमराजश्रीकृष्णदास:, 'श्रीवेंकटेश्वर' स्टीमप्रेस बम्बई, सं. २०१३ शंक १८७८

109) **सांख्यदर्शनम्**—गजाननशास्त्रीमुसलगाँवकर:, चौ. संस्कृतसंस्थान, सं. २०४४, द्वितीय सं.

110) **सांख्यदर्शनम्**—रामशंकरभट्टाचार्य:, भारतीयविद्याप्रकाशन वाराणसी, दिल्ली, १९९४, तृ.सं.

111) **सांख्यदर्शनम्**—डा. गजाननशास्त्री मुसलगाँवकर:, चौ.सं. संस्थान, सं.२०४४, प्रथम सं. २३.

112) **सांख्यदर्शनम्**—जनार्दनशास्त्रीपाण्डेय:, वाराणसी

113) **सांख्यप्रवचनभाष्यम्**–विज्ञानभिक्षुः,_मोतीलालबनारसीदास,_वाराणसी,_१९८९_

114) **सांख्ययोगकोशः**–आचार्यकेदारनाथत्रिपाठी,_ काशीहिन्दूविश्वविद्यालयः_ वाराणसी,_१९७४,_प्रथम_सं._

115) **सांख्ययोगदर्शनम्**–डा._ उमेशमिश्रः,_ सर_ पी.सी._ बनर्जीरोड,_ इलाहाबाद,_ १९५८,_प्रथम_सं._

116) **सांख्यसंग्रह**–ए.ए.विध्येश्वरीप्रसादद्विवेदी,_ चौ.स.सीरीज_ वाराणसी,_ १९६९_ द्वितीय_सं._

117) **सांख्यसूत्राम्**–कपिलः,_मोतीलालबनारसीदासः,_वाराणसी,_१९८९_

118) **सांख्यसूत्राम्**–रामशंकरः,_ भारतीयविद्याप्रकाशन_ वाराणसी,_ दिल्ली,_ १९७६_ द्वितीय_सं._

119) **सांख्यसुध**–_डा॰_महेशप्रसादसिलोड़ी,_मान्यता_प्रकाशन_६०–ब_मायाकुञ्ज,_ मायापुरी_नई_दिल्ली–_११००६४,२००९_

120) **सारबोध्नि_टीका'**–_पं_ शिवनारायणशास्त्राी,_ निर्णयसागर_मुद्रणालय,_मुम्बई_ १९४०_

121) **सिद्धान्तकौमुदी**–बालमनोरमाटीका,_ चौखम्बासंस्कृतसंस्थान,_वाराणसी,_२०१६,_ वि.सं._

122) **संस्कृत–धतु–कोशः**–_ युधिष्ठिर_ मीमांसक,_ रामलाल_ कपूर_ ट्रस्ट_ रेवली,_ सोनीपत–३९_;हरियाणाद्ध_२००९

123) **संस्कृत–शास्त्रा–मञ्जूषा**–_ डा._ उदयशंकर, चौखम्बासुरभारतीप्रकाशन_ वाराणसी, २०१२

124) **श्रीमद्देवीभागवतम्**—श्रीमन्महर्षि_कृष्णद्वैपायनव्यासविरचितम्,_कलकत्ता_१९६१,_प्रथम_सं._

125) **श्रीमद्भगवद्गीता**—शंकराचार्य:,_गीताप्रेस,_गोरखपुर,_२००८,_वि.सं._

&&&&&&&&&

**हिन्दी_सन्दर्भ—ग्रन्थसूचि**

1) _**ऋग्वेद_ में_ दार्शनिक_ तत्त्व**–डा._ गणेशदत्त_ शर्मा,_ उर्मिला_ प्रकाशन,_ साहिबाबाद_(उ.प्र.),_२००६,_द्वितीय_सं._

2) _**कथा_सरित_सागर**–महाकवि_श्रीसोमदेवभट्टे,_मोतीलाल_बनारसीदास,_दिल्ली,_ १९७०_

3) _**भारतीय_दर्शन_की_रूपरेखा**–डा._हिरियन्ना,_राजकमल_प्रकाशन,_दिल्ली_

4) _**भारतीय_दर्शन_शास्त्र_का_इतिहास**–डा._जयदेव_वेदालंकार,_न्यूभारतीय_बुक_ कापारेशन_दिल्ली,_२००२,_प्रथम_सं._

5) _**भारतीयदर्शन_ के_ प्रमुख_ सिद्धान्त**–डा._ नारायणसिन्हा,_ श्रीरामकृष्ण_ पुस्तकालय,______विवेकानन्द_रोड,_वाराणसी_

6) _**सांख्यदर्शन_ का_ इतिहास**–डा._ मंगलदेवशास्त्री,_ वैदिक_ स्वाध्यायमन्दिर_ बनारस_छावनी,_प्रथम_सं._

7) _**सांख्यदर्शन_ का_ इतिहास**–पं._ उदयवीरशास्त्री,_ विरजानन्द_ वैदिकसंस्थान,___ गाजियाबाद,_प्रथम_सं.__

8) _**सांख्ययोगदर्शन_ का_ जीर्णोद्धार**–हरीशंकरजोशी,_ चौ._ विद्याभवन,_ वाराणसी_ सं.__२०२२_प्रथम_सं.

9) _**सांख्यसिद्धान्त**_–उदयवीरशास्त्री_विजयकुमार_गोविन्दराम_हासानन्द, २०००ई.

10) **संस्कृत–हिन्दी_ कोश**–_ वामन_ शिवराम_ आप्टे,_ न्यू_ भारतीय_ बुक_ कॉरपोरेशन_ दिल्ली,_ २००६

11) **संस्कृत_ साहित्य_ का_ इतिहास**–_ डा॰_ उमाशघङ्कर_ शर्मा_षि,_ चौखम्बा_ भारती_ अकादमी_ वाराणसी,_ २०१०

